विनोष्टीनां सुमन्द्रतन्त्रत्वम् ।१२ आगूःप्रणववषट्काराणां सर्वत्र उच्चैर्भावोक्तिः । १३ आग्रयणेष्टौ आग्नेन्द्रस्य ऐन्द्राग्नस्य वा प्रथमस्य हविष उच्चैर्भावकथनम् । १४ उच्चविहितस्य पुरोऽनुवाक्याप्रणवस्य प्राणसन्ततत्वम् ।१५ याज्याया आगूर्वषट्कारयोः प्राणसन्ततत्वम् ।१६ उपांशोस्तन्त्रस्वराणाम् उच्चत्वम् । १७ उपांशुतन्त्राणां तानि उच्चानि मन्द्रस्वराणि भवन्तीत्युक्तिः । २अ०१५क० । १ प्रातर्वैश्वदेव्यां प्रोषितस्याग्निमन्थनीयानुवचनाभिहिङ्कृतिकरणे । २ संप्रैषश्रवणपर्यन्तं पूर्वस्मिन्नवसाने आरामो नोत्तरादानम् । ३ मध्ये ऽवसाने यत्रारामविधिः तत्राप्यासम्प्रैषान्नोत्तरारम्भः । ४ मथ्यमानोऽग्निश्चेन्न जायते तदाऽग्ने राजन्वनः पुनः पुनः स्वसे हंसीति ऋक्तावापनम् । ५ अग्निजन्मश्रवणानन्तरम् उक्तसूक्तीयप्रणवेन शिष्टार्धर्चोपसन्तननम् । ६ अनावापपक्षे जातश्रवणानन्तरं शिष्टेनार्द्धर्चेन उत्तराया ऋच उपसन्तननम् । ७ यज्ञेनेत्यनया ऋचा समापनम् । ८ सर्वत्र पश्वादिषु उत्तमाया ऋचः समापनीयत्वम् । ९ बर्हिरग्न इति प्रयाजानन्तरं प्रयाजान्तरादीनामावपनम् १० देवताष्टकोल्लेखः मरुतां स्वतवस्त्वेति गुणकथनञ्च । ११ प्रकरणपठितानां निर्गुणानां मरुतां धाय्याद्वयकथनम् । १२ अनुयाजानां देयकथनम् । १३ अनुयाजाद्यन्तमे काले वाजिभ्यो यागः । १४ अनुजानुनाऽनवानयाज्याप्रयोगः । १५ यत्र क्वच विषये एकस्मिन्नेवाध्वर्युसंप्रैषे तुल्यरूपयोरतुल्यरूपयोर्द्वयोर्वषट्कारयोः समवयोर्द्विरनुमन्त्रणम् ।१६ याज्याधर्मस्य इतरेषु अनुवषट्कारादिषु आगुरः प्रतिषेधः ।१७ इष्टमिष्टं वाजिनम् इडामिव भक्षार्थं अञ्जलौ निधाय उपहवयाचनम् ।१८ अध्वर्युब्रह्माग्नीध्राणां समीपे उपहवयाचनम्। १९ उक्तवाजिनस्य किञ्चिदादाय-एतोक्तमन्त्रेणावघ्राणम्। २० होतृभक्षणानन्तरम् अध्वर्युब्रह्माग्नीध्राणां क्रमेण वाजिनभक्षणम् । २१ यजमानादितरेषां सर्वेषां दीक्षितानां गृहपतेरन्ये यास्य प्रत्यक्षमेव तद्भक्षणम् । २२ वैश्वदेवीष्टिदिवसादपरस्मिन् दिने पौर्णमासेनेष्टा तदानीमेव वक्ष्यमाणानां चातुर्मास्यव्रतानां केशनिवर्त्तनमध्वादिवर्जनरूपाणाम् आचरणारम्भः । २३ केशनिवर्त्तनम् । २४ मांसवापनाधःशय्ये कार्ये मधुमांसलवणस्त्र्यवलेखनानि वर्जनीयानि। २५ कालविशेषे प्रतिषिद्धस्य प्रतिप्रसवार्थम् ऋतौ भार्योपगमनविधानम् । २६ उत्तरविवक्षार्थानुवादरूपं सर्वपर्वसु वापनम् । २७ आद्योत्तमयोर्वा पर्वणोर्वापनं न मध्यमयोरिति । २अ०१६क०।१ प्रकृतवैश्वदेवेष्टिकायां पौर्णमासीमारभ्य पञ्चम्यां पौर्णमास्यां वरुणप्रघासैर्यागविधानम् । २ प्रणीयमानस्याग्नेः पश्चादुपविश्य प्रोषितस्याग्निप्रणयनीया प्रतिपत्तिः । ३ आसीनस्य सप्रणवायाः प्रथमाया उपांश्वनुवचनम् । ४ उपांशुस्वरस्थानां स्वरान्तरस्थानसङ्क्रमणे प्रणवेनावसाय अनुक्तस्य उत्तरस्या ऋच आरम्भः । ५ उक्तावसानानुच्चारपूर्वकम् उत्तरारम्भस्य प्राणसन्ततभावित्वम् । ६ प्रणीयमानयोर्द्वयोरुत्तरमग्निमनुव्रजत उत्तरासामृचामनुवचनम् । ७ राजन्यवैश्ययोराद्ये ऋचौ । ८ उत्तरस्या वेदेः पश्चादवस्थाय शेषसमापनम् । ९ सोमेषु उत्तरवेदेः पश्चादवस्थाय समापनम् । १० यस्मिन्नेवासने पूर्वोक्तमनुवचनमारब्धं तस्मिन्नुपविश्य व्याहृतित्रयरूपवाग्विसर्जनम् । ११ अन्यत्रापि अनुवचनानुव्रजनयोर्वाग्विसर्गः । १२ तिष्ठतः संप्रैषेषु तिष्ठत एव वाग्विसर्गः । १३ वैश्वदेव्या समानाऽग्निमन्थना नाम इष्टिः । १४ मध्यादीनां तिसृणां हविषाम् ऐन्द्राग्नप्रादीनां कर्त्तव्यत्वम् । १५ तत्सूक्तगतमन्त्रस्य उपहवयाचने तृतीयत्वम् । भक्षणे चतुर्थत्वम् । उपहवयाजनभक्षणयोश्च विशेषकथनम् । वैश्वदेव्यामपि एवम्भावश्च। १६ इष्टौ संस्थितायामवभृतकर्म्मनिमित्तं अध्वर्यूणाम् उदकदेशगमनम् । १७ अवभृथस्यामित्यत्वत्र इष्ट्यभावेऽन्येषामपि अव-धानादीनां सम्भवश्च । १८ चातुर्मास्याङ्गत्वेन द्वयोर्मासयोरैन्द्राग्ननामकपश्वन्तरविधानम् । २अ० १८क० ।

१ वरुणप्रघासेभ्यः परम् ऐन्द्राग्नवत्पूर्वं अनीकवदाद्यादित्यान्तकर्म्मरूपाणां साकमेधानां यजनम् । २ साकमेधीयपौर्णमास्याः पूर्वेद्युः सवने सवने एकैका इष्टिः । ३ उक्तानुसवनीयानामिष्टीनां प्रथमायामनीकवान् अग्निः एतदुत्तरस्यां इधम्यन्तो, मरुतः सान्तपनाः तदुत्तरा आज्यभागप्रभृतीडान्ता इष्टिः । ४ गृहमेधिभ्यो मरुद्भ्यो देवताभ्य आम्नातयोश्च चोल्लेखः । ५ पुष्टिमतोर्विराजयोर्निगदरहितसंयाज्यात्वम् । ६ गृहमेधीयादन्यत्रापि आवाहनरहिते स्थले अनिगदयोः संयाज्ययोः सम्भवः । ७ पित्र्यायां पशौ चेतोऽष्टिवेद आवाहने सत्यपि अनिगदं संयाज्याद्वयम् ।। ८ समापितेष्टिकायां रात्रौ बहूनां याज्ञिकानाम् अन्नदानम् । ९ रात्रेः पश्चाद्भागे पौर्णदर्वनामकस्य होमकर्म्मणः कर्त्तव्यत्वम् । १० वृषभरवे श्रूयमाणे उक्तहोमकालः । ११ मेघध्वनौ श्रूयमाणे तद्धोमकालः । १२ तस्योक्तद्वयस्याप्यभावे मध्यपलमध्ये गाम्नीभं सम्बोध्य केचित् रवमावर्त्तनम् ।

१३पूर्वार्द्धर्चीयादिमन्त्रयोरध्वर्युणा होतृप्रेरणे याज्यानुवाक्यात्वम् । १४ क्रीडिभ्यो मरुद्भ्य उत्तरा इष्टिः । १५ क्रीडिनां मरुतां परोक्षवाक्त्वमावाज्यभागौ । १६ अक्रीडिनां मरुतां याज्यानुवाक्ये । १७ माहेन्द्री इष्टिः । १८ माहेन्द्र्यामिष्टौ अष्टदेवतोक्तिः । १९ माहेन्द्र्यां याज्याकथनम् । १९ सू० २ अ० १८ क० । १ दक्षिणाग्नेरग्निमानीय तमन्यत्र स्थापयित्वा तत्र पितृयज्ञाख्यकर्मकरणम् । २ पितृयज्ञाया इष्टेर्लुप्तजपानुमन्त्रणादित्वम् । ३तस्यां पितृयज्ञायामिष्टौ कर्मणां प्राङ्मुखत्वम् । ४ अन्यस्यामिष्टौ दक्षिणामुखत्वम् । ५ इतरदिङ्मुखानि प्रकृतौ यथान्वयं करणीयानि । ६ अनुक्रमणता उपनस्वेतस्या ऋचस्त्रिरनुवचनं तत्र च तासामेव सामिधेनीनां न पुनरभ्यासः । ७ तासां सामिधेनीनामुत्तमेन प्रणवेन प्रतिपत्तिः । ८ आज्यपान्तदेवतावाहनानन्तरं प्राकृतात् स्विष्टकृतावाहनात् परं कव्यवाहनाख्याग्निसमावाहनम् । ९ उत्तमे च प्रयाजे आज्यपेभ्यः पूर्वं कव्यवाहनाख्याग्निनिगमनम् । १०सूक्तवाके विशेषोल्लेखः । ११कार्यार्थमन्त्रलोपेऽपि कार्यलोपप्राप्तौ कार्यस्य लोपप्रतिषेधः । १२पितृयज्ञायामिष्टौ अवान्तरेडाभक्षणेडाभक्षणयोरभावः । १३ इडाभक्षणे मार्जनाभावः । १४ सूक्तवाके यजमाननामादेशाभावः । १५ ईक्षितः सीद होतरिति वोक्तस्योपवेशनम् । १६सव्योपर्युपस्थानां प्राचीनावीतिनां हविर्भिर्जीवासुमदुच्चारणम् । १७ पितृयज्ञायामाग्नीध्रस्य दक्षिणत्वम् अध्वर्योरुत्तरत्वम्, अनुवाक्याद्वयम्, अध्यर्द्धायामनवानम् । १८आश्रावणप्रत्याश्रावणसम्प्रैष ओँ स्वधेत्यादीनां दीर्घान्तानां प्रयोक्तव्यत्वम् । २०स्तुतीनां नित्यत्वव्यवस्थापनम् । २१ पितृणां सोमवत्ता सोमस्य पितृमत्ता बर्हिषदः अग्निष्वात्ताचेतित्रिगुणोक्तिः । २२पञ्चानां पितॄणां तिसृणां ऋच इत्युक्तिः । २३ वैवस्वतस्य चेद्देवतात्वं तदा उत्तमे त्रिके मध्यमाया याज्यात्वं प्रथमोत्तरयोरनुवाक्यात्वम् । २४ स्विष्टकृतो याज्योक्तिः । २५ स्विष्टकृतोऽग्नेः कव्यवाहनसंज्ञा । २६ स्विष्टकृत ऊहे प्रकृतिभावः । २७ मन्त्रलोपादिभिन्नानां सव्योपर्युपस्थतादीनामभावाय प्रकृतिभावविधानम् । २८ प्रकृतिभावादेवानुवाक्याया एकत्वम् । २९ वषट्कारक्रियायामेव संयाज्याद्वयम् । ३० विशेषनियमार्थं दक्षिणावृतो दक्षिणाग्नेरुपस्थानम् । ३१पितृयज्ञामिष्टौ आवर्त्तनविरहेणोपस्थानम् । ३२दक्षिणाग्नेरुपस्थानमन्त्रः । ३३गार्हपत्याहवनीययोरुपस्थानम् ।

३४ आहवनीयोपस्थानमन्त्रः । ३५ तन्मन्त्र इत्येकयर्चा गार्हपत्योपस्थानम् ।३६प्राग्दक्षिणयेन गार्हपत्यमभितः समागमने मन्त्रः । ३७गार्हपत्यानन्तरं सव्यावृद्भिस्त्र्यम्बकरूपकर्मभेदार्थगमनम् । ३८अध्वर्यूक्तस्य यजमानैरपि कर्त्तव्यत्वम् । ३९ प्रत्येत्य अदितिदेवताकया ऋचा चरणम् । ४०पुष्टिमत्यौ धाय्ये विराजौ । ४० सू० २ अ० १९ क० । १ साकमेधकालमारभ्य पञ्चम्यां पौर्णमास्यां शुनासीरीया नामेष्टिः । २ पञ्चम्याः पौर्णमास्या अर्वागपि वा शुनासीरीयारम्भः । ३ नियुत्वानिति वायोर्गुणः शुनासीरीयः शुनयेति इन्द्रस्य गुण इत्युक्तिः । ४एतत्प्रकरणगतानां शाखान्तरीयाणाञ्च देवतानां एतत्प्रकरणाम्नाता एव याज्यानुवाक्या इत्युक्तिः । ५ज्योतिष्टोमप्रकृतिकौ चातुर्मास्याङ्गभूतौ पशुसोमौ ताभ्यां शक्तिभेदेन व्यवस्थिताभ्यां यागः । ६ चातुर्मास्यानां समाप्तौ पुनरभ्यासः ६ सू० २ अ० २० क० ।

३अध्याये पशुकर्माधिकारः । १प्रायश्चित्तात् पूर्वं पशुगुणकं कर्म । २पशोरुभयतोऽन्यतरतो वा इष्टिकरणम् । ३ पशुयागसम्बन्धिन्या इष्टेरग्निर्दैवत्यधिकल्पः । ४ पशुयागसम्बन्धिन्या इष्टेः करणपक्षे देवताविकल्पः । ५ एकस्मिन् पशुप्रयोगे आग्नेयी चाग्नावैष्णवी चेति इष्टिद्वयम् । ६ उभयेष्टिकरणपक्षे एकस्याः पुरस्तात् अपरस्या उपरिष्टात् कर्त्तव्यत्वम् । ७ सविधिकस्य वारुणप्राघासिकस्योक्तस्याग्निप्रणयनस्य पुनरुल्लेखः । ८ पशुबन्धयागसम्बन्धिन्या वेदेः पश्चादुपविष्टस्यानुवचनार्थं प्रेषितस्य यूपमज्यमानमभिधातुम् ऋग्विशेषानुवचनम् । ९ अज्यमानयूपानुवचनपरिधानयोर्मन्त्रभेदौ । १० सपशुकयूपबहुत्वे एकपशुतन्त्रके कर्मणि अन्त्ययूपानुवचनं परिधायान्त्ययूपसंस्तवनञ्च । ११प्रथमोत्तमयोरनभ्यासविधानम् । १२ पशुदेवताभ्योऽनन्तरं वनस्पत्यावाहनम् । १३ संमार्गैः संमार्जनानन्तरं प्रहृताहुतिभिर्होमः । सकृदुपहरणपूर्वकैकाहुतिहवनानन्तरं पुनः सकृदुपहरणपूर्वकपश्चाहुतिहोमः, मन्त्रविपर्हणञ्च । १५ सौम्ये एवाहनि पूर्वोक्तहोमः । १६ तीर्थेनैव लब्धविहारप्रपदनाय प्रशास्त्रे समन्त्रकदण्डदानम् । १७ प्रशास्तुर्दक्षिणोत्तराभ्यां पाणिभ्यां समन्त्रकदण्डप्रतिग्रहणम् । १८ यावत् प्रैषवचनं नास्ति तावत् उक्तेन दण्डेन स्वपरयोः संस्पर्शननिषेधनियमः । १९ उपद्रुतानाकर्म्येषामपि यज्ञाङ्गानां विहारेण व्यवायनिषेधः ।

२०प्रेषितस्य मैत्रावरुणस्य प्रैषानुवचनप्रकारः । २१मैत्रावरुणस्यानुवाक्यानुवचनम् । २२मैत्रावरुणस्य पर्य्यग्नि स्रोकमनीयतोऽनीमानसूक्तपाठ । २३आसीनेनैव मैत्रावरुणस्य सोमाधिकरणकर्मान्तरस्य करणम् ।२१सू०३अ० १क० । १ पशुयागे एकादशप्रयाजनियमः । २ तत्र तेषां प्रयाजानां प्रैषा अपि एकादशसंख्याः । ३ प्रकृताद्युक्तमप्राकृतेष्वपि प्रैषेषु स्यादित्येवमर्थं पूर्वोक्तस्य प्रैषसूक्तस्य पुनरुपदेशः । ४अध्वर्य्युप्रैषस्य होतुरनाकाङ्क्षणीयत्वम् । ५ प्रैषलिङ्गाभिराप्रीभिर्होतृयजनम् । ६ शुनकानां, वसिष्ठानां, सर्वेषाञ्चाप्रीसूक्तभेदकथनम् । ७ ऋषिनामधेयस्यानुगुणानामाप्रीणां ग्राह्यत्वम् । ८ प्राजापत्ये तु वसिष्ठशुनकसहितानां सर्वासामाप्रीणां जामदग्न्यत्वम् । ९ दशसु सूक्तेषु प्रेषितस्य मैत्रावरुणस्य प्रैषवचनम् । १० उक्तप्रैषवचनस्य होतुरन्तर्वेदि दण्डनिधानम् । ११ अध्रिगुशब्दवाच्ये दैव्याः शमितार इत्यादिके मन्त्रेऽङ्गादि शब्दानामूहः । १२स्त्रीपुंसयोः समाहारे पुंलिङ्गेनैवोहः । १३स्त्रीदेवतायामभिधेयायां मेधपतिशब्दस्य पुंवद्वचनम् । १४ स्त्रीपशौ मेधशब्दस्य पुंवद्वा स्त्रीवद्वा वचनविकल्पः । १५अध्रिगोरूर्द्ध्वम् अङ्गादिशब्दानामितरेषाञ्चोहनं, स्त्रीपुंसमाहारेषु सर्व्वत्र पुंवदेवाभिधानञ्च । १६न केवलमस्योहविधेः पशुकर्मार्थत्वं किन्तर्हि सर्वेषु यजुःषु निगदेषु चार्थवशेन कार्य्यत्वम् । १७प्रकृतौ समर्थनिगमेषूहनम् ।१८मन्त्रगतानां शब्दानां प्राकृतत्वेन ऊहनम् । १९प्रतिनिधिष्वपि प्राकृतानां शब्दानामूहनम् । २० उपमार्थानां श्येनादीनां शब्दानामूहनम् । २० सू० ३अ०२क० । १ अध्रिगुनामकमन्त्रविशेषकथनं तत्रस्थानां पदानामूहश्च । २अस्नेत्यादीनां त्रयाणां शब्दानां स्वे स्वे स्थाने उपांशुप्रयोक्तव्यत्वम् । ३षट्‌विंशतिशब्दस्याभ्यासनियमः । ४मन्त्रविशेषजपानन्तरं विहारादावृत्य दक्षिणावृत्त आवर्त्तनम् पृष्ठतः कृत्वा आसनञ्च । ५ मैत्रावरुणस्यावृत्य पृष्ठतः करणम् । ६पुनरावर्त्तनकाले पराचामेवासनम् ६सू०२अ० ३क० । १वपायां श्रप्यमाणायां तत्संस्कारार्थं प्रेषितस्य स्तोकेभ्योऽनुवचनम् । २स्वाहाकृत्यर्थं स्रुगादापनस्य कर्त्तव्यत्वम् । ३ उत्तमा आप्रीयाज्या । ४ वपा पुरोडाशो हविरिति पशोर्यागाः । ५ नानादैवतेषु पशुषु याज्यानुवाक्याभेदादेव वपायागवत् पृथग्भावः । ६ प्रतिपशु मनोतामन्त्रस्यावर्त्तनम् । ७एकेषां मते मनोताया अनावर्त्तनम् । ८ उक्तप्रदानगतप्रैषाणां समानलिङ्गत्वोक्तिः । ९ प्रदानप्रैषेषु विकृतिषु च या देवतास्तासामेकैकस्या देवताया अग्नीषोमस्थाने निर्द्दिश्य यष्टव्यत्वम् । १० गोमेषहयानामेकैकस्या जातेर्द्वयोर्द्वयोः शब्दयोर्नियमनस्य वैकल्पिकत्वम् । ११ वनस्पतिस्विष्टकृत्सूक्तवाकप्रैषेषु प्रदानप्रैषीयप्रयोगवत् प्रयोगः । १२ सूक्तवाकप्रैषेषु पुरोडाशेन पशुदेवतावर्ज्जनम् । १३ हविषां नानारूपत्वात् स्वेन स्वेनैव शब्देन निगमने प्राप्ते पुरोडाशशब्देनैव चर्वादीनां निगमनविधानम् । १४मेधोरभीयानित्ये तयोः पदयोः पश्वभिधायकत्वम् । १५आम्नायसिद्धानां द्विवचनान्तानाम् एकवचनबहुवचनयोरिष्टत्वकारपरिग्रहार्थं पाठविशेषः १५सू० ३अ० ४क० । १वपाहोमानन्तरं सब्रह्मकानां बहृचानां सर्व्वेषां सह मार्ज्जनम् । २इदमापः इत्यनयर्चा यजुषा च उभाभ्यां मार्ज्जनम् । ३ प्रत्यङ्गभूतायामिष्टौ आतिदेशिकमार्ज्जनस्य प्रत्यर्थप्रशौ मार्ज्जनस्य एतावत्त्वोक्तिः । ४ पुरोडाशश्रपणपर्य्यन्तं तीर्थेन निष्क्रम्यासनविधिः । ५ प्रधानस्विष्टकृतोर्भेदप्रतिपत्त्यर्थं प्रधानेन चरित्वा स्विष्टकृता चरणविधिः । ६ स्विष्टकृच्चरणावसरे आगन्तुकैर्योगैरपि पशुपुरोडाशस्विष्टकृतां चरणम् ।७अन्वायत्तदेवतानां हविषां चावाहनादिषु निगमेषु अनुवृत्त्यभावः ।९पुरोडाशानामिति हविर्भेदे प्रैषस्योह्यत्वम् ।१०इडाया ऊर्द्ध्वम् उक्तप्रैषस्योह्यता १०सू० ३अ०४क०। १इडोपधानानन्तरं मनोतानुचरणम् ।२हविषा चरणम् प्रैषाणां तत्सलिङ्गत्वञ्च । ३हविःप्रैषे कतर एवाग्नीषोमावेवेत्यत्र ऐतरेयाणां सम्मतिः । ४ द्विदेवतादन्यत्र एकदैवते बहुदेवते पशौ मैत्रावरुणयोर्देवतात्वम् । ५एकदैवतेषु बहुदैवतेषु च प्रैषेषु तथादृष्टत्वम् । ६ प्रकृतिभावे गाणगारिमतोल्लेखः । ७ अर्थभेदरहिते आम्नाये विकारस्य निरर्थकत्वम् । ८वपाहोमे कृते अर्द्धर्चयोर्मध्ये आज्यायाः समापनम् । ९ प्रैषसमाम्नायपठितं वनस्पतिप्रैषमभितो ये ऋचौ तयोर्वनस्पतियाज्यानुवाक्यात्वम् । १० आज्यभागयोः करणे प्रैषे प्रधानदेवताङ्गदेवतयोर्निगमनम् । ११ स्विष्टकृति इडोपह्वानानन्तरम् अनुयाजचरणम् । १२ उक्तस्थलेऽनुयाजानामेकादशसङ्ख्याविधानम् । १३प्रकृतिभ्योऽन्यासां वैश्वदेव्यानामावर्त्तव्यत्वम् । १४प्रैषाधिकारनिवृत्त्यर्थम् अनवानशब्दस्य पुनरावृत्तिः । १५ पुनरनवानस्य व्याख्यानार्थोल्लेखः । १६ सूक्तवाकप्रैषे आज्यभागयोर्ग्रहणम् । १७पशुतन्त्रे पदत्रयस्याभ्यासत्वाभावाय पठितस्यापि पुनरभ्यासः । १८ देवताना-

मेकजातीयपशुकत्वकथनम् । १९ पशुगच्छानामेवावसेन नाम्ययोर्दैवयोः ।२० उत्तरे पूर्वेणोक्तस्योक्तेः । २१अन-वभृथे कर्माणि सूक्तवाकप्रैषसमापनानन्तरम् आहवनीये दण्डानुप्रहरणम् । २२ सावभृथे कर्माणि अवभृथानु-प्रहरणम् । २३ वेदस्तरणोत्तरकल्पः संस्थाजपात् प्राक् निष्कास्य उद्गामानस्य हृदयशूलस्यानुमन्त्रणे मन्त्रश्च । २४ उद्गामानस्य हृदयशूलस्य उपरिष्टात् अपाकृपस्प-र्शनमन्त्रः ।२५ यस्य ष्टाष्टहृदयशूलानाम् अन्योन्यसंस्प-र्शविवेचनमन्तरेणैव सर्वेषामेकेन समिन्धनस्य ग्रहणम् । २६ मन्त्रविशेषपूर्वकं प्रथमायाः द्वितीयायाः तृतीयायाश्च समिधोऽभ्याधानम् । २७पूर्वयज्ञोनुरेव पूर्वमाभ्याधानं न सर्वेषां युगपत्" । २८संस्थाजपान्तं पशुतन्त्रम् । २८सू० ३अ०६क० । १ प्रदानास्यकर्मोक्तप्रैषा एव सर्वत्र भवन्ति नान्ये इत्युक्तिः । २ येषां पशूनां यानि प्रदानानि तेषां पशूनां याज्यानुवाक्याकथन-प्रतिज्ञा ।३सर्वत्र पूर्वमुक्ता अनुवाक्याः उत्तरा याज्या इति ज्ञापनम् । ४ याज्यानुवाक्यालिङ्गितदैवतेन वक्ष्यमाणानां पशूनां नामात्योक्तिः । ५ अग्नेर्याज्यानुवाक्याः । ६सर-स्वत्या याज्यानुवाक्याः । ७सोमदेवतायाः याज्यानुवाक्याः । ८पूष्णो याज्यानुवाक्याः । ९ बृहस्पतेर्याज्यानुवाक्याः। १० विश्वेषां देवानां याज्यानुवाक्याः । ११ इन्द्रस्य याज्यानुवाक्याः । १२ मरुतां याज्यानुवाक्याः । १३इन्द्रा-ग्न्योर्याज्यानुवाक्याः । १४सवितुर्याज्यानुवाक्याः ।१५वरु-णस्य याज्यानुवाक्याः । १५सू० ३अ० ७क० । १ अष्टा-दशभिर्ऋग्भिः पशुकर्मविधानम्, तासामृचां प्रजापति-देवताकत्वम् । २ याज्यानुवाक्यालिङ्गकल्पितदैवत्यानां विशिष्टरूपाणां पशूनां विधानं, शाकल्येनैतदध्यायगणितानां तासां त्रिंशत्सङ्ख्याकत्वोक्तिः । ३ खण्डद्वये समाम्ना-तानां पशूनां मध्ये केषाञ्चित् सोमाङ्गत्वं केषाञ्चित् स्वतन्त्रत्वञ्च । ४ पशूनां प्रकृतिभूतस्य ऐन्द्राग्नस्य निरूढ-नामकस्य पशोः कर्त्तव्यत्वम् । ५ निरूढस्य पशोः षट्सु षट्सु मासेषु वत्सरे वत्सरे वा कार्यता ।६प्राजापत्योपांशु-सावित्रसौर्यवैष्णववैश्वकर्म्मरूपपशुकतन्त्रेषु उपांशुजप-विकारोक्तिः । ७प्रैषादेरपि आगुरः स्थानभाजित्वम् । ८ आददादीनां मन्त्राणां यथास्थानमुपांशुत्वम् । ८सू० ३अ०८क० ।१सौत्रामण्याख्यकर्माधिकारः। २तत्राश्विनसा-रस्वतैन्द्राःपशवःवार्हस्पत्यश्चतुर्थः ऐन्द्रसावित्रवारुणाः पशु-पुरोडाशाः यथासङ्ख्येन भवन्तीत्युक्तिः।३चात्वालमार्जना-

नन्तरम् आश्विनसारस्वतैर्पशुभिः प्रचरणं तेषां याज्यानुवाक्याः प्रैष याजप्राणां कथनम् । ४कुम्भीस्थसुरावेक्षणमन्त्रः पयस्या-लस्थसुरावेक्षणप्रकारश्च । ५ सुरापयपयोपक्ष्योर्भक्षजप-विधानम् । ६ सुरापस्यैव प्रायश्चित्तविधानम् । ६सू० ३अ०९क० । १विधानाप्यथाभावे प्रायश्चित्ताधिकारः । २ विहितस्याभावे प्रतिनिध्युपादानम् । ३ इष्टिमध्य-रूपस्याग्न्याहिताग्नेः प्रयाणोपपत्तौ अग्नीनां पृथगु-स्थयनम् । ४ समन्त्रकं साज्याहुतिहोमकं समारोपणं कृत्वा गमनविधानम् । ५ समारोपस्वरूपम् । ६ यजमानकर्त्तृकं गार्हपत्ये पाणिद्वयस्य सन्ततप-नम् । ७उक्तप्रकारेणाहिताग्नेः समारोपणानन्तरमङ्गत्वा-गमनविधानम् । ८ यजमानकर्त्तृकं समन्त्रकमरणी-मन्थनविधानम् । ९अवदीप्यमानस्याहवनीयस्य शम्यापरा-सादर्वाक् संयमनम् । १० यदि त्वतीयाद्याद्यमावास्. पौ-र्णमासौ यातीयाद्यादि वाऽन्यस्याग्निषु यजेत यदि वास्या-न्योऽग्निषु यजेत यदि वास्यान्योऽग्निरग्नीन् व्यवेयाद्यादि वा साग्निहोत्र उपसन्ने हविषि वा निरुप्ते चक्री-वक्ष्या पुरुषोवाऽविविक्तरमन्तरियाद्यादि वाऽश्वे प्रमीयेत इत्येवं निमित्ते इष्टिविधानम् । ११ उक्ताया इष्टेः पथिकृद्ग्नावाग्निदेवताकत्वम् । १२ उक्तायामिष्टौ अनडु-द्दक्षिणा । १३पूर्वोक्ताया इष्टेः अग्निभिन्नव्यवधाननि-मित्तकत्वे विधानभेदः । १४शुना व्यवाये स्वपदानां भस्मना परिपूरणम् । १५ भस्मराजप्रोदकराजप्र च सन्तनने प्रतिराजि मन्त्रावृत्तिः । १६उक्तराजिभ्यां समानं कृत्वा ऽऽहवनीयानुगमनानन्तरं ततः प्रणीय तदुपस्थानम् । १७ यदि अस्य अन्यतस्येन दोहनीयाया गो पयसाग्निहोत्रा-न्तरं प्रातरादौ प्राक् देहाग्निसंस्कारात् कृत्वा दाह इत्यु-क्तिः । १८ अपरपक्षे आहिताग्नेर्मरणशङ्कायां तत्पक्षा-वशिष्टाहुतिभिः एतत्पूर्वपक्षमयनम् । १९आवाहनानन्तरं प्रधानयागादर्वाक् हविर्व्यापत्तौ तस्य प्रधानयागादेः सर्वस्याज्येनेष्टिं समाप्य पुनरिज्या न भवतीत्युक्तिः । २० श्व्युत्तकेशनखादिभिर्व्याप्तैर्वा बीभत्सैर्हविःषु दुष्टेषु नान्यः प्रत्युक्तःशुद्ध्युपायः । २१ कठिनानां भेदने द्रवाणां क्षरणे हविषां दुष्टत्वम् । २२ दुष्टानां हविषां अप्सु प्रक्षेपः । २३सान्नाय्यस्य दुष्टस्य मध्यमेन पलाशपर्णेन वल्मीक-द्वारे प्रतिषेचनम् अप्सु वा तूष्णीमिति विकल्पः । २४ अन्तःपरिधिदेशे विष्यन्दमानस्य हविषो निर्वपणम् । २५प्रातर्दोहे अदुष्टे द्वयोः पात्रयोः कृत्वाऽन्यतरत्

दधिभावाय आतञ्च ताभ्यां दधिपयोभ्यां प्रचरणम् । २६ पयसि दुष्टे तत्स्थाने पुरोडाशव्यवस्था । २७ दधिपयोरूपे सान्नाय्यद्वये दुष्टे इन्द्राग्निदैवत्योदनसिद्ध्यर्थं पञ्चशरावपरिमितव्रीहिनिर्वपणम् । २८ इन्द्राग्न्योः पृथक् चरणम् । २९ एकेषां मते कैवलमित्रदेवताकपञ्चशरावोत्पादनानन्तरम् इन्द्राग्न्योः पृथक्चरणम् । ३० सान्नाय्यार्थमपाकृतानां वत्सानां पाने वायुदेवत्यया यवाग्वा यजनम् । ३१ गर्भमिति मन्त्रेण स्रवतोऽधिश्रितस्याग्निहोत्रस्याभिमन्त्रणम् । ३१सू०३अ०१०क० । १ उपावसृष्टाया दुह्यमानायाश्च अग्निहोत्र्या गोरभिमन्त्रणम् । २ उक्ताया गोरुत्थापनम् । ३उक्ताया गोरूधसि मुखे चोदपात्रसुपोदृह्य दुग्ध्वा ब्राह्मणाय पानार्थं तत्प्रदानम् । ४वत्स्यमानायै उक्तायै गवे यवसदानम् ।५दुग्धस्य शोणिताकारत्वे निरवशेषस्य गार्हपत्ये दाहविधानमन्येन द्रव्येण च होमकरणम् । ६ दोहनोत्तरं पात्रस्य भेदने पात्रात् पतने वा विक्षिप्तपतितत्यागेनान्यस्यादुष्टस्याभिमन्त्रणम् । ७दोहनावस्थायां पयसः स्कन्दने स्कन्नांशाभिमन्त्रणम् । ८परिशिष्टेन स्थालीस्थेन होमः । ९ होमस्यापर्याप्तौ अभ्यानीयान्येन होमः । १०पयसि स्कन्ने प्रायश्चित्तम् । ११स्कन्ने स्कन्नाभिमर्शनम् । १२ पय शेषेण होमविधिः । १३ सुम्नतस्याऽशेषे पुनरुन्नीय होमकरणम् । १४स्थालीपात्रे शेषाभावे संस्कृतेनाज्येनोन्नीय होमः । १५ प्रधानहोमद्वयपर्य्यन्तम् उक्तरूपा प्रायश्चित्तिः । १६ पूर्वोक्तहोमे प्राकृतस्य मन्त्रस्यापशादरूपया वारुण्या ऋचा होमः वारुणीजपश्च । १७ वारुणीजपो वारुणीहोमः अनशनमिति त्वयस्य शेषेण होमे मालापचारहोमे पुनरुन्नीय होमे च कर्त्तव्यता । १८ गाणगारिमते उक्तपक्षत्रये पुनर्होमः । १९ सरसरीति शब्दायमानस्याग्निहोत्रद्रव्यस्य अभिमन्त्रणम् । २० उद्वासिते विष्यन्दिते च प्रायश्चित्तान्तरम् । २१ शोभत्वे मध्यमेन पलाशपर्णेन होमः । २२ अभिहुतेऽधिकसमिदाधानम् । २३ उत्तरस्या आहुतेः स्कन्दने समिदाधानम् । २३सू० ३अ० ११क० । १ सायं होमस्य प्रदोषान्तकालविधानम् । २ सङ्गवान्तस्य प्रातर्होमकालत्वम् । ३ सायं प्रातर्होमेऽतीते चतुर्गृहीतेनाज्येन होमः । ४ कस्मिन् काले केन मन्त्रेण होमकादुक्तिः । ५ अग्निहोत्रे समाप्ते वारुणीष्टिः कार्य्या । ६ होमोत्तरकाले प्रातः इष्ट्यन्ते वरदानम् । ७अग्निहोत्रसमाप्तौ आहवनीयस्यानुगमनं ज्ञात्वा पुनस्तदुद्धरणम् । ८ तन्निमित्ता मित्रसूर्योभयदेवताका इष्टिः । ९ इष्टिसमाप्तौ यतवाचोः पत्नीयजमानयोरग्नीन् ज्वलयतोरनश्नतोरहःशेषसुपोषणम् । १० द्वयोर्गवोर्दुग्धेन रात्रेः पूर्वचतुर्थभागे सायमग्निहोत्रहोमः । ११ एकस्मिन् पयस्यधिश्रिते द्वितीयमवनीय तेन होमकरणम् ।१२प्रातःकालातिपातनिमित्ता प्रातरिष्टिः । १३ उक्तायामिष्टौ व्रतभङ्गपाकस्याग्नेर्दैवतात्वम् । १४स्वकाले एव प्रणीतेष्वग्निषु होमकालातिपत्तौ प्रायश्चित्तोक्तिः । १५ दुःखेनाम्बुपाते प्रायश्चित्तिः । १६ अग्निहोत्रार्थं विधिनानुवृते आहवनीये यद्यस्तमियादर्कस्तदा बहुविद्ब्राह्मणेन तस्य निधानान्तं कारयेदित्युक्तिः ।१७पूर्ववत् अनुवृतेऽभ्युदितो यद्यर्को बहुविद्ब्राह्मणेन तत्प्रणयनम् ।१८आज्यस्य होमरजताद्यनयनरूपकार्य्यान्तरोक्तिः ।१९कालात्ययेन प्रायश्चित्तविशेषोक्तिः ।२०उक्तविषये प्रातःकाले विशेषोक्तिः ।२१विद्यमाने आहवनीये गार्हपत्यानुगमने इतिकर्त्तव्यताविधानम् । २२ मथनसमयज्वालाभावे भस्मनाऽरणी लेपयित्वा तन्मन्थनम् । २३ मन्थनविषये इतिकर्त्तव्यताकलापः । २४ उक्तमन्थनविषये द्वितीयः कल्पः । २५ पुनर्मन्थनविषये कल्पान्तरम् । २६ त्रिगुणयुक्तोऽग्निरेवात्र मन्थनविषये एका देवता । २७ अग्निहोत्रार्थं प्रणीते आहवनीयेऽनुगतप्रायश्चित्तत्वेन इष्टिविशेषोक्तिः । २८ ज्योतिष्मद्गुणकाग्निवरुणयोः प्रकृते देवतात्वोक्तिः । २९ सर्वेष्वग्निष्वनुगतेषु आदित्येऽस्तमिते उदिते वाऽस्याग्नेः पुनराधानरूपप्रायश्चित्तोक्तिः । ३० अरण्योः समारूढेषु अग्निषु अरण्योर्नाशे अग्न्याधेयस्य पुनराधेयस्य वा कर्त्तव्यत्वम् ।३०सू०३अ०१२क०।१अतःपरं भाविनीनामिष्टीनाम् आग्नेयत्वोक्तिः। २व्रतातिपाते आग्नेय्येष्टिः ।३क्लतेऽग्निकर्म्मणिदोषेनेष्टिः किन्तु व्याहृतिहोमः । ४ आगारदाहे क्षामायाग्नये, शावाग्निसंसर्जने च शुचयेऽग्नये, इष्टिः । ५ सर्वेषां द्वयोर्वा अग्न्योः परस्परं संसर्गे विविचयेऽग्नये उक्तेष्टिः । ६गार्हपत्याहवनीययोः संसर्गे वीतयेऽग्नये इष्टिः ७ पचनाग्निना संसर्गे संवर्गायाग्नये इष्टिः । ८ वैद्युतेऽग्नौ अप्सु मङ्गणकाय, शतृणामन्नभोजने वैश्वानरनामकायाग्नये चेष्टिकरणम् । ९ पुरोडाशकपाले नष्टेऽनुद्वासिते पूर्वोक्तैवेष्टिः । १० अभ्याश्राविते उक्ताया इष्टेः कर्त्तव्यत्वम् । ११ जीवत्येवाहिताग्नौ मृतशब्दश्रवणे सुभतयेऽग्नये इष्टिः । १२ तत्रेष्टौ मरुतो देवता ।

वीषि । ५ भुवनस्य आदित्येभ्यः भुवनपतिभ्यो वा आदित्येभ्यो याज्यानुवाक्ये । ६ इदमादिषु उदयनीयायाः प्राक् मार्ज्जनाभावोक्तिः । ७ इडायां सूक्तवाके च स्थितानामाशिषां स्थाने आगूर्णाभकमन्त्रस्य प्रयोगः । ८ इडानिगदकथनम् । ९ सूक्तवाकनिगदोक्तिः । १० नाराशंसाभावोक्तिः । ११ सवनीयपशुविडायाः कथनम् । १२ अग्निप्रणयनोत्तरकालं गार्हपत्याहवनीययोर्मध्ये दीक्षितानामासनशयनरूपसञ्चारदेशः । १३ वतिषणां दीक्षाविधानम् । १४ महाव्रतसहिते सत्रे विशेषोक्तिः १५ द्वादशाहतापश्चितेषु यत्संख्याः सुत्यास्तत्संख्या एवोपसदो दीक्षाश्च भवन्तीति । १६ विकल्पे काण्डानां कर्म्माचारः । १७ दीक्षाकाल एव विधातव्ये दीक्षोपसत्सहितानामेकाहःप्रयोगकालविधानम् । १८ दीक्षाहःसु परिसमाप्तेषु अनन्तरं यदहस्तस्मिन्नहनि सोमक्रयविधानम् । १९ सू० ४ अ० २ क० । १ सोमक्रयदिवसे प्रायणीयेष्टिकरणम् । २ प्रायणीयेष्टेः शंय्वन्तत्वम्, नोदयनीयान्तत्वमिति । ३ उक्ताया इष्टेरनाजाभागत्वं नोदयनीयत्वमिति । ४ अहर्गणेषु सोमक्रयस्य सकृदेव कर्त्तव्यत्वम् । ४ सू० ४ अ० ३ क० ।
१ सोमक्रयरूपं कर्म । २ क्रीतं सोमं प्राग्वंशसमीपं नेष्यत्सु अध्वर्य्युषु अग्रतः पश्चात् त्रिपदमात्रेऽतीते शकटस्य नीर्मध्यभागस्य सरस्देशे प्रेषितस्य सतः पाणीअवाञ्चयतः प्रदेशे दक्षिणस्यां दिशि त्रिःपांसूद्वपनम् । ३ अन्तरेणैव वर्त्मनी अनुव्रजतएव उत्तराऽनुवचनम् न व्रजनविच्छेदे इत्युक्तिः । ४ अवस्थितस्यानसो दक्षिणपार्श्वेन सोमसमीपं गत्वा तमीक्षमाणस्य तत्रैवावस्थानम् । ५ अवस्थितेऽनसि दक्षिणात् पश्चादभिक्रान्तस्य सोमाभिमुखं अवस्थानम् । आहवनीयस्याप्रतोऽनुव्रजनञ्च । ६ सोमे निहिते तिष्ठतएव परिधानोक्तिः । ७ उपस्थानविधस्य विकल्पोक्तिः । ७ सू० ४ अ० ४ क० ।
१ इडान्ता आतिथ्या नाम इष्टिः । २ आतिथ्येऽग्निमन्थनरूपाङ्गकथनम् । ३ आतिथ्येष्टौ धाय्याद्वयं, संयाज्याद्वयम्, आर्त्विज्यं करिष्यतां स्वयमभिमर्शनम् । ४ उदकस्पर्शानन्तरं सोमाप्यायनम् । ५ उपस्तु उदकस्पर्शे उभ्योदकस्पर्शनम् । ६ आप्यायनमन्त्रः । ७ उदकस्पर्शानन्तरं नमस्काराञ्जलिरूपेण पाणिनिधानस्य कर्त्तव्यत्वम् । ७ सू० ४ अ० ५ क० । १ उदकस्पर्शनानाम् आप्यायननिह्नवप्रवर्ग्याङ्गत्वोक्तिः । २ प्रत्यूषमनवानतया प्रणवेन तदवसानम् । ३ पूर्व्वस्याभिष्टवनस्य एतावत्त्वकथनम्
२ सू० ४ अ० ६ क० । १ वाक्प्रयावधाने सत्यप्येकमेवाभिष्टवनम् । २ होत्रादिषु उपविष्टेषु अध्वर्य्युकर्तृकधर्म्मदुघाह्वानस्य उत्तरारम्भे हेतुत्वोक्तिः । ३ अभिहिङ्कारवर्ज्जम् उत्तराभिष्टवनविधानम् । ४ उत्तरपटलस्य समष्टिप्रयोजनानि । ५ उक्तयोः प्रवर्ग्ययोः स्वरूपकथनम् । ५ सू० ४ अ० ७ क० । १ प्रवर्ग्योपसदोः समाम्नाय पश्चार्थिं प्रपन्नस्य उपसत्करणविधानम् । २ उपसदि पित्र्यायाः जपलोपः । ३ पित्र्यायैव प्रवेशोपवेशनयोर्व्याख्यानम् । ४ पित्र्याया उपवेशनातिदेशात् दक्षिणोपर्युपस्थताविधानम् । ५ उपसद्यायमीढुष इत्याद्याः तिस्रः सामिधेन्यः । ६ तासामुत्तमेन प्रणवेनाग्निं सोमं विष्णुमावाह्योपवेशनम् । ७ एकेषां मते देवतानाम् नावाहनम्, अनावाहनेऽपि उक्ता एव देवताः इत्युक्तिः । ८ स्विष्टकृदादिप्रयाजाजाभागलोपकथनम् । ९ आप्यायननिह्नवयोर्नित्यत्वकथनम् । १० अपराह्णेऽपि कर्त्तव्यायामुपसदि विशेषादिकथनम् । ११ तत्र पूर्व्वापराह्णिककर्म्माणि । १२ पौर्व्वाह्णिकीनामुपसदां पूर्व्वाह्णे, आपराह्णिकीनाञ्च अपराह्णे कार्य्यतोक्तिः । १३ पूर्व्वाह्णिकयापराह्णिकयाऽपसदौ एकोऽत्र एकोपसद्व्यवहारः, तादृश्या उपसदश्च त्रिष्वहःसु कर्त्तव्यत्वम् । १४ षट्सु वेति व्यवस्थाविकल्पः । १५ अहीनादीनाम् अध्वर्य्युप्रत्ययादुपसद्विषयः । १६ एकेषां शाखिनां ज्योतिष्टोमस्य प्रथमप्रयोगे धर्म्मैक्याभावोक्तिः । १७ औपवसथ्येऽहनि वर्त्तमानयोरुपसदोः पूर्व्वाह्णएव कर्त्तव्यत्वम् । १८ होता दीक्षितश्चेत् तदा औपवसथ्येऽहनि प्रथमोपसदि समाप्तायां प्रेषितः पुरीष्यचित्यर्थमनुवचनम् । १९ होतरि अदीक्षिते यजमानस्यानुवचनम् । २० पश्चात् पदमात्रे स्थित्वाऽभिहिङ्कृत्य पुरीष्यासोऽग्नयः इति सप्रणवाया ऋचस्त्रिरनुवचनम् । २१ तृमन्द्रेणैवानुवचनं नोपांश्विति । २२ व्रजत्सु अध्वर्य्युषु अनुव्रजतोऽनुव्रजनम् । २३ तिष्ठत्सु अध्वर्य्युषु अनुवचनारम्भस्थाने स्थित्वा भूर्भुवः स्वरिति वाचं विसृज्य प्रचयतीति सर्व्वेषामनुवचनम् । २४ होता दीक्षितश्चेत् प्रसोढ्कर्त्तृ वञ्चितस्य अग्नेः अनुगीतस्याशंसनरूपसंस्कृतिः । २५ निर्मध्यमया वाचा पूर्व्वोक्तमन्त्रानुशंसनम् । २६ अग्निपुच्छस्य पश्चात् वैश्वानरीयजननम् । वाग्निचित्येषु क्रतुषु पुरीष्यचितिः, अनुशंसनं, वैश्वानरीयमित्येतत् त्रयं भवतीत्युक्तिः । २८ ब्रह्मणो नियमभेदः । २९ उक्तस्याग्निप्रणयनस्य कर्त्तव्यत्वम् । ३० दीक्षितश्चेद्ब्रह्मा तदा तस्य

वसोर्धाराहोमकाले तत्प्रतिगमनविधानम् ३० सू० ४अ० ८क०। १हविर्धानयोः शकटयोः अध्वर्युकर्तृकं प्रवर्त्तनम्। २उक्तप्रवर्त्तने सोमप्रग्रहणेन कार्य्यतोक्तिः। ३ पूर्व्वोक्तानुवचने विशेषकथनम्।४ररराट्यामवस्थायाम् अधिष्ठयोरित्यग्रा चैव अर्द्धर्चेऽवसानम्। ५वद्धां रराटीमीक्षमाणस्य ऋग्विशेषानुवचनम्। ६उपनिहतयोर्मेथ्योः ऋग्विशेषेण परिधानम् ६सू०४अ०९क०। १प्रेषितानुवचने इतिकर्त्तव्यताकलापः। २ अनुव्रजन ...सरानुवचनम्। ३ ऋग्विशेषसमाप्तौ प्रणवेनोपरमः। ४ आग्नीध्रीयमभिव्रजत्सु अध्वर्य्युषु उत्तरेण तमतिव्रज्य ऋग्विशेषस्यानुवचनम् ऋग्विशेषस्य पार्श्वे आरामः। ५प्रपद्यमानस्य सोमस्याऽनुप्रपदनप्रकारः। ६ शालामुखे ...ोपवेशनप्रकारः।७ब्रह्मकर्त्तृकस्य सोमप्रणयनस्य पाक्षिकत्वकथनम्। ८ सोममप्रणयतो ब्रह्मणः कर्त्तव्यभेदः। ९ आहवनीयस्य दक्षिणतः ब्रह्मोपवेशने नियमः। १० अग्निचित्याधिष्ठितायां सोमयागक्रियायाम् अग्निपुच्छस्य दक्षिणत उपवेशनम्। ११ अग्नीषोमीये पशौ उक्तप्रक्षालनातिदेशः।१२सौम्ये चाहनि वपाहोमान्ताव्वाहवनीयस्य दक्षिणत आसनम्। १३स्वहवतवे हौमं प्रक्षय हविर्धाने चाग्रेण यदि गतः स्यात्तदा प्रपद्यमाने सोमे आसादनार्थं पुनः प्रत्येवादित्युक्तिः। १२सू० ४अ०१०क०। १ अग्नीषोमीयेण पशुना चरणम्। २ प्रणयनपर्य्यन्तमुत्तरवेदिसमीपे आदयकमर्दानस्य कार्य्यभेदाः। ३होतुः स्वस्य धिष्ण्यस्य पश्चादुपवेशने कार्य्यभेदः। ४मैत्रावरुणस्य स्वधिष्ण्यस्य पश्चादवस्थानम्। ५ देवसूनां हवींषीति संज्ञाकथनम्, तत्र सर्व्वासामष्टानां देवतानां सगुणत्वम्, रुद्रस्य गुणविकल्पश्च। ६उक्तदेवतानां याज्यानुवाक्याकथनम्। ६सू० ४अ०११ क०। १ सर्व्वपृष्ठानीति वक्ष्यमाणानां हविषां संज्ञा, तासां चाम्नायात्तत्तद्देवतोपदेशस्य व्याप्यार्थत्वं तासामष्टौ संख्याः तत्रादितः सप्तामैकैकस्यावतारस्यात्तो गुणशब्दाः ततोविष्णुपत्नी अदितिरित्येका, ततश्चानुमतिरिति द्वे। उक्तानामष्टानां देवतानां याज्यानुवाक्याकथनम्। वैश्वानरीयस्य नवमत्वं, कायस्य दशमत्वञ्च। ३ औपयाजैरङ्गारैर्व्यवायपरिहारे सतस्य कार्य्यता। ४ आग्नीध्रस्योत्तरेण होतर्यवं दक्षिणे होतोये निधानम्।५ शामित्रीदाहरणे दक्षिणेन मैत्रावरुणं, होतीय एव निधानम्। ६उपोत्थानमित्यनयोस्तथा भेदप्रदर्शनम्। ७हृदयशूलोद्वासनप्रकारः।

द्ववतीवरीणां परिहारे क्रियमाणे दीक्षितानामन्तर्भावः अदीक्षितानां बहिर्भावश्च। ४अ०१२क०। १ यस्यां रात्रौ पशोः समाप्तिस्तस्यास्तुर्य्यभागे पश्चिमपादमात् प्राक् प्रातरनुवाकायामन्त्रितस्य विधिपूर्व्वकः आहुतिहोमः। २ उक्तविषये द्वितीयाहुतिहोमः। ३ ब्रह्मणश्च होतृवायं विधिः समान इति। ४ हविर्धाने प्राप्य ररराट्यभिमर्शनम्। ५ दक्षिणेन पाणिना पर्य्यवेत्य ररराट्यभिमर्शनम्। ६ मन्द्रस्वरेण प्रातरनुवाकानुवचनम्। ७ प्रातरनुवाकार्थमाम्नानविशेषः। ८ अग्निदेवताकक्रतुः ४अ०१२क०। १औषसक्रतुः॥ २तत्रेतिकर्त्तव्यताकलापः ४अ०१४क०। १आश्विनः क्रतुः। २तत्र प्रातरनुवाकः। ३पूर्व्वोक्तादन्यः प्रातरनुवाकः। ४अन्यैश्छन्दोभिराग्नेयस्य गायत्रस्य छन्दसोऽन्त्यावपनम्। ५ राजन्यस्य न त्रैष्टुभ, वैश्यस्य न जागतमिति। ६ अध्यायवत् एकपदद्विपदानां संहितानामन्ते प्रणवकरणम्। ७माङ्गल्यादीनां यथाक्रमं वक्तव्यता। ८ मैत्र्यतः स्वर्गकामस्य माङ्गल्यकथनम्। ९ तमसोपघातपर्य्यन्तं दृष्टेस्याशोयधूकावर्त्तनम्। १० तमसोपघातकाले ...ीयस्य ...मयदां प्रतिप्रियतममिति सूक्तस्योपसन्ननम्। ११ उत्सर्पणस्वरूपकथनम्। ११सू० ४अ० १५क०।

५ अध्याये। १परिधानोत्तरानुवचनप्रकारः। २ तत्र निगदादि। ३ अपोनप्त्रीयाणां प्रयोगमन्त्रौ। ४ प्रातःसवनस्य मन्द्रस्वरेण प्रयोगः। ५ अध्वर्य्युकारस्यानुच्चासेन वचनम्। ६ दृष्टिकामस्य सामधेनीवत् प्रकल्पावचनम्। ७ प्रकृतिभावे यथधर्मर्द्धेवैं विकल्पाकाङ्क्षा। ८ दशमीपक्षे ब्राह्मणानुवादः। ९ एकधनासु अप्सु आवर्त्तनीयत्वकथनम्। १० दृष्टिपथमागतासु तासु जपमन्त्रः। ११ समीपागतासु तासु जपमन्त्रः। १२वसतीवरीषु समायातासु ब्राह्मणोक्तकार्य्यचरणम्। १३तीर्थदेशे होतृचमसी ... पां पूर्व्वभागे आपोनदेवीः इति मन्त्रं समाप्य प्रणवेनोपरमः। १४ निगदकथनेन निष्क्रमणविधिः। १५ आसामेकधनानामानयन्तीनां सुस्नातो गत्वा ता। अपरेणातीत्य उत्तरतः स्थितिविधिः। १६ तासद्दूरेणातीतासन्मावर्त्तनम्। १७ अन्याहृतस्य मन्त्रक्रमेण द्रवणम् जगतानपक्षे प्रणवेनावसानक्रिया।१८तिसृणाम् उत्तमयानुप्रपदनम्।१९अग्निरथेन होमाभिहवे उपवेशनप्रकारः। १९सू० ५अ० १क०। १ उपांशुनामपक्षे हूयमाने तदभिमुखीभूय प्राणापानोनां विवाहादेष वषट्करणम्। २सर्वहुतस्य यायो-

२७ ततो होतृजपमन्त्रः । १७सू० ५अ० ५क० । १इतरपात्रद्वयं सव्येनापिधाय ऐन्द्रावायवपात्रं दक्षिणहस्तेनोत्तरभागे गृहीत्वा अध्वर्युणापि तस्य ग्रहणाय एष वसुरिति मन्त्रेण होत्रा प्रणयनम् । २ नासिकाभ्यामवघ्राय होत्रा सोमस्य भक्षणे मन्त्रः । ३ होत्रा भक्षितमध्वर्युणा च प्रतिभक्षितं होतृचमसे किञ्चिद्दवनीय अनाचम्यैवोपह्वानादि कृत्वा पुनः सकृद् भुक्त्वा शेषं होतृचमसे आनीय तत्पात्रोत्सर्गः । ४ उत्तरग्रहपात्रे उक्तधर्मातिदेशः । ५ उत्तरग्रहपात्रयोर्न पुनर्भक्षणम् । ६ द्विदेवत्यानां मध्ये कस्यचित् ग्रहस्य होतृचमसे अनवनीतस्य नोत्सर्गः । ७ होत्रा मैत्रावरुणस्य ग्रहपात्रस्याध्वर्यवे पूर्ववत् प्रणयनम् । ८ तस्य दक्षसव्याभ्यां नेत्राभ्यां क्रमेणेक्षणम् । ९ मैत्रावरुणस्योत्सर्गान्तं कर्म कृत्वा दक्षहस्तेनाश्विनमपिधाय सव्येन होतृचमसादाने मन्त्रोक्तिः । १० सव्यस्यारत्निना सव्योरुवसनमाच्छाद्य तत्र निधायाहताङ्गुलीभिरपिधानम् । ११ होतृचमसं सव्येनापिधाय दक्षिणेनाश्विनं गृहीत्वा पूर्ववत् प्रणामनम् । १२ आश्विनमुत्सृज्य दक्षहस्तेन होतृचमसं निधाय जलं स्पृष्ट्वा इडोपह्वानम् । १३ इडोपह्वानकाले चमसिनः स्वस्वचमसस्येडासमीपे उद्यमनम् । १४ अवान्तरेडां प्राश्याचम्य होतृचमसभक्षणम् । १५ दीक्षितस्य होतुः दीक्षिता उपह्वयध्वमित्युक्त्वा चमसभक्षणम् । १६ यजमाना उपह्वयध्वमित्युक्त्वा वा होतुश्चमसभक्षणम् । १७ऋत्विजान् प्रति पृथक् तत्तन्नामोत्कीर्त्तनेन इत- [illegible] चमसभक्षणम् । १८ उक्तरूपेण दीक्षितादीक्षितानां मैत्रावरुणादीनां स्वस्वचमसभक्षणम् । अदीक्षितानां समानभक्षं प्रति पूर्ववत् उपह्वानं कृत्वा चमसभक्षणमिति भेदः २० अचमसानां मुख्यचमसाद्भक्षणम् । २१ द्रोणकलशादुद्धृत्याचमसानां सोमभक्षणम् । २२ सर्वत्र सोमभक्षणे वाग्देवीत्यादिमन्त्रजपः । २३ होतुर्वषट्कर्तृत्वात् प्रथमभक्षणं पश्चादुद्गात्रादीनां भक्षणमिति गौतममतम् । २४ तौल्वलिमते इतरेषामभक्षणम् । २५ गाणगारिमते सर्वेषां भक्षणम् । २६ सोमभक्षोत्तरं मुखहृदयस्पर्शे मन्त्रः २७ प्रथमद्वितीययोः सवनयोराद्यानां द्वितीयानाञ्च चमसानां जलेनाभिमर्शने मन्त्रद्वयम् । २८तृतीयसवने आद्यानामेव तथाभिमर्शनम । २९ अर्द्धपात्राणि विना सर्वपात्राणां मुखहृदयाभिमर्शनम् । ३० इत्यमाप्यायनेन भादितानां चमसानां नाराशंससंज्ञा २०सू०५अ०६क०। १अस्मिन्काले अच्छावाकस्याग्नीध्रस्योत्तरं सदोगत्वा स्वस्थाने उपवेशनम् । २अध्वर्युणा दत्तं पुरोडाशखण्डमिडामिश्रीकृत्य प्रेषितस्याच्छावाकस्य जप्यं जपन् । ३ यजमानेत्यादिना अन्त्येन प्रणवेनोपसन्ननरूपनिगदः । ४उक्तनिगदसमाप्तौ अध्वर्युणा होतुरुपहवाकाङ्क्षा ।५ उपह्वाने प्रकारः ।६ उन्नीयमानाय प्रत्यक्षा इति सूक्तस्याच्छावाकेनानुवचनपूर्वकं यजनम् । ७पुरोडाशखण्डं निधाय जलं स्पृष्ट्वा चमसभक्षणम् । ८अस्पृष्टोदकानां सोमेतरहविषां स्पर्शनिषेधः । ९पुरोडाशखण्डप्राशनप्रकारः।१०यदाच्छावाक उपविष्टस्तदा ब्रह्मा तीर्थेन निष्क्रम्य बहिर्वेद्यामाग्नीध्रीयं प्राप्नोति अच्छावाकस्य इगलरूपं पुरोडाशखण्डं प्राश्य तीर्थेन निष्क्रम्याचम्य तं देशं प्राप्नुयात् इतरे होत्रादयोऽप्यनुपविष्टएवाच्छावाके तं देशं प्राप्नुयुरित्युक्तिः । ११ अस्मिन् काले चुञ्चिष्टत्यर्थमन्यदपि प्राश्य प्रतिसृप्य उत्तरकाण्डोक्तं कर्म कार्य्यम् ११सू० ५अ०७क० । १ सर्व्वेषु प्रतिसृप्तेषु ऋतुयाजैश्चरणम् । २ तत्र प्रैषाः । ३ प्रैषसमाम्नाये पञ्चमसूक्तस्य ऋतुयाजानां प्रैषत्वम् । ४स्वस्वप्रैषेण प्रेषितस्य यजनम् । ५ अध्वर्युगृहपतिभ्यां प्रेषितस्य होतुर्यजनम् । ६ पार्ष्णिके षष्ठेऽहनि अध्वर्युगृहपतिभ्यां स्वयंयजनम् । ७ तयोर्यजनप्रकारः । ८ वषट्कर्तॄणामानन्तर्य्येण ऋतुपात्रभक्षणम् । ९तत्र अध्वर्य्योः पृथक्भक्षणम् । १०तत्रैव काले प्रतिभक्षकस्योपह्वानम् ५अ०८क० । १ ऋतु- [illegible] दिषु पूर्वोक्तप्रकारातिदेशः,पर्य्यायप्रवर्त्तीना सर्वत्रान्त श-स्तत्वम् । २ उक्तेनोपाह्वानेनोत्तरयोरुपसन्ननम् । ४ओथामोदैवेत्यस्य प्रतिगरसंज्ञा सच शस्त्रस्वरतुल्यस्वरः इत्युक्तिः । ५ आह्वावे शोंसामोदैवेत्यादेः प्रतिगरसंज्ञा ६प्रणवे प्लुतादि अवसाने अप्लुतादिरिति परिभाषितम् । ७ आह्वावोत्तरे प्रणवे प्रणवत्वं न प्लुतादित्वम । ८अवसाने प्रणवस्य प्रतिगरसंज्ञा । ९ प्रणवान्तस्य उक्तविषयद्वयविकल्पः । १०अन्तःशस्त्रप्रणवावसाने प्रतिगरसंज्ञा शस्त्रान्ते तु प्रणवत्वं न प्लुतादित्वम् । ११ त्रिपदैकपदादौ शंसनावसानविशेषः । १२ त्रिविदो यथापठितशंसनं कर्त्तव्यं तत्रैकश्रुत्यञ्च । १३ निर्विदां आह्वानाभावः । १४ तस्या उपसन्ननाभावश्च । [illegible] निर्विदानुसमेन पदेनाव्यवहितस्योपसन्ननम् । [illegible]तोप्रकारेण मध्या

निविदः शंसव्या इत्युक्तिः । १७ पदसमाम्नायानामपि निविदां तुल्यशंसव्यत्वम् । १८अस्या निविदोऽन्यासु निवित्सु पदसमाम्नायेषु च उपसन्तननम् । १९ अन्यासु निवित्सु आह्वानञ्च भवतीत्युक्तिः । २० यत्र द्वे सूक्ते त्रीणि वा आज्यकार्य्ये विहितानि तत्राद्यस्यैवाद्यायाः त्रिःशंसनं नोत्तरस्येति नियमनम् अर्द्धर्चशोविग्रहश्च तथात्वम् । २१ विग्रहे प्राणसन्तानस्य कार्य्यता । २२प्रतिपदामाद्याया ऋचः पूर्वोक्तप्रकारेण गन्तव्यता । ऋगावानस्य तथात्वञ्च । २३ ब्राह्मणविहितस्य आनुपूर्व्ये विकल्प ।२४याज्यान्तानां शस्त्राणामुत्तमाया आह्वानपूर्व्वकपरिधानीयत्वञ्च ।२५सर्व्वासु शस्त्रपरिधानीयासु उक्तधर्म्मातिदेशः । २६उक्थं वाचीत्यादि शस्त्वा जप तत्र याज्या, उक्थपात्रस्याग्रे भक्षणञ्च २७ सर्व्वशस्त्रयाज्यान्तेषु चमसिनशमसभक्षणम् । २८आदित्यसावित्रग्रहयोर्वषट्कर्त्तुर्भक्षणाभाव । ५अ०९क० । १शस्त्रात् परं स्तोत्रं भवतीत्युक्तिः । २एवेति प्रोक्ते प्रस्तोता उद्गातृहिङ्कारकाले प्रातःसवने शस्त्रायाह्वयीरन् इत्युक्तिः । ३ उत्तरयोः सवनयोः प्रतिहारकाले तथाह्वानम् । ४ वायुरग्रेगा यज्ञप्रीरित्यादीनां सप्तानामृचां पुरोरुक्संज्ञा तस्यास्तस्या उपरिष्टात् तृच तृच तत्र शंसेदित्युक्तिः । वायवायाहि दर्शतेति सप्तानां तृचसत्ता ६शस्त्रस्य प्रउगसंज्ञा । तत्र द्वितीयायास्त्रिःपाठत्वम् ; ७ पुरोरुक्शस्त्रकानां सप्तानामृचां मध्ये विश्वान् देवानित्येतस्या ऋचाः अर्द्धर्चे अर्द्धर्चे विरवसानेनाह्वानम् । ८ पुरोरुचा उत्तमया न शंसेत् तस्या अंशसने ऽपि तृचे आह्वानं कर्त्तव्यम् । ९ प्रउगस्य माधुच्छन्दसार्दित्वम् । १०उक्थं वाचि श्लोकायत्येति शस्त्वा जप । तत्र विश्वेभिः सोम्यं मध्विति याज्या । एतस्मा ब्राह्मणाच्छंसी अच्छावाक इत्येते त्रयः शस्त्रिणोहोत्रकाख्य इत्युक्ति । ११एतेषां त्रयाणां प्रातःसवने चतुराहवानि शस्त्राणि । तृतीयसवने पर्य्यायेषु अतिरिक्तेषु भवन्तीत्युक्तिः। १२माध्यन्दिने पञ्चाहावानि । १३स्तोत्रियानुरूपेभ्यः प्रतिपदनुचरेभ्यः प्रगाथेभ्यःधाय्याभ्यश्च । एताह्वानं कार्य्यम् । १४होतुरप्येतानि उपह्वावस्य निमित्तानि । १५ तेभ्योऽप्यदथमन्तरम् । होत्रा कर्त्तव्यम् । १६आदौ निविद्धानीयानां सूक्तानामेकस्तृ प्रथमेष्वाहावः । १७आपोहिष्ठा इत्यादि तृचे आहावः कार्य्यः । १८ तेषां शस्त्रादिषु मे तचाऽऽस्ते स्तोत्रियासु रूपान्तेषु आहावः कार्य्यः । १९ माध्यन्दिने तथाऽऽव शस्त्रेषु तृतीया आदेयास्ते प्रगाथाः ज्ञेयाः । २०प्रगाथ इत्युक्ते स्तोत्रियोभवति नान्यथेत्युक्ति । २१ याज्यान्तानि शस्त्राणि । उक्थं वाचीत्यादि शस्त्वा प्रातः सवने जपः । २३ षोडशिन ऊर्द्ध्वं यानि शस्त्राणि तेष्वपि अयमेव शस्त्वा जपः कार्य्यः । २४ सषोडशिनि उक्थे उक्थ वाचीत्यादे माध्यन्दिने विशेषः । २५ अनन्तरस्य पूर्व्वेण तुल्यविधत्वोक्तिः । २६ छन्दःप्रमाणलिङ्गदैवतैः स्तोत्रियाणां तुल्यता । २९ आर्षेणापि तुल्यतेत्येके-ष्वाहुः ।२८आनोमित्रावरुण इत्यादयोयाज्याभेदाः तासां मध्ये कासाञ्चित् स्तोत्रीयानुरूपत्वम् । तासां मध्ये यासु-कासुचिदपि छन्दोगाः स्तुवीरन् तदा तिसृभिरेव स्तोत्रियां कृत्वा शिष्टाभिरनुरूपः कर्त्तव्य इत्युक्तिः ५अ०१०क० । १,२,३,४,५ अतिरात्रषोड़शिनि होत्रादीनां निष्क्रमणप्रवेशादप्रकारः । ६ यजमानस्य पूर्व्वद्वारेण प्रतिसर्पणम् ५अ०११क०।१उक्तकाले प्रावस्तुतः प्रपदनम् ।२तस्य उपसर्पणमपि तद्वत् ।३तस्य हविर्द्धानशकटस्य उत्तरशिरोरूपाक्षशिरोदेशे तृणनिरसनं कृत्वा सोमाभिमुखं स्थितिः । ४तत्रोपवेशने मन्त्राभाव । ५उपविष्टस्य यो अद्य सौम्येति मन्त्रजपः । ६ अध्वर्य्युणा तस्मै उष्णीषदानम् । ७तस्याञ्जलिना धृतेन तेन संमुखे शिरसोवेष्टनोत्तरं सोमाभिषवाय ग्रावाभिष्टवनम् ।८इदमादि मध्यमस्वरं तत्र मध्यमस्वरेण प्रयोगश्च । ९ अर्बुदनामधेयसूक्तोक्तिः । १० तस्य प्रागुत्तमायाः आ व ऋञ्जसे इति सूक्तपाठः । ११ उक्तसूक्तयोरुपरिष्टात् शिष्टयाऽर्बुदस्योत्तमया परिधाय वेद्यां यजमानस्योष्णीषं तस्मै देयम् ।१२अन्येषु दिनेषु आदाय पुनर्यजमानाय दानम् । १३ अन्यदिनेषु येन तद्दत्तं तस्मै एव तद्दानम् । १४ गाणगारिमते अपराभिरूपकरणम् । १५आप्यायस्व समेतु ते इत्यादयः द्वादश अवसानाश्चत्वारस्तृचा भवन्ति अर्बुदस्य चतुर्थी उत्तमा तत्र उत्तमा परिधानीया शिष्टा द्वादश ता अपि चत्वारस्तृचा एताः पावमान्यः । १६,१७,१८,१९, एषां चतुर्णां तृचानां क्रमेण कर्म्मभेदे विनियोगज्ञापनम् यथा उदकसेकरूपे आप्यायने प्रथमम् मार्जने द्वितीयम् दोहने तृतीयं अभिषवेण द्रवीकृतस्याधवनीये सम्भरणरूपे आसेचने चतुर्थम् । १०प्रतितृचमन्त्यं चतुर्थ्यां विनियोगः ।११ पावने मा चिदन्यद्वीति अन्यो विनियोगः ।१२अर्बुदपावमानीभ्योऽन्यत् सर्वं समानम् । १४ कैषांचिन्मते अर्बुदैव समता १५ अन्यमते प्र यो पावाण इत्यस्य समता १६,१७ स्तुते

माध्यन्दिने पवमाने विष्णुत्याक्कारान् उपसर्पणम् । ५ अ० १२ क० । १प्रवर्ग्यवति क्रतौ दधिधर्मेण चरणम् । (दधिधर्मः कर्मभेदः) । २ अगावानस्य तद्धर्मत्वम् । ३ भक्षिण ५ज्या । ४होतर्वदस्वेत्युक्तस्य उक्तिवतोऽवपद्यतेत्युक्तिः । ५ श्रातं हविरित्युक्तौ श्रातं हविरित्यनुवचनम् इयमनुवाक्या । ६ परि त्वाग्ने इत्यादि मन्त्रजपे निमित्तभेदोक्तिः । ७ दीक्षितस्यैव अनिष्टा जपः । ८सवनीयानां पुरस्तादुपरिष्टाद्वा पशुपुरोडाशेन चरणम् । ९ एकमते तेन नाचरणम् ।१०आश्मरथ्यमते तेनाचरणम् । ११ अहीनैकाहेषु नाराशंसासादनात् परं दक्षिणानयनम् १२अहीनैकाहेषु दीक्षितस्य जपमन्त्रोक्तिः । १३ आग्नीध्रेण उक्तलक्षणानां दक्षिणाकृतीनां हवनम् ।१४आकृतिमन्त्रप्रकारौ १५ त्रिद्वारदेशाभिक्रमेण नीतेषु दक्षिणाद्रव्येषु मध्ये पाणिरूपदक्षिणाद्रव्यप्रतिपत्तेः मन्त्रभेदः ।१६अप्राणिद्रव्यस्याभिमर्शनमात्रम् । १७ कन्याया दैवविवाहविधिना दत्ताया आदानेऽभिमर्शनमात्रम् न पाणिग्रहणम् । १८ एवं प्रतिग्रहनियमः सर्वत्र । १९ प्रतिगृह्याग्नीध्रीयं प्राप्य उच्छिष्टहविषः सर्वैः प्राशनम् । ५ अ० १३ क० ।

१ मरुद्वतेन पात्रेण चरणम् । २ तत्पात्रभक्षणे मन्त्रः। मरुद्वतशस्त्रशंसनम् । ३ माध्यन्दिनसवने शस्त्रादिषु अध्वर्योराहावप्रकारः । ४ मरुद्वतो प्रतिपदनुचरसंज्ञौ तृचौ । इन्द्रनिहवः प्रगाथः । ६ ब्राह्मणस्पत्यप्रगाथः । ७तृचाः प्रतिपदनुचराः, द्व्यृचाः प्रगाथाः । आद्यमारभ्य ब्राह्मणस्पत्यपर्यन्तं सर्व्वमर्द्धर्चम् । ८ स्तोत्रियानुचरा प्रतिपदनुचराः सर्व्वत्र प्रगाथाः । ९ गायत्र्यादीनि पङ्क्त्यन्तानि अर्द्धर्चशः शस्त्राणि भवन्तीत्युक्तिः । १०पङ्क्त्या उत्तरेषु त्रिषु या अचतुष्पदास्तासामर्द्धर्चशः शंसनम् । ११ पञ्चपदासु पङ्क्तिषु द्वयोर्द्वयोः पादयोर्द्विरवसानम् । १२ आग्निमारुते याः पङ्क्तयस्तासामर्द्धर्चशः शंसनम् । पङ्क्तिशंसनं वेति विकल्पः । १३उक्तानतायाः पङ्क्तेः पच्छः शंसनकथनम् । १४ पङ्क्तेः पच्छः शंसने द्वे उत्तमे पदे अतिरिच्येते तयोः समं कृत्वा शंसनम् । १५ उक्तादन्यत्र पच्छः शंसनम् । १६अर्द्धर्चान्ते प्रणवं कृत्वा मननम् । १७ तत्र धाय्याभेदाः । १८ मरुद्वतः प्रगाथः । १९ जनिष्ठा उग्र इति सूक्तोक्तिः । २० उक्तसूक्तस्यार्द्धा एकाधिकाः शस्त्वा तदन्तराले इन्द्रोमरुत्वान् इत्येतस्या निविदोधानम् । २१ माध्यन्दिने अयुग्मासु तथा धानम् । २२तृचे एकां शस्त्वा युग्मासु च अर्द्धां शस्त्वा निविद्धानम् । २३ तृतीयसवने एकां शस्त्वा निविद्धानम् । २४त्रिष्वपि सवनेषु नेत्रे मजतात्मनः पापं ध्यायता च निविद्धेया । २५सर्व्वत्र तथैव परिधानातिदेशः । २६शस्त्वा जपमन्त्रः याज्यामन्त्रश्च । ५ अ० १४ क० ।

१निष्केवल्येति शस्त्रनाम । २यदि पृष्ठकार्य्ये रथन्तरं सामछन्दोगाः कुर्वीरन् अभि त्वा शूर नोनुमः अभि त्वा पूर्व्वपीतय इत्येतौ प्रगाथौ स्तोत्रियानुचरौ स्याताम् पृष्ठशब्देनात्र ज्योतिष्टोमाङ्गभूतं सामाभिव्यक्तमङ्गकारं सम्पाद्य स्तुतिजन्यं शास्त्रैकसमधिगम्यं कार्यमुच्यते । ३ अन्ययोरपि प्रगाथयोः स्तोत्रियानुरूपत्वोक्तिः । ४ उक्तानां सर्वेषां प्रगाथत्वम् सामगैर्द्विपदोत्तर तृचाकारतया गानेऽपि बहुचैरर्द्धर्चत्वेन शंसनम् कार्य्यम् । अनभ्यासेन तृचाकारस्तवनेऽपि ता द्व्यृचा एव न तृचाः कार्य्याः ताभिश्च शंसनं कार्य्यम् । ६बृहतीच्छन्दस्के द्व्यृच प्रगाथे चतुर्थषष्ठौ पादौ पुनरभ्यस्य पञ्चमसप्तमयोः पादयोरवसानकरणविधिः । ७ यदि तिस्रो बृहत्य एव चिकीर्षितास्तदा चतुर्थषष्ठौ पादौ द्विरभ्यस्यावसानं कार्य्यम् । काकुभेषु प्रगाथेषु तृतीयपञ्चमौ अभ्यस्यावसानं कार्य्यम् ९ प्रत्यादानेन उत्तरा अनुरूपा भवति । १० येष्वहःसु बृहद्रथन्तरं वा तयोः संहतिर्वा पृष्ठकार्य्ये भवति तत्र बृहद्रथन्तरस्तोत्रियानुरूपयोः शसनं यथा भवति तथा इन्द्रनिहवब्राह्मणस्पत्यानां शंसनम् । ११ इतरपृष्ठेषु तेषां बृहतीं कृत्वा शंसनम् । १२ यदा बृहद्रथन्तरे गायत्र्यादिषु अभ्यस्तासु तिसृषु ऋक्षु स्तुवते स्वयोनिषु वा द्विपदोत्तराकारं तदापीन्द्रनिहवब्राह्मणस्पत्यानां बृहतीं कृत्वा शंसनम् । १३येषां होत्रकाणां प्रगाथाः स्तोत्रियानुरूपाःतेऽपीन्द्रनिहवब्राह्मणस्पत्यवच्छस्याः । १४ उक्तभिन्नस्य सर्वस्य यथाश्रुतं शंसनम् । । १५ एकस्मिन् दिने सर्वधर्मभागितया उपदिश्यमानोज्योतिष्टोम एकाहयज्ञवाच्यः परिमितशस्त्रः परिपूर्णशसनयुक्तः । १६स एकाहः यद्युभयसामा बृहद्रथन्तरसामसाध्यः तस्य पवमाने योनिरनुरूपा भवतीति । १७ज्योतिष्टोमभिन्नः यःकश्चिदुभयसामा एकाहः स्यात् तत्र पवमाने यत् कृतं तस्य योनिरनुरूपा शस्या । १८निष्केवल्ये धाय्याया ऊर्द्ध्वं स्थानं योनिस्थानं तदेव शंसनस्थानम् । १९ अनेकासां सामयोनीनां सह शंसने प्राप्ते आदावेव सर्वासामाह्वानं सकृत् पृथक् वा कार्य्यम् । २० ब्राह्मणस्पत्यमरुत्वतीयसामप्रगाथानामनेकेषां सहपातेषु इन्द्रनिहवाद्दूर्द्ध्वमाह्वावः कार्य्यः । २१ तत्र

धाय्यासामप्रगाथयोः प्रदर्शनम् । २२ ऋग्विशेषे ऐन्द्री निविद् धेयेत्युक्तिः । २३ अनुशासनं स्वरः उक्थं वाची त्यस्य शस्त्रा जपः । पिबा सोममित्यादि याज्या । ५ अ० १५ क० । १ होत्रकाणां स्तोत्रियानुरूपौ प्रगाथौ याज्या चेति निर्णयः । १ तत्रैव याज्यान्तरं तत्काले सवनसंस्था निमित्तकर्म्म कार्य्यता ५ अ० १६ क० । १ उत्तमस्वरेण तृतीयसवनम् २ आदित्यपात्रेण चरणम् । ३ हूयमान पत्नाणामीक्षणे जपमन्त्रः । ४ स्तुते आर्भवे पवमाने विहृत्याङ्गारान् मनोतादिपश्विड़ान्तं पशुकर्म्म कृत्वा नाराशंससादनपर्य्यन्तं पुरोडाशादिकर्म्म कार्य्यम् । ५ नाराशंसेषु सादितेषु पुरोडाशस्य मृदुतमात् प्रदेशात् गृहीत्वा सर्व्वे चमसिनः पुरोडाशं तिस्रःतिस्रः पिण्डीकृत्य स्वात् स्वाश्चमसात् दक्षिणतः स्वान् स्वान् पितॄनुद्दिश्य चमसान्तिके अत्र पितर इति मन्त्रे स्व स्व पित्र्य पश्यतेत्युक्तिः ६ सव्याहृत आग्न्योध्रीयं प्राप्य हविरुच्छिष्टं सर्व्वे प्राश्नीयुः । ५ अ० १७ क० । १ सावित्रेण पात्रेण चरणम् । २ तत्र मन्त्रभेदः । ३ वषट्कृते होतुः शस्त्रवैश्वदेवशस्त्रोक्तिः । शंसता तेन दक्षिणदिशं विहाय सर्व्वदिग्दर्शनञ्च । ४ माध्यन्दिनसवने शस्त्रादिषु आहावमन्त्रः । ५ तत् सवितुरित्यादि तृचं वैश्वदेवतोक्तिः तत्र उत्तमायाः परिधानीयत्वम् । ६ वैश्वदेवाग्निमारुतयोः सूक्तेषु सावित्रादिनिविदोधानम् । ७ तत्र चतस्रोवैश्वदेवशस्त्रे प्रयोज्याः ८ आग्निमारुते शस्त्रे उत्तरविराजश्च पाठ्याः । ९ सूक्तानां देवतस्यैव निविद्देवतात्वम् । १० देवतेन सूक्तान्तनामात्वम् तथाच यावतां सूक्तानामेकं दैवतं तावदेक एव सूक्तान्त इत्युक्तिः । ११ वैश्वदेवाग्निमारुतयोरेकपातिन्य एव धाय्याः । १२ सर्व्वत्र प्रकृतौ विकृतौ च वैश्वदेवेशस्त्रे द्विः पच्छः अर्द्धर्चशः सकृद्भूम्युपस्पर्शने परिधाने च मन्त्रः १३ उक्थं वाचीत्यादि शस्त्रा जपः । विश्वे देवाः शृणुतेत्यादियाज्याः । ५ अ० १८ क० ।

१ सौम्यस्य चरुहविष्कर्म्मभेदस्य याज्या । २ तस्योभय पार्श्वे घृतयाज्याभ्यामुपांशुयागः । ३ तत्रैव विशेषोक्तिः । ४ अध्वर्युणाऽऽहृतस्य उद्गातृभ्य पूर्व्वं गृहीत्वा चणस्य मन्त्रः । ५ तस्मिंश्चरौ घृतयुते स्वस्वच्छायाऽऽदर्शने नैमित्तिकः मन्त्रद्वयजपः तौ च मन्त्रौ । ६ अङ्गुष्ठोपकनिष्ठाभ्यामाज्येन नेत्रे अभ्यज्य छन्दोगेभ्य प्रदानार्थमध्वर्य्यवे दानम् । ७ दर्भैर्षीकाभवाग्निषु विहृतेषु पात्नीवतस्य आग्नीध्रस्य उपांशुजपमन्त्रः । ८ नेष्टुर्विसंस्थितसञ्चारेण तमनु प्रपद्य तस्यान्तिक उपविश्य पात्नीवतस्य भक्षणम् । ५ अ० १९ क० । १ सदसोनिष्क्रम्य आग्नीध्रं प्रति गतिः । २ आग्निमारुत शस्त्रं द्रुतवस्तत्था प्रयोक्तव्यम् । ३ तस्याद्याम्नच पच्छः प्रगाथानं शंसेत् यदि सा पच्छः शस्या भवेत् तदा पादेपादेऽवच्छेदेनैव शंसेत् । ४ यदि सा अर्द्धर्चशःशस्या तदार्द्धर्चेऽवसायानवानम् । ५ उत्तमेन वचनेन द्वितीयायाः सन्तननं कर्त्तव्यम् । ६ स्तोत्रारम्भे प्राहतशिरस्कत्वादिभूमिस्पर्शान्तगुणोक्तिः । ७ परिधानीयाया उत्तमेन वचनेन भुवमपस्पृश्यावसेचनं होतृचमसे कार्य्यम् । ८ आग्निमारुते याज्याकथनम् । एतदन्तसोमयागस्याग्निष्टोमसंज्ञा ५ अ० २० क० ।

६ अध्याये । १ तृतीयसवने होत्रकाणामपि शस्त्राणि भवन्ति । २ तत्र याज्यार्थशस्त्राणां प्रदर्शनम् । ३ तदन्तस्य उक्थ्यक्रतुत्वम् । ३ सू० ६ अ० १ क० । १ यदि षोड़शी क्रतुःस्यात् तदा तृतीयसवने होत्रकशस्त्रानन्तरं तस्य कार्य्यता । अथ शस्त्रनाम षोड़शी तस्य विधानाधिकारः । २ तत्र स्तोत्रियानुरूपौ तत्र च षड्च । ३ तत्र तिस्रोगायत्र्यः । ४ एका द्विपदा पङ्क्ती । ५ तृचौ उष्णिक्ककुभौ । आधर्षं आ इति द्विपदा साच पच्छः शस्या । ६ अन्येषां तृचानां विहृतादानामुक्तिः । ७ तत्र पूर्वं तृचं द्वेधा कृत्वा शंसेत् एकैकामृचं द्वे द्वे कृत्वा शंसेत् । अस्य तृचस्य चतुष्पदात्मकत्वात् एकैकस्याः पदमेकैकामनुष्टुभमेकैका गायत्रीषु समादयेत् तथा च काद्रवतामितरभिः पादैरनुष्टुभः त्रिभिस्त्रिभिस्त्रिभिः गायत्र्यः । अनेन प्रकारेण तृचा अपि षड्भवन्तीति । ९ निविदर्त्तिपङ्क्तौ आवसम्यानुष्टुभे तृचे निविद्धेयेति परिधानीयानुष्टुभत्वप्रदर्शनम् । १० उत्तरमस्योत्तमाशिष्टा उत्तमां निविदं दध्यात् । ११ निविद्धिशेषस्य विकृप्रदर्शनम् । १२ परिधानीया त्र्यक् । तां जप्त्वा यागः ६ अ० २ क० । १ विहृतस्य षोडशिनः इन्द्रा जुषस्वेत्याद्याः सूत्रे पठिताः षड्चः स्तोत्रियानुरूपौ भवतः । २ स्तोत्रियानुरूपाभ्यामूर्द्ध्वं विहृते यच्छस्यं तदेव गन्तव्यम् । ३ द्वाभ्यां पादाभ्यामर्द्धर्चान्तेऽवसानम् अन्तगन्ते प्रणव इत्यर्द्धर्चशः शंसनम् । ४ पूर्वार्द्धे पूर्वपदानां शंसनम् । ५ गायत्रीणां पङ्क्तिभिर्विहरणम् । ६ पङ्क्तीनां द्वे द्वे शिष्येते ताभ्यां प्रणवनम् । ७ उष्णिहोबृहतीभिर्विहरणम् उष्णिहामुत्तमान् पादान् द्वौ कुर्य्यात् । ८ बृहतोभागान् कार्य

बृहतीपादैर्विहरणम् तेन अष्टाक्षरमन्त्यमाद्यं चतुरक्षरं यथा भवति तथा विहरणम् । ९ द्विपदाश्च तत्र ताः सर्वाश्चतुर्धा कर्त्तव्याः । प्रथमायां सर्वे भागा व्यूहेनाव्यूहेन च पञ्चाक्षराः उत्तरास्तु चतुरक्षराः । तत्र च प्रथमां त्रिष्टुभा विहरेत् । उत्तरास्त्रिस्रोजगतीभिः । १० उत्तमायाद्विपदाया यच्चतुर्थमक्षरं तत् प्रथमस्य भागस्यान्त्यं तदेव द्वितीयस्याद्यम् । ११ तत्र विहरणप्रकारः । १२ उत्तराश्च इतरान् पादान् पञ्चान् कृत्वाऽनुष्टुभं च कृत्वा शंसनम् । १३ स्तोत्रियानुरूपाभ्यामूर्द्ध्वं प्रोमृक्ता इत्येवदन्तस्य मन्त्रावयवस्य विहृतसंज्ञा । १४ यत्र यत्र विहृतो भवति तत्र तत्र यौ प्रतिगरौ तयोरुदाहृतिः । १५ याज्यायाजपेन मिश्रणम् । १६ द्विविधप्रकारः । १७ विहृतस्य विशेषस्ततोऽन्यत्र सर्वमविहृतेन समानम् । १८ विहृतस्यैव विशेषः । १९ आहुतं षोड़शिपात्र सनुपहावं भक्षयेत् । २० अन्ये ये भक्षितास्तेऽपि भक्षयन्तीत्यतिदेशः । २१ सुमत्सु पदवर्ज्जितमैत्रावरुणादयस्तयश्छन्दोगाः । २२ षोड़शिभक्षमन्त्र । ६ख० २क० । १ अतिरात्राधिकार । २ प्रथमे पर्य्याये ये स्तोत्रियानुरूपास्तेषामाद्यस्याद्याक्षरं विना अन्यासु सर्वासु ऋक्षु प्रथमानि पदानि द्विरुक्त्वा तत्रावसानम् । ३ शिष्टयोः पादयोः समस्य प्रणवनम् । ४ होतुराद्यां विना मध्यमानि सर्वासां पदानि सकृदुक्त्वाऽवसाय तान्येव प्रत्यादाय तैरर्द्धर्चान्तानि सन्धाय प्रणवनम् । ५ उत्तमे पर्य्याये स्तोत्रियानुरूपेषु सर्वासामृचामुत्तमानि पदानि मध्ये सर्वे मैत्रावरुणादयः द्विरुक्त्वा तैः प्रणुयुः । ६ उत्तमे पर्य्याये अच्छावाकः अन्त्यचतुरक्षराणि द्विरुक्त्वा प्रणुयात् । ७ यज्ञायाज्ञः पर्य्यायात्वम् । ८ तत्राद्यं शस्त्रं होतुः । ९ याज्याभ्य पूर्व्वप्रतीकानि पर्य्यासरंज्ञा । १० पर्य्यासोदाहरणम् । तेषां पर्य्यासंज्ञापि । ११ पर्य्यासभिन्नानां गायत्र्याणामावापत्वम् । ६ख० १ अतिरात्रे पर्य्यायेषु समाप्तेषु छन्दोगा आश्विनशस्त्रेण स्तुवते । २ शंसिष्यन् विशंस्थितसञ्चरेण निष्क्रम्याग्नीध्रीये जानुभक्तेन षड़ाहुतीर्जुहुयात् तत्र मन्त्राः तत्र आज्यलेपप्राशनं तूष्णीमेव कुर्य्यात् । ३ होमार्थं पृथक्, कृतस्याज्यस्य निःसाज्यं प्राश्य अप उपस्पृश्याचामेत् आचामनेऽपि नाशुद्धिरित्यत्र देवरत्र इत्यादिश्रुतिनिदर्शनम् । ४ प्राश्य प्रतिप्रसृप्य पश्चात् सदस्यानस्य, समस्तजङ्घोरुरत्निभ्याम् उपस्थं कृत्वा (पादाङ्गुलीभिर्भूमिमाश्रित्य) उत्पतिष्यन् पश्चौव उपविशेत् । ५ कृतोपस्थोपवेशनस्यैव आश्विनशंसनम् । ६ एकपातिन्याः प्रतिपदः पञ्चः शंसनम् । ७ प्रतिपदा गायत्र्याग्नेयस्योपसन्तननम् । ८ स्तोत्रशंसने प्रातरनुवाकधर्म्मातिदेशः । ९ त्रयो वार्हतास्तृचा स्तोत्रियाः प्रगाथा वा तान् यथादैवतं यथाश्रुतं शंसेत् । १० अन्येषु छन्दःसु यथादैवतं शंसेत् । ११ द्विपदाः पच्छः शंसेत् । १२ एकपदाः प्रणवेनोपसन्तनुयात् । १३ एकपदाभ्यो याउत्तराः ताः एकपदान्तैः प्रणवैरुपसन्तनुयात् । १४ अर्द्धर्चशस्येषु पच्छः शस्याः पच्छः शस्येषु चार्द्धर्चशस्या यास्ता उद्धरेत् । १५ सूक्तन्यायेन वा शंसनम् गोतार इति विकल्पः । त्रिष्टुब्जगतीभ्योऽन्यत्र विशेषः । १७ उदिते सूर्य्ये प्रतिप्रियतममिति यस्योत्तमेन प्रणवेन सूर्य्योनोदिव इत्येतत् सन्धाय तदादीनि सौर्य्याणि सूक्तानि शंसेत् । १८ सौर्य्यसूक्तानि सूर्य्योनोदिव इत्यादीनि दर्शितानि । १९ बृहस्पते अति यदर्य इत्यादि परिधानीया । २० प्रतिपदे परिधानीयाया आह्वावत्वविधानम् । २१ यदि बृहत्साम कुर्य्यात् तस्य योनिम् त्वामिद्धि हवामह इति तृचम् । एतेषु प्रगाथेषु द्वितीयाम् इन्द्र क्रतुमित्यस्योपरिष्टात्, तृतीयाम् अभि त्वेत्यस्योपरिष्टात् शंसेत् । २२ तत्र विकल्पः । २३ आश्विनस्यैव पुरोडाशेन चरणम् । तत्र अनुवाक्या प्रैषः याज्याद्वयम् अध्वर्य्यो आनयानस्य क्रमेणोक्तानि । २५ आश्विनपुरोडाशस्य स्विष्टकृतावरणे संयाज्याद्वयम् इत्यन्तोऽतिरात्रः क्रतुः । ६ख० ५क० । १ नैमित्तिककार्य्यभेदकथनायोत्तरग्रन्थः यदि सर्वे पर्य्यायाः प्रयुक्ता न भवन्ति इत्येवमाशङ्का स्यात् अतिक्रान्ता वा रात्रिः सा पर्य्यायाणामाश्विनस्य चापर्य्याप्तेति तदा सर्वेभ्यःपर्य्यायेभ्यः एकं पर्य्यायं समुद्धृत्य कुर्य्युः । २ तत्र करणप्रकारः । प्रथमात् पर्य्यात् होता स्वं भक्षमाददीत । मैत्रावरुणब्राह्मणाच्छंसिनौ द्वितीयात् पर्य्यायात् स्वे भक्षे, उत्तमादच्छावाकः स्वमेव भक्षमित्येवं प्रकारः । ३ यदा तु प्रथमः पर्य्यायः प्रयुक्तः मध्यमोत्तमावप्रयुक्तौ तयोराश्विनस्य चापर्य्याप्ता रात्रिरित्याशङ्का स्यात् तदेवं कुर्य्युः । द्वौ होतृमैत्रावरुणौ प्रथमात्, ब्राह्मणाच्छंस्यच्छावाकौ तु उत्तमात् भक्षमाददीत । ४ सर्वेषां वा सोमनिर्ह्णवः । ५ सोमनिर्ह्णवे भक्षनिर्ह्णवप्रकारः । ६ सोमनिर्ह्णवसम्भरणयोर्निह्नवविधानम् । ७ एके याज्ञिकाः होतृवर्ज्जं सोमनिर्ह्णवं कुर्व्वन्ति । ८ अग्ने ! विवस्वदुषस इत्येतत् आश्विनीय एकस्तोत्रियः । ९ आग्नेये क्रतौ तस्य एकस्तोत्रियस्य बृहतीछन्दः । १० तीषि बहिष्पतानि

आश्विने पुरस्तात् शंसनम् यथाश्रुतमनुदैवतं ११ । १२ छिन्नामच्छिन्नां वा नद्यादिभिरव्यवधाने सुत्या-सन्निपाते सम्भवोदोषः । १३ तथा दोषसम्भावनायाम् आ सवनदेवतावाहनात् संप्रकृतरां कृत्वा कर्म्म कार्य्यम् । १४ सम्भवे दोषे सति मरुत्वतीये शस्त्रं यस्मिन् सूक्ते निवि-द्धीयते तस्य सूक्तस्य पुरस्तादिदं सूक्तं शंसेत् । १५ निष्के-वल्ये बोजात इवेति सूक्तशंसनम् । १६ वैश्वदेवशस्त्रे वैश्व-देवसूक्तस्य पुरस्तात् शंसनम् । १७ एतेषु आगन्तुं निविदादध्यात् यस्य पुरस्तात् शस्त्राणि सूक्तानि विहि-तानि तान्युद्धरेत् । १८ निविदं स्थाने यद्यतिहरेत् तदा यस्मिन् सूक्ते निविदतिपक्षा तत्पूर्व्वापरभूतं समाप्य आगन्तुकात् दैवतात् पुरस्तात् "मा प्रगामेति" सूक्तम-श्चितं शस्त्राऽन्यस्मिन्नागन्तुके तद्दैवतानां निविदं दध्यात् । ६अ० ६क० । १ सवनार्थस्य सोमस्य सवने समाप्ते अतिरेके सोमातिरेकसंज्ञा । स च स्तुतशस्त्रो-पजननो भवति तत्र छन्दोगैः स्तोतव्यं, बह्वृचैः शस्तव्यम् । २ तत्र प्रातःसवने स्तोत्रियानुरूपयाज्याकथनम् । ३गायत्र्या वैष्णव्या यजनं नेति विकल्पः । ४ गायत्रादि-मते ऐन्द्रावैष्णव्या यजनम् । ५ "ऐन्द्राग्नीश्वावो" च सं वां कर्म्मणेत्यादि" त्रिष्टुप्छन्दस्त्वात् यजने प्राप्ता । ६ माध्यन्दिनसवने स्तोत्रियानुरूपयोः याज्यायाश्च उक्तिः। ७ तृतीयसवने यद्यग्निष्टोमे सोमातिरेकः तदा उक्थ्यं कुर्य्यात् । यद्युक्थ्ये सोमातिरेकस्तदा षोडशिनं कुर्य्यात् यदि षोडशिनि तथा स्यात् तदाऽतिरात्रं कुर्य्यात् इत्युक्तिः। ८अतिरात्रेऽपि सोमातिरेकस्तदा प्रतन्वे इत्यादि स्तोत्रियानुरूपौ कृत्वा माध्यन्दिनसवनवत् शेषकरणम् । ९ माध्यन्दिनीययाज्याकथनम् ६अ० ७क० । १ क्रीते सोमे नष्टे दग्धे वा प्रायश्चित्तविधिः । २ यदोऽपिधा-नानि हविर्धानानि अनन्तरं कुर्युरिति पूर्व्वपक्षः। ३अन-न्तरं वा तदाचरणमिति सिद्धान्तः।४सोमेन यागविच्छि-त्यतोऽन्यसोमविधानेन सोमाभिषवः । ५ सोमान्तरालाभे पूतिका फाल्गुनानि वा संगृह्याभिषुणुयुः। (पूतिका सोम-सदृशी लताकृपा फाल्गुनानि च तत्सदृशा ओषधिभेदः अभियुक्तोपदेशेन स्वरूपतोऽज्ञेया:) । ६ फाल्गुनालाभे दूर्व्वादिसंसृष्टपूतिकाभिषवणम् : ७दीक्षासत्ताया क्रीतसोम-नाशे वा सोमनाशात् दीक्षाकालवर्द्धनम् उपसत्सु आसाद सोमनाशे उपसत्कालवर्द्धनम् । तत्र सर्व्वत्र प्रधानका-लानुरोधेन कालवर्द्धनम् । कालवर्द्धनेऽपि सोमालाभे प्रतिनिधिना प्रधानकालमध्ये यागसमापनम् इत्येकः पक्षः । भूः स्वाहेति प्रायश्चित्तं कृत्वारब्धं प्रयोगं विसृज्य सोमं सम्पाद्य पुनर्यागकरणमिति सिद्धान्त पक्षः । ८ सुत्यासु नष्टे सोमे तदलाभे प्रति-निधिप्रयोगकरणमेव न तत्राहर्वृद्धिः प्रयोगत्यागोवेति सिद्धान्तः । प्रातःसवने सोमे नष्टे प्रतिनिधिद्रव्यम-भिषुत्य तद्रसेन प्रतिदुग्धेमिश्रणम् ( सद्योदुग्धं पयः प्रतिधुक् ) । १० माध्यन्दिने तत्र पक्वपयोमिश्रणम् । ११ तृतीयसवने पूर्व्ववत् दधिमिश्रणम् । १२ फाल्गुना-नां प्रतिनिधित्वेन पक्षे आयन्तीयं साम प्रशस्त-साम भवति वारवन्तीयञ्च यज्ञायज्ञीयस्थाने । १३ प्रशस्तसाम तु तत्रविषये आयन्तीयं साम यज्ञायज्ञीयं तु यथोक्तमेवेति गृह्यमतम् । १४ प्रतिनिधिना उदवसानी-यान्त यज्ञं समाप्य तत्राहेऽयादुदवसाय सोमं सम्पाद्य पुनर्यागः कार्य्यः ।१५ पुनः प्रयोगे पुनर्दीक्षया । १६यद्यु-पासेऽपि प्रतिनिधौ यागात् प्राक् सोमलाभः तदा-प्रतिनिधिद्रव्यत्यागेन यथोक्तमेव सोमेन यजनम् प्रतिनि-धिनिमित्तानि सोमश्रपणादीनि न भवन्ति । यदा पुनर-हर्गणेषु सुत्यासम्भवात् प्रतिनिधिभिर्वैकमहः क्रियते तदा सत्रप्रयोगं समाप्य उदवसाय तद्देशाहः पुनः प्रयुञ्जीरन् तथा च आरब्धं फलसाधनं यज्ञं प्रयुज्य-समाप्यैतत् कर्त्तव्यं नायान्तरमेकस्याह्नः प्रयोगः एका-हेषु प्रतिनिधावुपात्ते प्रतिनिधिभिर्वेह्रा पुनर्याग ।।१६ख० ६अ० ८क० । १ दीक्षितानां मध्ये कस्यचित् व्याध्या-द्युपतापे प्रायश्चित्तविधानम् । २जीवानामस्यता इत्यादि मन्त्रचतुष्टयेन या ओषधीरिति सूक्तेन च पीडितं जपयित्वाभिमार्जनं कार्य्यम् एतत्सर्व्वं ब्रह्मणा कार्य्यम् । ३ अनुमार्जने मन्त्रभेदाः । ४ एवमुपतप्तस्य कर्म्मणि कृते सर्वेषां यथास्थानं गतिः । ५ तस्मिन्निमित्ते तातार-मिन्द्रमित्याद्या ऋक् नाम्ना कार्य्यं स्वाद्या भवति । ६ तस्मिन् वैश्वदेवसूक्तादिजपः कार्य्योन्तरञ्च । ७रोगनिवृत्तौ यथो-पदिष्टतया प्रकृत्यैव सर्व्वं कार्य्यम् । ७ख०६अ०६क० । १ कृते तस्मिन् सतीर्थेन निर्गमय्य अवभृतार्थं समुत्क्षिप्ते देशे कृतस्य प्रेतालङ्कारादिकरणम् । २ कृतस्य अग्निमन्थ-सोमनवनापनम् । ३छमीरेवाणुलेपनम् । ४ नवकृत-मालापरिधापनम् । ५प्रेतस्य देहस्यान्त्राणि निःपुरीषाणि कृत्वा पृषदाज्येन पूरयित्वा पुनर्देहे सन्नीयानी सेवनतम् । ६ कृतस्य वाससा वेष्टनप्रकारः । ७ तस्यैव

ज्याद्यनुयाजान्ता नाज्यभिक्षा न बर्हिष्मन्तौ प्रयाजानुयाजावग्निमन्तौ तौ च गायत्रौ । ६ तत्र चारव्यं हविः हविर्दोषे सति यागावसरे हविरेवोत्पाद्य यष्टव्यम् । ७ क्षिप्तिष्टयागे अग्नीवरुणौ देवते अव ते हेडोवरुण नमोभिरिति द्वे ऋचौ तत्र साधनम् । अत्र च निगदाभावात् अग्नीवरुणावादिश्य च त्वं न इत्यृचा यष्टव्यम् । ८ अवभ्रा-निष्टौ नमोवरुणाय इति मन्त्रेण दक्षिणामुपादायोदके निदध्युः । ९ तत्र आचमने मन्त्रत्रयम् । १० आचमनप्रकारः । ११ यौवाक्रमाचमनं कृत्वा स्नानाक्रमाचमनं कृत्वा प्रत्याव्रजुः तत्र मन्त्राः । १२अदीक्षितानामुक्तमन्त्रैराप्लवनं वाऽभ्युक्षणं वा । १३ उक्तेन स्नानविधिना सर्व्वानुदकादुत्तारयेत् । १४ उक्ता उद्गीयमानाः उत्तेतरदित्यादि मन्त्रं जपेयुः । १५उदकादुत्तीर्य उद्वयं तमस इत्यादि मन्त्रं जपेयुः । १६ इत ऊर्द्ध्वं संस्थाजपपर्य्यन्तं हृदयसूतेन समानं तथा च अनवेक्षमाणाः इत्यादयः समिदाधानान्ताः सर्व्वाः कार्य्याः । १७ अपहतकर्म्मणः संस्थाजपं कुर्य्युः १७सू० ६ख० १२क० । १ गार्हपत्ये उदयनीयया चरणम् । २ सा च प्रायणीयया तुल्या । ३सर्व्वसाम्येऽपि अयं विशेषः । तत्र चतस्र आज्यहविषो देवता अदितिः पञ्चमी चरुहविः पथ्या स्वस्तिस्तत्र प्रथमा इह चतुर्थी भवतीति । ४ याज्यानुवाक्ये च विपरीते तत्र या याज्या सा इह अनुवाक्या । तत्रानुवाक्या इह याज्या । ५ प्रायणीयायाः चत्वार एवात्र चत्वारः । ६ संयाज्याया ऐकरूप्यं न याज्यात्वेन वैपरीत्यम् । ७उदयनीयायां समाप्तायां मैत्रावरुणदैवतोऽनूबन्ध्यः पशुः । ८ सदसि आसीनैर्होत्रादिभिः पशुः कार्य्यः स च वारुणीय इत्येके ९ उत्तरवेदिसमीपे आसीनैस्तैः कार्य्य इत्येके । १०तत्र नैमित्तिकः कर्म्मभेदः । अनूबन्ध्यापशोर्वपायां हुतायां यद्येकादशिन्यपतः कृता तदाऽग्निषोमीयेण चत्वरेण गत्वा गार्हपत्ये त्वाष्ट्रेण पशुना चरणम् । ११ त्वाष्ट्रपशुकरणप्रकारः । त्वाष्ट्रं पशुं यूपाञ्जनादि कृत्वा उत्सृजेत् इत्येकः पक्षः । १२यदि अध्वर्य्यव आज्येन तं पशुयागं समापयेयुः तदा होतापि तथा कुर्य्यात् १३ आज्येन समाप्ते अनेके पक्षाः । ब्राह्मणोक्तद्विधावेद्याः ।१४ आज्येन करणपक्षे पशुवत् मन्त्रप्रयोगः । १५ अद्यत्र देविका हवींषि अनुनिर्व्वपेयुः धाताऽनुमतिः राका सिनीवाली कुहूरिति पञ्च देवताः।१६तत्र धातृकरणस्थाने अन्यभेदः ।१७एषाञ्च पञ्चानां देव्य इति संज्ञा । देवीपक्षे सूर्य्यः द्यौः उषा गौः पृथिवीति पञ्च देवताः।१८तत्र सूर्य्यस्य चातुर्मास्येभ्यो याज्यानुवाक्ये पाठ्ये ।१९अनुबन्ध्यपशुद्रव्यस्यालाभे मैत्रावरुणीया पयस्या कर्त्तव्या। २०सा च आज्यभागादिः वाजिनान्ता कार्य्या ।२१ ऋत्विजो वाजिनं भक्षयेयुः ।सत्रविषये सर्व्वे भक्षयेयुः । २३ उदवसानीयया चरणं तत्करणप्रकारः । २४ प्रकृतेन ज्योतिष्टोमाख्येन सोमेन यजमानदक्षिणीयया दीक्षां प्रविष्टः स सोमेनेष्ट्वा अवभृथेष्टौ दीक्षामोचनं कृत्वा तस्मादुत्थित एवानूबन्ध्यान्तं प्रयोगं समाप्य तदन्तेऽग्नीनरण्योः समारोप्य उदग्देवयजनात् यो देयस्त्वित्यग्नीन्मथित्वोदवसानीयया यजते इत्यक्षरोऽर्थः । अपरस्तु यदि सर्व्वे दीक्षिताः स्युः सत्रस्येति दीक्षिता उत्थिता इति पाठः कर्त्तव्यः समासपाठेऽर्थस्य दुर्गमत्वात् यदि सर्व्वे दीक्षिताः स्युस्तदा पूर्व्ववदेवानूबन्ध्यान्तं कर्म्म कृत्वा सर्व्वे स्वान् स्वानग्नीन् स्वे स्वे अरणीषु पृथक् पृथक् समारोप्य पूर्व्ववन्मथित्वा पृथगेवोदवसानीयया यजेरन्निति विशेषतोऽर्थः । सेयमुदवसानीया एवंरूपा भवति । पुनराधाने याम्नाता इष्टिस्तद्रूपा । सा च अविकृता अविभक्ताज्यभागविकारा उपांशुत्वरहिता केवलमग्निदेवता । ६ख० २४क०

इत्थं पूर्व्वार्द्धस्य षडध्यायोक्तस्य प्रतिसूत्रमभिधेयार्था दर्शिताः उत्तरार्द्धमपि षड्ध्यायोक्तम् बाहुल्यभयात् तत्र प्रतिसूत्रप्रतिपाद्यार्था न दर्शिता मूलग्रन्थे द्रष्टव्याः। संक्षेपेणायमर्थस्तत्रत्यः । सप्तमाष्टमाध्याययोः सत्राधिकारेण इतिकर्त्तव्यतादिदर्शनम् ।नवमे अहीनैकाहाधिकारेण इति कर्त्तव्यताकलापः। दशमे रात्रिसत्रविवरणम्। एकादशे कामना विशेषेण तदाचरणम् गवामयनचरणञ्च । द्वादशे गवामयनस्यैव दिनसङ्कलनादि । प्रागस्य चतुरध्यायात्मकतोक्तिः प्रामादिकी।

तद्गृह्यसूत्रे प्रतिपाद्यविषया यावदभिधीयन्ते । तत्र प्रथमाध्याये।स्थालीपाकाद्युपाकर्म्मान्तानि कर्म्माणि । १ उक्तव्याख्यानप्रतिज्ञा । २ पाकयज्ञप्रकारः । ३ पाकयज्ञप्रकारस्य त्रैविध्योपदेशः । ४ एतान्यपि कर्म्माणि नित्यानि श्रौतैस्तुल्यानि आहिताग्नेरपीत्युक्तिः । ५ पाकयज्ञानामर्थवादरूपं ब्राह्मणम् । १अ० १क० । १ सायम्प्रातःपक्वहविर्होमः । २ देवयज्ञः । ३ स्थालीपाकादेव बलिहरणम् । ४ बलिप्रदानदेवतानिर्णयः । ५ दिक्षु देवताभ्यो देवतापुरुषेभ्यो बलिहरणम् । ६ मध्ये ब्रह्मणे ब्रह्मपुरुषेभ्यश्च बलिहरणम् । ७ मध्ये विश्वेभ्यो

देवेभ्यो बलिहरणम् । ८ मध्ये, दिवि, दिवाचारिभ्यो भूतेभ्यो बलिहरणम् । ९ रात्रौ, नक्तञ्चारिभ्यो भूतेभ्यो बलिहरणम् । १० सर्व्वशेषे रक्षोभ्यो बलिहरणम् । ११ पितृभ्यः प्राचीनावीती भवन् निनयादिं दक्षिणावीतीत्युक्तिः । १अ० २क० । १यज्ञोपवीतकर्म्मणां होमविधिः । २ पवित्राभ्यामाज्यस्योत्पवनम् । ३पवित्रलक्षणोत्पवनयोर्निर्णयः । आज्यहोमेषु परिस्तरणं कार्य्यं वा न वेति निर्णयः । ५ पाकयज्ञेषु आज्यभागौ कार्य्यौ वा न वेति निर्णयः । ६ धन्वन्तरियज्ञं शूलगवञ्च वर्जयित्वा सर्वेषु पाकयज्ञेषु ब्रह्मा कार्य्यो वा नवेति निर्णयः । ७ अनादेशे नामधेयेन होमः । ८ अनादेशे देवतानिर्णयः । ९ एकवर्हिरादियज्ञाः समानकालिकाः । १० पूर्व्वोक्तस्य प्रमाणार्थं यज्ञगाथोदाहरणम् । १अ० ३क० । १चौलकर्म्मादीनां कालविधिः । २एके आचार्य्याः सर्व्वस्मिन् काले विवाहमिच्छन्ति । ३ आज्यहोमः । ४ जयाहुतयोऽभ्यातानाहुतयश्च । ५ उभयाहुतिसम्बन्धः । एके अनादेशाहुतिमिच्छन्तीत्युक्तिः । ७तेषामाहुतयः । १अ०४क० ।१ वंशपरीक्षा । २ वरगुणकथनम् । ३कन्यागुणकथनम् ।४ परीक्षान्तरम् । ५ क्षेत्रादिमृत्तिकाभिः परीक्षा । ६ पिण्डानां ग्रहणेन फलकथनम् । १अ०५क० ।१ ब्राह्माद्यष्टविधविवाहोक्तिः । १अ० ६क० । १ विवाहे देशधर्म्मग्रामधर्म्मकुलधर्म्माणां कर्त्तव्यता । २ जनपदादिधर्म्मस्य सर्व्वत्र समानत्वमित्युक्तिः । ३ पाणिग्रहणविधिः । पुत्रकामिना अङ्गुष्ठस्य ग्रहणम् । ४ दुहितृकामिना अङ्गुलीग्रहणम् । ५ उभयकामिना अङ्गुष्ठाङ्गुलिसहितहस्तस्य ग्रहणम् । ६ अग्न्युदकुम्भप्रदक्षिणे वधूजपमन्त्रः । ७अश्मारोहणे आचार्य्यजपमन्त्रः । ८लाजहोमप्रकारः । भ्रात्रादिर्हि लाजानावपतीत्युक्तिः । ९ परोजामदग्न्यश्चेत् त्रिर्लाजानावपति । १० लाजेषु हविरवधारणम् । ११ वरकर्त्तृकमवदानम् । १२अवदानस्य धर्म्मान्तातिदेशः । १३ वरकर्तृकहोममन्त्राः । १४ अनन्तरं शूर्पपुटेन वधूकर्तृकलाजदानम् । १५ एके लाजानाम् पश्चात् परिणयनमाहुरित्युक्तिः । १६ शिखाविमोचनम् । १७दक्षिणशिखाविमोचनम् । १८ उत्तरशिखाविमोचनम् । १९ सप्तपदीगमनम् । २० उभयोः शिरसि उदकुम्भसेचनम् । २१ग्रामान्तरगमने अन्तरा वसतिः ।२२ ध्रुवारुन्धत्यादिं दृष्ट्वा वाग्विसर्जनम् । १अ०७क० ।१ नावारोहणमन्त्रः । २नावारोहणमन्त्रः । ३उदकादुत्तरणमन्त्रः । ४वधूर्यदि रोदिति तदा अभिव्येष्य जपेत् । ५विवाहाग्निं गृहीत्वा गन्तव्यम् । ६ देशवृक्षचतुष्पथादौ जप्यमन्त्रः । ७पथिका ईक्षकाः सन्ति चेत् तदीक्षणमन्त्रः । ८ गृहप्रवेशमन्त्रः । ९ उपवेशनदधिप्राशनहृदयालम्भनादयः । १०विवाहार्थं ब्रह्मचर्य्यधारणादिः । ११ त्रिरात्रं द्वादशरात्रं वा ब्रह्मचर्य्यधारणम् । १२ संवत्सरं वा ब्रह्मचर्य्यधारणम् । १३व्रतानन्तरं वधूवस्त्रदानम् । १४ब्राह्मणेभ्योऽन्नदानम् । १५ स्वस्तिवाचनम् । १अ० ८क० । १ पाणिग्रहणप्रभृतिगृह्याग्निपरिचरणम् । २ अग्नौ नष्टे प्रायश्चित्तं कृत्वा पुनरग्निपरिग्रहणम् । ३ एके अग्न्युपघाते पत्न्या उपवासं वदन्तीत्युक्तिः । ४तदग्निपरिग्रहणं अग्निहोत्रविधानेनेत्युक्तिः । ५होमादिकालव्यवस्था ।६होमद्रव्याणि । ७ उक्तद्रव्याभावे द्रव्यान्तरप्रतिनिधिः। ८सायम्प्रातर्होमः । १अ०९क०। पार्व्वणस्थालीपाकः । २भोजननियमः । ३ दभ्रवर्हिषोरुल्लम्बनम् । ४ तद्देवता । ५ काम्यदेवता । ६ शूर्पमुष्टिनिर्व्वपणम् । ७ शूर्पमुष्टिप्रोक्षणम् । ८ अवघातप्रक्षालनेनानेकत्र श्रपणानि । ९ एकत्र श्रपणं वा ।१०नानाश्रपणप्रकारः । ११ एकत्र श्रपणप्रकारः । १२ आज्योत्पवनादिः । १३ आघाराज्यभागौ स्विष्टकृद्धोमश्च । १४ आग्नेयादिहोमः । १५ आज्यभागयोर्होमस्थलकथनम् । १६ अवदानस्य उपवेशननियमः । १७ अग्नेरुत्तरपूर्व्वदेशे होमः।१८हविःस्थापनदेशः ।१९पश्चाद्धविर्होमनिर्णयः । २०स्विष्टकृद्धोमनियमः । २१स्विष्टकृद्धोमे हविःशेषाभावः ।२२स्विष्टकृद्धोममन्त्रः ।२३पूर्णपात्रनिनयनम् । २४ पूर्णपात्रनिनयनकालः ।२५पाकयज्ञतन्त्रम् । २६दक्षिणादानम् । १अ०१०क०। १ पशुकल्पः ।२अग्न्युपस्पर्शनम् । ३ पशुप्रोक्षणम् । ४पशुनियोजनम् । ५ अन्यमतेन पशुनियोजनम् । ६ उल्मुकाहरणम् । ७ शामित्रोक्तिः । ८ पश्वालम्भनम् । अन्वारब्धे कर्त्तृकजपनम् । १० वपाहोमः । ११स्थालीपाकश्रपणम् । १२ पश्ववदानं स्थालीपाकहोमश्च । १३अवदानवर्जितहोमो वा । १४ प्रत्येकावदाने द्विर्द्विरवदानम् । १५ तूष्णीं हृदयशूलाचरणम् । १अ० ११क० । १ चैत्ययज्ञे स्विष्टकृतः प्राक् बलिहरणम् । २ विदेशस्थचैत्यपक्षे पलाशदूतेन बलिहरणम् । ३ भयस्थानगमनायां दूताय शस्त्रदानम् । ४ नद्यन्तरा चेत् प्लवदानम् । ५ धन्वन्तरि

चैत्यश्चेत् पुरोहिताय बलिहरणम् । १प्र० १२क० । १ पुंसवनम्, अनवलोभनञ्च । २ तृतीयमासे पुष्यनक्षत्रे उपोष्य तुल्यवर्णवत्साया गोर्दधिमात्रया प्राशनम् । ३प्रश्नवचनम् । ४ त्रिःप्राशनम् । ५ दूर्वारसस्य नासिकायां सेचनम् । ६ नस्तस्करणम् । ७ हृदयस्पर्शनमन्त्रः । १प्र० १३क० । १ सीमन्तोन्नयनं कर्म । २ तस्य कालनिर्णयः । ३ होममन्त्रः । ४सीमन्तव्यूहनम् । ५चतुर्धा व्यूहनम् । ६ वीणागाथकप्रेषणम् । ७गेयगाथाकथनम् ।८ब्राह्मण्यो यद्ब्रूयुस्तदाचरणम् । ९दक्षिणादानम् । १प्र०१४क० । १ जातकर्म । २ मेधाजननजपः । ३ अंसस्पर्शनम् । ४ नामकरणम् । ५नामलक्षणम् । ६ चतुरक्षरं वा नाम । ७नाम्नि कामनाभेदेनाक्षरनिर्णयः ।८पुं नामधेयानि युग्माक्षराणि । ९ स्त्रीनामधेयानि अयुग्माक्षराणि । १०येन नाम्ना उपनीतः तेनाभिवादनं कुर्य्यात् । ११ मूर्द्धावघ्राणे मन्त्रजपः । १२ कुमार्य्या अमन्त्रकं कर्म ।१प्र०१५क०। १ अन्नप्राशनम् । २ अजमांसप्राशनम् । ३तित्तिरिमांसप्राशनम् । ४ घृतौदनप्राशनम् । ५ अन्नप्राशनमन्त्रः । ६ कुमार्य्या अमन्त्रकम् । १प्र०१६क०१ चौलं कर्म । २पूर्णपात्राधानम् । ३ कुमारावस्थानं द्रव्यासादनञ्च । ४ कुशपिञ्जूलहस्तकुमारपित्रवस्थानम् । ५ ब्रह्मा वा कुशपिञ्जूलानि धारयेत् । ६ अपां निनयनमन्त्रः । ७ शिरउन्दनमन्त्रः । ८ कुशपिञ्जूलनिधानमन्त्रः । ९ तेषु ताम्रक्षुरस्थापनमन्त्रः । १० केशच्छेदनमन्त्रः । ११ केशस्थापनम् । १२ द्वितीयस्य तृतीयस्य मन्त्रौ । १३चतुर्थस्य मन्त्रः । १४ एवमुत्तरतस्त्रिर्वारम् । १५क्षुरधारशोधनमन्त्रः । १६ नापितानुशासनम् । १७ केशसन्निवेशकरणम् । १८ कुमार्य्या अमन्त्रकम् । १प्र०१७ १ गोदानं कर्म । २ तस्य कालनिर्णयः । ३ मन्त्रे केशशब्दे तु श्मश्रुशब्दकरणम् । ४ श्मश्रुवपनम् । ५क्षुरधारशोधने विशेषमन्त्रः । ६ नापितानुशासनम् । ७ आचार्याय दानप्रार्थना । ८ गोमिथुनदक्षिणादानम् । ९ संवत्सरव्रताचरणादेश । १प्र० १८क० । १ उपनयनम् । अष्टमे वर्षे ब्राह्मणस्य । २ गर्भाष्टमे वर्षे वा । ३ एकादशे वर्षे क्षत्रियस्य । ४ द्वादशे वैश्यस्य । ५ आ षोडशात् ब्राह्मणस्य नातीतः कालः । ६आ द्वाविंशात् क्षत्रियस्य, आ चतुर्विंशात् वैश्यस्य ।७अत ऊर्द्धम् अचीर्णप्रायश्चित्तान् नाध्यापयेत् । ८ संवीतधर्मनिर्णयः । ९ परिधेयवासोनिर्णयः । १० मेखलाधिकारः ।

११ जातिभेदे मेखलानिर्णयः । १२ दण्डाधिकारः । १३ जातिभेदे दण्डनिर्णयो दण्डपरिमाणञ्च । १प्र०१९ क० । १ सर्वे दण्डाः सर्वेषां वा भवन्ति । २आचार्य्यान्तिके उपवेशननिर्णयः ।३ब्रह्मचारिण उपवेशननिर्णयः। ४ साङ्गुष्ठपाणिग्रहणम् । ५पाणिग्रहणमन्त्रः । ६आदित्यावेक्षणम् । ७ तत्र जप्यमन्त्रः । ८प्रदक्षिणावर्त्तनम् । ९ हृदयस्पर्शनम् । १० अमन्त्रकं समिदाधानम् । १प्र० २०क० । १ एकमते मन्त्रेण समिदाधानम् । २ मुखमार्ज्जनम् । ३तेजसा मार्जनम् ।४ सावित्र्युपदेशप्रार्थना । ५ सावित्र्युपदेशः । ६सावित्रीवाचनम् । ७ ब्रह्मचारिणो हृदयदेशे जङ्घाङ्गुलिस्थापनं मन्त्रश्च ।१प्र०२१क०। १ब्रह्मचर्य्यादेशः । २ ब्रह्मचर्य्यादेशमन्त्रः । ३ वेदब्रह्मचर्य्यकालनिर्णयः । ४ वेदग्रहणान्तं वा ब्रह्मचर्य्यं भवति । ५ भिक्षाकालनिर्णयः । ६ समिदाधानकालनिर्णयः । ७प्रथमभिक्षानिर्णयः । ८भिक्षामन्त्रः । ९भैक्ष्यमाहृत्याचार्य्याय निवेदनम् । १० पाकयज्ञः । ११ आघाराज्यभागान्तहोममन्त्रः। १२ सावित्र्या द्वितीयम्। १३ महाव्याहृत्यादिहोमः । १४अभिव्यस्तं तृतीयम् । १५सौविष्टकृतं चतुर्थम् । १६ वेदसमाप्तिवाचनम् । १७ ब्रह्मचर्य्यव्रतधारणम् । १८ मेधाजननम् । १९ उदकुम्भाभिषेकवाचनम् । २० व्रतादेशशेषः । २१ अनुपेतस्य विधिविशेषः । २२ उपेतस्य विधिः । २३ व्रतमव्रतञ्च । २४ गोदानमनुक्रमम् । २५ कालोऽनिरुक्तः । २६ प्रायश्चित्तार्थं सावित्र्यन्तरम् । १प्र० २२क० । १ ऋत्विग्लक्षणम् । २ एके युवानं वदन्ति । ३ वरणनिर्णयः । ४ वरणविशेषनिर्णयः । ५ सदस्यवरणम् । ६ वरणविशेषः । ७ होतृवरणमन्त्रः । ८ ब्रह्मवरणमन्त्रः । ९ अध्वर्य्यादिवरणमन्त्रः । १० होतृप्रतिज्ञा । ११ब्रह्मप्रतिज्ञा ।१२अपरप्रतिज्ञा जप्यमन्त्रश्च ।१३वाक्यलक्षणम् ।१४ । १५ । १६ । १७ । १८ आगामनिर्णयः।१९सोमप्रवाकप्रश्नः।२०कल्याणैः सह संप्रयोगः । २१तत्र निषिद्धानि । २२ आज्याहुतिहोमः । २३अनाहिताग्निस्वस्त्यशेषः । १प्र० २३क० । १ऋत्विजे मधुपर्काहरणम् । २ एवं स्नातकाय आगताय, विवाहार्थिने । ३ राज्ञे उपस्थिताय । ४ आचार्य्यश्वशुरपितृव्यमातुलेभ्यः । ५ मधुपर्कस्वरूपनिर्णयः । ६ तदलाभे तद्द्रव्यप्रतिनिधिः । ७ आसनपाद्यार्घ्याचमनीयानि गां च त्रिस्त्रिर्वेदयेत् । ८ आसनग्रहणे मन्त्रप्रकारौ ।

९ पादप्रक्षालननिर्णयः । १० वामपादादिप्रक्षालनम् । ११ अर्घ्यग्रहणम । १२ अर्घ्यग्रहणमन्त्रः । १३ मधुपर्कग्रहणमन्त्रः । १४ मधुपर्कग्रहणादिमन्त्राः । १५ निवेदनम् । १६ मधुपर्कभोजनम् । १७ सर्व-भक्षणनिषेधः । १८ तृप्तिनिषेधः । १९ अवशिष्टमधुपर्क-प्रक्षेपः । २० सर्व्वभक्षणं वा । २१ आचमनम् । २२द्वि-तीयाचमनम् । २३ आचान्तोदकाय गोदानम् । २४आ-लम्भनपक्षे जपोऽनुज्ञा च । २५ उत्सर्गपक्षे उत्स-र्गमन्त्रः । २६ मधुपर्काङ्गं भोजनममांसं न भवति । १अ०२४क० ।

२ अध्याये । १ श्रवणाकर्म्मकालः । २ सक्तुकलश-दर्व्वीस्थापनम् । ३ दिवाकृतदानादि । ४ अस्तमिते स्थालीपाकहोमः । ५ अवस्थाननिर्णयः । ६ पुरोडाशो-परिहोमः । ७धानाञ्जलिहोमः । ८हुतशेषस्य प्रतिपत्तिः ९ सर्पबलिहरणम् । १० प्रदक्षिणोपवेशने परिदान-मन्त्रश्च । ११ अमात्याय परिदानम् । १२ परिदानान्त-रम् । १३ बलिमात्राणां चान्तरा न व्यवेयुरन्ये ।१४वाय-व्यान्तर्बलिहरणम् । १५ प्रकारान्तरबलिहरणम् । २अ० १क०आश्वयुज्याम् आश्वयुजीकर्म्म । २ स्थालीपाक-होमः । ३ पृषातकहोमः । ४ आहिताग्नेः आग्रयण-कर्मेतरां स्थालीपाकश्च । ५ अनाहिताग्नेर्लौकिकेऽग्नौ- २अ० २क० । मार्गशीर्ष्यां चतुर्द्दश्याम् प्रत्यवरोहण-कर्म्म । २ पौर्णमास्यां वा । ३ पायसहोममन्त्रौ । ४ खिदिरनिषेधः । ५ ध्यानं तन्मन्त्रश्च । ६ पुनर्जप-मन्त्रः । ७अमात्यप्रवेशः । ८इतरेतर प्रवेशः । ९ मन्त्र-विदो मन्त्रजपः ।१०उत्थाय निर्जपमन्त्रः । ११ विदिक्षु-स्थानां जपब्राह्मणभोजनस्वस्त्ययनानि, चतुर्थजपमन्त्रश्च १२स्वस्त्ययनवाचनम् । २अ०३क० । १अष्टकाकर्मकालः । २ एकस्याम् अष्टम्यां वा । ३ पूर्व्वदिवसे सप्तम्यां पितृभ्यो दानम् । ४ तत्र ओदनकृसरपायसानां श्रपणम् । ५ चतुःशरावपरिमितधान्यं पिष्टा पूपश्रपणम् । ६ मन्त्रा एकैकेनाः, यावद्भिः कामयेत तावद्भिर्वा । ७ परदिने अष्टम्याम् अष्टका, पशुना स्थालीपाकेन वा । ८ अनु-गुप्तो यवसमाहरेद्वा । ९ तथाप्यसमर्थत्वे अग्नि-ना कक्षं दहेत् । १० यवसदाने कक्षदाहे मनसा ध्यानम् । ११अनुष्ठानिकसामर्थ्यानुष्ठाने नानष्टकः स्यात् । १२ देवताविकल्पप्रदर्शनम् । १३ वपाहोममन्त्रः । १४ तत्र होममन्त्राः । १५ खिदिरानेति अष्टमहोमः ।

१६ ब्राह्मणभोजनोत्तरं स्वस्त्ययनवाचनम् । २अ० ४क० । १आन्वष्टक्यं तदुत्तरनवम्यां कार्य्यम् । २मांसकल्पादि । ३ पिण्डपितृयज्ञकल्पप्रदर्शनम् । ४ पितृभ्यः मधुमन्थवर्जं पिण्डनिपरणम् । ५मातृपितामहीप्रपितामहीभ्यः सुराच-मेन पिण्डनिपरणम् । ६ अवटसंख्यानिर्णयः । ७पित्रा-दिपिण्डस्थानम् । ८मात्रादिपिण्डस्थानम् ।९आग्रायण-प्रोक्षणप्रभृत्यादिदिनत्रये कर्त्तव्ये श्राद्धार्थं उक्तभक्ष्याणि देयं । १० कण्वपक्षे अनुक्तासु तिथिषु आन्वष्टक्यवत् । मासि मासि पितृभ्य एव श्राद्धं कर्त्तव्यं न मात्रादिभ्यः । ११ आन्वष्टक्ये नवावरान् भोजयेत् ।१२अयुजो वा यथा-त्रीन् एकं वा । १३ वृद्धिकर्म्मणि पूर्त्तकर्म्मणि च युग्मान् भोजयेत् । १४इतरत्र युग्मब्राह्मणभोजनम् तिलस्थाने यव-दानञ्च । २अ०५क० । १ रथारोहणात् पूर्व्वं तत्-स्पर्शनमन्त्रः । २ अश्वस्पर्शनमन्त्रः । ३ आरोहण-मन्त्रश्च । ४ रश्मिस्पर्शनमन्त्रः । ५ गमनप्रवर्त्तमानेषु रथेषु जप्यमन्त्रः । ६ शकटाद्यारोहणेऽपि तस्य जपः ।७ शकटाद्यङ्गस्पर्शनमन्त्रः । ८ नावारोहणमन्त्रः । ९ नवरथे विशेषः ।१०कुटुम्बोपयोगिद्रव्याहरणम् ।११स्टहसमीपाग-मनम् ।१२रथावरोहणमन्त्रः ।१३नवरथावरोहणमन्त्रः । १४तत्र जप्यमन्त्रः । १५तत्र पुनर्जप्यमन्त्रः । २अ०६क० । १ वास्तुपरीक्षा । २ भूमिलक्षणम् । ३ भूमेरपरलक्षणम् । ४भूमेरन्यलक्षणञ्च ।५ विरूढदुष्टवृक्षोत्पाटनम् । ६भूमेरुच्च-निम्नतानिर्णयः । ७ भोजनगृहस्थाननिर्णयः । ८तत्-फलम् । ९ सभागृहस्थाननिर्णयः । १० तत्फलम् । ११ तदपरस्थाननिर्णयः २अ०७क० । १ वास्तुपरीक्षण क्रमः । २तत्र खातखननं तत्पूरणञ्च । ३प्रशस्तमध्य-मगर्हितवास्तुनिर्णयः । ४अस्तमितेऽर्के जलैस्तत्पूरणम् । प्रशस्तमध्यमगर्हितनिर्णयः । ६ ब्राह्मणवास्तुनिर्णयः । ७क्षत्रियवास्तुनिर्णयः । ८ वैश्यवास्तुनिर्णयः । ९ बहु-द्वारैः वास्तुकर्षणम् । १० समचतुष्कोणं दीर्घं वा । ११ वास्तुप्रोक्षणम् । १२ अविच्छिन्नधारया प्रोक्षणे मन्त्रः । १३अवान्तरगृहप्रभेदनिर्णयः । १४स्थूणानां गर्त्तेषु विशे-षविधिः ।१५मध्यमस्थूणागर्त्ते विशेषः । १६मध्यमस्थूणा-गर्त्ते मन्त्रः ।२अ०८क० ।१वंशाधानानुमन्त्रणम् । २वंशा-धानमन्त्रः ।३मणिकप्रतिष्ठापनम् । ४तन्मन्त्रान्तरविधानम् । ५मणिकसेचनमन्त्रः । ६ वास्तुदोषशमनम् । ७ तत्प्रो-क्षणम् । ८ अविच्छिन्नजलधारादानम् । ९ स्थालीपा-कश्रपणादि शिववाचनञ्च ।२अ०९क० । १गृहप्रपदनम् ।

२वीजवद्दुम्बप्रपदनम् ।३तत्कालनिर्णयः । ४ तत्र होमकर्म्म । ५अनुमन्त्रणम् । ६आयतीनां गवामनुमन्त्रणे मन्त्रः । ७एके अभ्युत्क्रामिच्छन्ति । ८अयातीनां गवामनुमन्त्रणे । २अ०१०क०

तृतीयाध्याये पञ्चयज्ञादिसमावर्त्तनान्तानि कर्म्माणि । १ पञ्चयज्ञप्रतिज्ञा ।२ यज्ञानां नामकथनम् ।३यज्ञानां स्वरूपकथनम् । ४तेषामहरहःकर्त्तव्यता । ३अ०१क०। १ स्वाध्यायविधिः। २ स्वाध्यायाध्ययननियमः । ३ ओं-पूर्व्वा व्याहृतीः समस्ता ब्रूयात् । ४ सावित्र्यध्ययननियमः । ३अ० २क० । १ स्वाध्यायक्रमः । २ अध्ययने देशाकृतिनिर्णयः । ३ अध्ययने वेलाकृतिनिर्णयः । ४ अध्ययने कालावधिनिर्णयः । ३अ० ३क० । १ देवतर्पणम् । २ ऋषितर्पणम् । ३ प्राचीनावीती । ४ आचार्य्यतर्पणम् । ५ पितृतर्पणम् । दक्षिणावीती । ६तिथिविशेषादौ निषेधवचनं नित्यस्वाध्यायस्यैव, न ब्रह्मयज्ञस्य । ७ब्रह्मयज्ञानध्यायः ३अ०४क०। १ अध्ययनप्रारम्भः । २ अध्ययनकालनिर्णयः । ३तत्र कालाऽन्तरम् । ४ आज्यभागाहुतिः । ५ दधिसक्तुहोमः । ६होममन्त्राः ।७तत्राज्ये षडृचा मन्त्राः । ८ एकोमन्त्रः । ९ तत्रापरोमन्त्रः । १० देवताहोमादिमार्जनम् । ११ जपनियमः । १२ व्याहृतिसावित्रीजपोवेदारम्भश्च । १३उत्सर्गविधिः । १४अध्ययनकालनिर्देशः । १५ ब्रह्मचारिधर्म्मयुक्तोऽधीयीत । १६ ब्रह्मचारिणामपि अध्ययनम् । १७ समावृत्तोजायां गच्छेदित्येके । १८प्रजोत्पत्त्यर्थं जायागमनमपरे । १९ उपाकरणकर्म्म । २० माध्यां पौर्णमास्यां तत्करणम् । २१ तत्र सावित्र्यादितर्पणम् । २२आचार्य्यादितर्पणम् । २३ ततः स्वस्वाचारमनुसर्जनकर्म्म । ३अ० ५क० । १काम्यकर्म्म-स्थाने पाकयज्ञः । पुरोडाशस्थाने चरुः । ३ कामप्राप्तिफलम् । ४ नैमित्तिकहोमः । ५ होममन्त्राः । ६अशुभस्वप्नदर्शने उपस्थानमन्त्राः । ७ तत्र मन्त्रान्तरम् । ८ जृम्भणादौ जपमन्त्रः । ९ अगमनीयगमनादौ आज्यहोमः । १० तत्र समिदाधानं वा । ११ तत्र मन्त्रजपो वा । ३अ०६क०। १अभ्युदितेऽर्के स्वपतः प्रायश्चित्तम् २ तत्र मन्त्रचतुष्टयम् । अभिनिम्रुक्तस्य प्रायश्चित्तहोमः । ३ सन्ध्योपासनम् । ४ तत्र सायङ्काले कर्त्तव्यभेदः । ५ तत्र प्रातर्नियमभेदः । ६ तत्र कालनिर्णयः । ७ कपोतपाते होमजपौ । ८ अर्थाँ गच्छतो होमजपौ । ९ महं वस्तु लब्धुमिच्छतो होमजपौ । १० सङ्ग्रामस्थानं गमिष्यतो होमजपौ । ३अ०७क० । १ समावर्त्तनम् । तत्र आचार्य्याय आत्मने वा एकादशद्रव्याहरणम् । २उभयोर्द्रव्यालाभे आचार्य्यायैव दानम् । ३ समिदाहरणनियमः । ४ कामनाविशेषे समिन्निर्णयः । ५उभयकामस्यार्द्रशुष्का समित् । ६ समिदाधानादि गोदानम् ।७मन्त्रान् आत्मवाचकान् कुर्य्यात् ।८करस्योन्मर्द्दनम् । ९ स्नानाञ्जनविधिः । १० कुण्डलबन्धनम् । ११ अनुलेपनविधिः । १२ स्रग्बन्धनम् । १३ माल्यविधिः । १४ छत्रादानम् । १५ वैणवदण्डादानम् । १६मधुपर्क्कीयसमिधादानम् । ३अ०८क० ।

तृतीये १ उपदेशमन्त्रः । २ प्रत्यृचं समिदाधानम् । ३ मधुपर्केण पूजनम् । ४ अनुज्ञाते सभावर्त्तनस्नानम् । ५ व्रतविशेषः । ६ निषेधविशेषः । ७ निषेधान्तरम् । ८ स्नातकस्य माहात्म्यम् । ३अ०९क० । १ गुरवे नामकथनम् । २ उपवेशनानुज्ञा । ३ उच्चैर्नामकथनम् । ४ उपांशुकथने मन्त्रः । ५ शिष्यस्य उपांशुकथने मन्त्रः । ६आचार्य्य जपमन्त्रः । ७जपान्तरम् अनुमन्त्रणञ्च । ८ तत्प्रशंसा । ९ पक्षिणाम् अमनोज्ञा वाचः श्रुत्वा जपमन्त्रः । १० मृगस्यामनोज्ञा वाचः श्रुत्वा जपमन्त्रः । ११ भयप्राप्तौ जपमन्त्रः । ३अ०१०क० । १ सर्व्वाभ्योदिग्भ्यो भयप्राप्तौ जपमन्त्रोहोमश्च । २तत्र जपमन्त्रः क्रमविशेषश्च । ३अ०११क०। १ राजसन्नाहनम् । २तत्र जपमन्त्रः। ३रथे कवचदाने मन्त्रः । ४ धनुर्दाने मन्त्रः । ५ राज्ञोजपमन्त्रः । ६ स्तीयजपमन्त्रः । ७दुन्दुभिदाने मन्त्रः । ८रथगमने जपमन्त्रः । ९अश्वानुमन्त्रणम् ।१०दूरवेध्यमानस्य जपमन्त्रः । ११संग्रामागतराजजपमन्त्रः । १२सारथिमारोहमाणे रथे जपमन्त्रः । १३राजोच्चारणमन्त्रः । १४वीपर्णमन्त्रः । १५अनुक्रमेण रथगमनम् । १६युद्धप्रदेशनिर्णयः । १७दुन्दुभिवादने मन्त्रः ।१८बाणमोचनमन्त्रः । १९युध्यमाने राजनि पुरोहितजपमन्त्रः ।२०तत्रपुनर्मन्त्रः।३अ०१२क०

चतुर्थाध्याये । आहिताग्नेः पीडाप्रशमनादिशान्तानो-त्सवपान्तानि कर्म्माणि ।१ व्याधिपीडितस्याहिताग्नेः कर्त्तव्यम् ।२ग्रामकामत्वे प्रमाणम् ।३ग्रामे वासाभावे प्रमाणम् । ४अगदः सोमादिभिरिष्ट्वा ग्रामं प्रविशेत् । ५ अनिष्ट्वा वा ग्रामं प्रविशेत् । ६मृतस्याहिताग्नेश्चिताभूमिखननम् । ७खातस्य निम्नोन्नतानिर्णयः। ८खातस्य आयामनिर्णयः ।

९ स्नातस्य विसृतिनियमः । १० स्नातस्य अधोनिर्णयः । ११ स्नानादेशनिरूपणम् । १२ तत्स्नानस्य बहुलौचभिन्नत्वम् । १३ कण्ठश्रित्याद्युद्वासनम् । १४ दहनस्थानाग्न्यानस्य विशेषविधिः । १५ प्रेतस्य केशादिवपनम् । १६ बर्हिराज्यादिसंस्थापनम् । १७ पृषदाज्यनयनम् । ४ख०१क० । १ अग्नियज्ञपात्रादिनयनम् । २ प्रेतनयनकर्तृनिर्णयः । ३ शकटादिना प्रेतनयनमित्येके । ४ अनुस्तरण्योपशुस्त्रीनयनम् । ५ अनुस्तरणीं गामाहुरेके कृष्णाम् एकवर्णामजामित्यपरे ८ पयोः सव्यबाहुबन्धनं कृत्वा आनयनम् । ९ तदनु अमात्यादीनामागमनम् । १० दाहकर्तुः कर्तव्यभेदः । ११ दक्षिणपूर्वदेशे आहवनीयनिधानम् । १२ उत्तरपश्चिमे गार्हपत्यनिधानम् । १३ दक्षिणपश्चिमे दक्षिणाग्निनिधानम् । १४ चिताग्निचयनम् । १५ चितायां प्रेतसंवेशनम् । १६ प्रेतपत्नीसंवेशनम् । १७ क्षत्रियप्रेतस्य धनुःसंवेशनम् । १८ देवरादिना पत्न्याउत्थापनम् । १९ तत्र वृषलो उत्थापके कर्त्ता, देवरे तेनैव मन्त्रस्य जपः । २० धनुरपनयने मन्त्रः । २१ पुनः कर्तृत्थापकयोर्मन्त्रजपः । २२ धनुर्भङ्क्त्वा क्षेपः । ४ख०२क० । १ पात्रयोजनम् । २ दक्षहस्ते जुहूयोजनम् । ३ सव्ये उपभृतानयनम् । ४ दक्षे पार्श्वे स्फ्यस्य सव्येऽग्निहोत्रहवण्या योजनम् । ५ उरःप्रभृतिषु ध्रुवादिनिधानम् । ६ नासिकयोः स्रुवाधानम् । ७ एकां स्रुवं भित्त्वा नासिकाद्वये योजनम् । ८ कर्णयोः प्राशित्राधानम् । ९ एकस्यैव भित्त्वोभयत्र तन्निधानम् । १० उदरे रुचिः पात्रीनिधानम् । ११ तत्र समवत्तधानचमसयोजनम् । १२ उपस्थे शम्यानिधानम् । १३ अरणीमूर्वोः, उदूखलमुसले जङ्घयोर्निदध्यात् । १४ पादद्वये शूर्पनिधानम् । १५ एकस्यैव छित्त्वा निधानम् पूर्ववत् । १६ आसेचनपात्रे पृषदाज्यपूरणम् । १७ तदुपलाद्युपयोगद्रव्यनिधानम् । १८ लौहमृण्मयादिनिधानम् । १९ अनुस्तरण्या वपामुत्खिद्य तत्र प्रेतस्य शिरोमुखाच्छादनं तन्मन्त्रश्च । २० प्रेतपाण्योर्वृक्कयोर्निधानम् । २१ हृदये हृदयाधानम् । २२ प्रेतपाण्योः पिण्डद्वयाधानमित्येके । २३ वृक्काभावे पिण्डद्वयाधानमित्यन्ये । २४ प्रणीताप्रणयनानुमन्त्रणे । २५ दक्षिणजानुपातेन दक्षिणाग्नौ चतुराज्याहुतिहोमः । २६ प्रेतस्योरसि पञ्चमाहुतिहोमनम् । ३ख०३क० । १ युगपदग्निप्रज्वालने प्रेतवधम् । आहवनीयस्य प्राक् प्रेतदेहप्राप्तौ प्रेतस्य स्वर्गलोकगतिः पुत्रसमृद्धिश्च फलम् । गार्हपत्यस्य तथात्वे प्रेतस्यान्तरिक्षलोकप्राप्तिः पुत्रस्य ऋद्धिश्च फलम् । दक्षिणाग्नेस्तथात्वे प्रेतस्य मनुष्यलोकप्राप्ति पुत्रस्य ऋद्धिश्च फलम् । ५ युगपत्प्राप्तौ सर्वसमृद्धिः फलम् । ६ दहनमन्त्रः । ७ दहनप्रशंसा । ८ जानुमात्रे गर्तं खात्वा तत्र तदुपलाद्यु... स्थाय दाहोत्तरमातिवाहिकशरीरमास्थाय धूमेन सह स्वर्गलोकगमनम् । ९ दाहकर्तृजप्यमन्त्रः पृष्ठतोऽनीक्षमाणा सर्वेषां गमनञ्च । १० सकृत्स्नात्वा प्रेताय उदकाञ्जलिं दत्त्वान्यानि वासांसि परिधाय दिशा आनक्षत्रदर्शनात् तत्रावस्थानम् । ११ रात्रौ आदित्यस्य दर्शनं कृत्वा गृहं प्रविशेत् । १२ गृहप्रवेशे वृद्धादिपूर्वापरनिर्णयः १३ गृहमागत्य अश्मादीनामुपस्पर्शः । १४ तस्मिन् दिने अन्नं न पचेरन् । १५ क्रीतान्नेन वर्त्तेरन् । १६ सपिण्डानां त्रिरात्रमक्षारलवणाशनम् । १७ महागुरुमृतौ द्वादशरात्रं तथाशनं दानाध्ययनवर्जनञ्च १८ सपिण्डेषु दशाहं दानाध्ययनवर्जनम् । १९ उपनेतृगुरौ असपिण्डेऽपि दशाहं द्वादशाहं वाऽशौचम् । २० अदत्तासु स्त्रीषु मृतासु दशाहम् । २१ एकदेशाध्यापकेषु त्रिरात्रम् । २२ असपिण्डमृतौ त्रिरात्रम् । २३ दत्तासु स्त्रीषु त्रिरात्रम् । २४ अदन्तजाते त्रिरात्रम् । २५ असम्पूर्णगर्भे त्रिरात्रम् । २६ सहाध्यायिषु मृतेषु एकाहम् । २७ समानग्रामीये श्रोत्रिये एकाहम् । १ अस्थिसञ्चयनम् । २ स्त्रीपुरुषभेदेन कुम्भनियमः । ३ प्रोक्षणमन्त्रः । ४ सञ्चयने पूर्वापरनिर्णयः । ५ सञ्चयनानन्तरमवधाननिर्णय । ६ पांशुप्रक्षेपः । ७ पांशुप्रक्षेपानन्तरम् उत्तराकर्षं जपेत् । ८ कपालेन कुम्भं पिधाय पृष्ठतोऽनवेक्षमाणा गत्वाप उपस्पृश्य प्रेताय श्राद्धदानम् । ४ख०५क० । १ मृतगुरुकस्यामावास्यायां कर्तव्यापस्मारादिकस्यामावस्यायां शान्तिकर्म । २ क्रव्यादाग्निहरणम् । ३ चतुष्पथे तदग्निपरित्यागः । ४ पृष्ठतोऽनवेक्षणादि कृत्वा प्रत्यागत्याप उपस्पृश्य केशादीन् वापयित्वा नवघटादिकुम्भपिण्डान्तकल्पनम् । ५ पञ्चनामाग्निजननम् । ६ अग्निदीपनम् । ७ अग्निसेवनम् । ८ अनडुच्चर्मण्यमात्यारोहणम् (कर्तृभिन्नाः सर्वे पुमांसः स्त्रियश्चामात्याः) । ९ परिधिपरिधानम् । १० आहुतिचतुष्टयमन्त्रः । ११ अमात्याः स्त्रियः तद्दर्भपिण्डनवनीतं गृहीत्वा तेनाङ्गुष्ठोपकनिष्ठाभ्यां चक्षुषी आञ्जीरन् । १२ अन्यथा नानां स्त्रीणां कर्त्रा वीक्षणम् । १३ कर्तुः अश्माभिमर्शनम्

।१४परिक्रमणजपः । १५ब्राह्मणादिदक्षिणादानम् । १६ अकृतवासस्याञ्चाद्योपवेशनम् । १७ आ उदयादुपवास आसीरन् ।१८होमसमापनम् । ४अ०६क०।१ श्राद्धाधिकारः । २पार्व्वणश्राद्धविधिश्राद्धैकोद्दिष्टरूपश्राद्धे पात्रविप्रकल्पनसंख्ये ।३सपिण्डीकरणभिन्ने यथेष्टं विप्रसंख्या तत्र तु त्रयाणां त्रय एव कार्य्या इति भेदः। ४पिण्डपितृयज्ञे ब्राह्मणानां पिण्डनिपरणादीनां श्राद्धेऽतिदेशः। ५ ब्राह्मणाय जलदानम् ।६दर्भासनदानम् ।७पुनर्ज्जलदानम् । ८अर्घ-पात्रे तिलावपनं तन्मन्त्रश्च। ९ पित्र्यं कर्म्म अपदक्षिणं कार्य्यम् । १०अर्घदानम् । ११ अर्घदानात् पूर्व्वं जल-दानम् । १२अर्घस्य जलनिवेदनम् । १३ अर्घानुमन्त्रणं-तन्मन्त्रश्च । १४अर्घ्या आपो यस्मिन् पात्रे पर्य्यासताः तत् प्रथमपात्रं नोद्धरेत् । ४अ०७क० । १ गन्धादिदानम् । २ अग्नौ करवाणीति प्रश्नः । ३ प्रत्युक्ता । ४ अग्नौ करण-होमः । ५ पाणिष्वेव वा होमः । ६ देवपितृणां क्रमेणाग्निसम्पन्नपाणिहुतत्वे । ७ भोजनपात्रेऽन्नदानविधा-नम् । ८ हुतशेषान्नदानम् । ९ भोजनपात्रे अभिमान-दानम् ।१०भोजनात् तृप्तेषु प्राशयनम्यः ।११पिण्डार्थमन्नमुद्धृत्य शेषनिवेदनम्। १२ अनाचान्तेषु पिण्डनिपरणम् । १३आचान्तेषु तदित्येके। १४ब्राह्मणानुज्ञानविकिरदानम् । १५अस्तु स्वधेति प्रत्युच्चारणम् विसर्ज्जनञ्च ।४अ०८क० । १ अथ शूलगवः । २ तस्य कालादिनिर्णयः । ३ पशु-निरूपणम् । ४पशुलक्षणम् । ५अग्निमन्त्र्यश्च पशुरित्येके । ६ तन्मुखस्य तथां कामं स्नपयीयात् । ७ पशु-अभिषेकः ।८शिर आरभ्य पुच्छदेशपर्य्यन्तमभिषेकः ।९पशू-त्सर्गः । १० पर्य्यग्निपर्य्यन्तं पाकनम् । ११ तत्र दिग्-निर्णयः । १२पशुदक्षिणायोन्नदेशे पाकनम् । १३अर्द्धरा-त्रादूर्द्ध्वं सहितेऽस्ते वा काले शूलगवः कार्य्यः । १४यूपनिखननं तत्र पशुबन्धनञ्च । १५प्रोक्षणादि पशुकल्पेन समानम् । १६ विशेषस्तु पात्र्या पलाशेन वा वपाहोमः । १७हरादि-कादशनामक होममन्त्राः । १८ भवादिषडनामको वा मन्त्रः । १९द्वादशनामको वा मन्त्रः । २०बलिहरणम् । २१पर्णेषु बलीन् व्रतादिमहत्मन्त्राः ।२२ एकैकद्वयं तेषां-निरूपः । २३ [illegible] पुच्छ-[illegible] । (अत्यन्तावासाः कर्म्मणैव-[illegible]) २४ [illegible] विशेषः । २५ [illegible] २६ [illegible] २७ सर्व्वपशूनां [illegible]

लोम्या तस्य पर्व्वात्मकम् । २८ अत्रैव सर्व्वा सेनाः । २९ सर्व्वाण्यनुकृतान्यस्यैवांशभूतानि । ३० एवमेवं विदं यजमानं रुद्रः प्रीणाति ।३१अस्य कर्म्मणो मनसा रुद्रो न हिनस्ति । ३२अस्य हुतशेषं न प्राश्नीयादेकमतम् । ३३अस्य द्रव्याणि ग्रामं नाहरेयुः । ३४ नास्मागन्त-व्यमिति पुत्रादीन् प्रतिषेधयेत् । ३५ नियमेन हुतशेषं प्राश्नीयादिति सिद्धान्तः। ३६ शूलगवस्य फलानि ३७ शूलग-वेनेष्टा अन्यं पशुमनुव्रजेत् । ३८सर्व्वथानुसृष्टपशुरेव स्यात् ३९शूलगवनामकेन पशुकर्म्मणा रहितो न भवेत् तेन शूलगवस्य नित्यता । ४० मन्त्रातीयं जपित्वा स्वगृह-प्रवेशः । ४१पशूपतापे गोष्ठे अस्यैव रुद्रस्य यजनम् । ४२ स्थालीपाकं निधाय सर्व्वहुतं कुर्य्यात् । ४३ प्रतिध्वनं गवामयनम् । ४४ मन्त्रातीयं जपन् पशूनां मध्यमियात् । ४५समाप्तिज्ञापनार्थं आचार्य्यनमस्कारः । ४अ०१०क० ।

आश्वलायनगृह्यपरिशिष्टप्रतिपाद्यार्थाः । १ आच-मनादि सामान्याङ्गम् । २ सन्ध्योपासनाङ्गाचमनादि । ३ मार्ज्जनम् । ४ पापशोधनम् । ५ गायत्रीजपादि । ६तस्या ध्यानादि । ७ आवाहनमन्त्रादि । ८ मन्त्राणा-मृषिदैवतच्छन्दांसि । ९ स्नानविधिः । १० माध्यन्दिन-स्नानविधानम् । ११ मन्त्रस्नानम् । १२ वैश्वदेवः । १३ स्वस्तिवाचनादि । १४होमे स्थण्डिलादि । १५कुशकण्डिका-दिहोममार्गः । १६ ब्रह्मणः पञ्च कर्म्माणि । १७पार्व्वण-स्थालीपाकः । १८ नित्यमौपासनम् । १९ पुनरा-धानम् । २० अनेकभार्य्यस्य परतन्त्रायाः धर्म्मभागित्वम् । २१ कन्यावरणम् । २२ उपयमनादि । २३ अन्योन्या-वलोकनम् । २४ आर्द्राक्षतारोपणादि । २५ ऋतुमती-स्नानादि । २६ जातकर्म्मादि । इत्येते १अ० गताः

२अध्याये १ पञ्चयज्ञादि । २ पञ्चमहायज्ञाचारादि । ३ अर्च्चनाङ्गानि । ४अर्च्चनविधिः । ५आवाहनमन्त्राः । ६ पञ्चायतनदेवतादि । ७ गणपत्यादिदेवतावाहनम् । ८ अग्न्युत्पादनादि । ९ यजमानाभिषेकः । १० होमविधानादि । ११ भोजनविधिः । १२ शयनादि-विधिः । १३ श्राद्धानि । १४ ब्राह्मणनियमः । १५ गन्धादिदानादिपिण्डपितृयज्ञान्तं कर्म्म । १६ अग्नौ करणादिकर्म्म । १७ पिण्डदानादिश्राद्धशेषसमापनान्तं कर्म्म । १८ अग्निदग्धपिण्डदानादि । १९ आभ्युदयिके विशेषः । इत्येते २अ०गताः पदार्थाः।

तृतीयाध्याये १पितृमेधः । २ अग्निदानानियमः ।

भनूराशिघटकत्वसुसरायाच शेषपादत्रिकस्य मकरराशि-
घटकत्वम् तदार्थे न० च आषाढभूः” भक्तव्यपक्षः तस्य
तत्र जातत्वासयात्वम् ।

**आषाढाभव** पु० आषाढायां नक्षत्रे भवति भू—अच् । मङ्गल-
ग्रहे आषाढाजातोऽप्यत्र क्विप् । आषाढाभूरप्यत्र ।

**आषाढि** स्त्री आ+सह—क्तिन् नि०न ओत् षत्वञ्च । १सम्यक्
सहने “तथाषाढेः सौम्नमतेयन्नोपदधः” शत०ब्रा०६,२,१,
१७ । २रतिदेव्याः स्थाने च यज्ञार्थेर० ।

**आषाढी** स्त्री आषाढया नक्षत्रेण युक्ता पूर्णिमा “नक्षत्रेण
युक्तः कालः” पा० इत्यण् । १आषाढमासीयपौर्णमास्याम् ।
२यज्ञियेष्टकाभेदे च ।

**आषाढीय** त्रि० आषाढायां भव· “अविष्ठाषाढायामिति” पा०
तस्येदम् इत्यत्वात् वा छ ।१आषाढानक्षत्रे भवे २आषा-
ढसम्बन्धिनि च ।

**आष्टम** पु० अष्टमोभागः अण् । अष्टमे भागे ।

**आष्ट्** अच–व्याप्तौ इन् इत्रिच । आकार्य उज्ज्व०।

**आस** उपवेशनेअदादि० आ० अक० सेट् । आस्ते आसाम्
आसते आसीत आसाम् आस्व आह्वम् आस आसत
आसिष्ट आसांबभूव आसामास आसाञ्चक्रे आसिता
आसिष्यते । आसीनः आसितम् आसितवान् आसितुम्
आसिता आसित्वा आसः आसनम् आसना “य आस्ते मनसा
स्मरन्” गीता “दिवि देवास आसते” ऋ०१,२०,२ ।
“आसीतामरणात् क्षान्ता”नासीत गुरुणा सार्द्धं शिला-
फलकनौषु च” इति च मनुः । “सुखितमास्व ततः शरदां
गतम्” सा०द० ।“निवृत्तमास्वं पिबतास्त शेध्वम्” भट्टि ।
“जगन्ति यस्यां सविकाशमासत” माघः । “आसिष्ट नैकत्र
शुभा अस्थात्” ... ...
चोक्तः सन्नासीताभिमुखं गुरो” मनुः । “इच्छामि नित्य
मेवाहं त्वया पुत्र ! सहासितुम्” भा०व०। अ० “जन-
कोह वैदेह आसाञ्चक्रे” शत० ब्रा० १४,६,१,१ ।
तूष्णींभूय भयादासाञ्चक्रिरे नगपक्षिणः” भट्टिः “कैलास-
शिखरासीनम्”तन्त्रम् “आसीनानां सुरभितशिलं नाभि-
गन्धैर्मृगाणाम्” मेघदू० । “आसितं भाषितं चैव मतं
यच्चाप्यनुष्ठितम्” रामा०। “जृम्भासितादिकम्”सा०द०।

अधि-अध्यारोहणे सक० । गगनमध्यमध्यास्ते दिवाकरः
काद०“छायामध्यास्य सैनिकाः “ययौ मृगाध्यासित-
शाद्वलानि” इति च रघुः । अम्बूविटपमध्यास्ते
परभृता” विक्रमो० । “आवल्लो दिवसमध्यास्य
शायनात् परमोत्थितः” रघुः । अलाधारस्य कर्मता ।

अनु-पश्चादुपवेशनेन सेवने सक० । “अन्वासितमरुन्धत्या
स्वाहयेव हविर्भुजम्” रघुः । “ततः सर्वा अन्वासते
सदैव यमद् अपः” भा० स० १० अ० ।

अभि--आभिमुख्येन स्थितौ नैकट्ये च अक० अभ्यासः अ-
भ्यासीयस्व कपूयये निमापद्येरन्” छा०उ० ।

उद्-औदास्ये प्रकृतकर्म्मण उपरमे अक०“विधाय वैरं सामर्षे
नरोऽरौ य उदासते” माघः। “उदासीनवदासीनः”गीता

उप-सेवने सक० । “नोपास्ते यस्तु पश्चिमाम्” मनुः ।
“उपासते हरिहरौ वकारोदयते यतः” वाक्यप० ।
“वायुवस्त्रानुगच्छन्ति तथा दोषानुपासते”मनुः ।“व्रतवस्त-
मुपासते” कुमा० ।

परि—उप—उपासनस्य प्रकर्षार्थे “यथैव क्षुधिता बाला मातरं
पर्य्युपासते”“पितामहं च के तस्यां सभायां पर्य्युपासते”
भा०स० १अ० । (एनम्) “भुजङ्गाःपर्य्युपासते”कुमा० ।

सम्–उप—सम्यगुपासने सक० ।“समुपास्यत पुत्रभोग्यया” रघु०

परि—परितः स्थितौ अक० सम्यक् सेवने सक० । तामेतद्देवाश्च
पर्य्यासते ये चेमे ब्राह्मणाः” शत०ब्रा० ।

सम्—सम्यक् स्थितौ उपवेशने च । “भोगिभोगसमासीनम्”
“पश्चिमां तु समासीनः” मनुः ।

**आस्** अव्य० आ+अस्—क्विप्—आस+क्विप् वा । १ स्मरणे,
२आक्षेपे “आः क एष मयि जीवतीति” मुद्रारा० ।
“आहुरात्मन् श्यामलपाठक !” वेणी० । ३कोपे,
४सन्तापे, ५पीडायां सगर्वगर्जने च । “आः किमेतदिति
क्रोधादाभाष्य महिषासुरः” देवीमा० । ६खेदे “विद्या-
मात्रमाः प्रदर्श्य स्वपन्मुन् भिक्षामहे निष्कृपाः” उद्भटः ।

आस पु० अस–घञ् । १आसने २स्थितौ ३उपवेशने आस्यतेऽ-
नेन करणे घञ् । ४उपवेशनस्थाने गुह्यपार्श्वभागे“यथा
कप्यासं पुण्डरीकमेवमस्याक्षिणी” छा०उ०छान्दसं न० ।
अस्यते क्षिप्यतेऽनेन अस—करणे घञ् । ५धनुषि“स शांस-
शासनः शासः” किरा० “शासः सचापः” मल्लि० ।
दूरासः अर्थ क्षेपे भावे घञ् । ६ विक्षेपे निरासः ।

**आसक्त** त्रि० आ+सन्ज—क्त । १आसक्तियुक्ते विषयान्तरपरि
हारेण तदेकतानतयाभिनिष्टे २अनवरते न०अटा० ३स-
तति ४सम्यक्संयुक्ते च त्रि० आसक्तचित्तः आसक्तचेताः ।

**आसक्ति** स्त्री० आ+सन्ज—क्तिन् । विषयान्तरपरिहारेणै-
कविषयावलम्बने “ते देवा आसक्तिमन्तं वदन्तः” “आस-
क्तमन्तं वदन्तः इति च”शत०ब्रा०८,२,१,११,१२।“मोह-

लोहितं भवति कृत्यासक्तिर्व्यज्यते” ऋ०१०,८५,२८ ।

**आसङ्ग** पु० आ+सन्ज–घञ् । १अभिनिवेशे, प्राप्तस्योपस्थितस्य वा नश्यतो वस्तुनः २रक्षणाभिलाषे, ३भोगाभिलाषे, ४कर्तृत्वाभिमाने ५विषयान्तरपरिहारेण चेतस एकत्राभिनिवेशे च । “नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः” धा०८० । “तेऽसुरराक्षसेभ्य आसङ्गाद्विभयाञ्चक्रुः” शत०ब्रा०१,१,२,१ “तस्योह्नैन क्षयमाणमासङ्गो न विन्दति” शत०ब्रा०५,२,२,५, “त्यक्त्वा कर्मफलासङ्गम्” गीता । ६सम्यक् सम्बन्धे “सर्वैश्चासङ्गमपि प्रकाशते” कुमा० । आसज्यते कर्म्मणि घञ् । ७आसङ्गनीये उत्तरासङ्गः “स्तनोत्तरासङ्गवतीं निवीतिनीम्” कुमा० । ८सौराष्ट्रमृत्तिकायां राजनि० ९अनवरते न०१० तद्वति त्रि० जटा० । सौराष्ट्रमृत्तिकाया गात्रे आसञ्जनीयत्वात्तथात्वम् । अनवरतस्य च सततसम्बन्धात् आसङ्गत्वम् ।

**आसङ्गत्य** न० न सङ्गतः तस्य भावः ष्यञ् चतुरादिषु पर्य्युदासात् नोत्तरपदवृद्धिः । साङ्गत्याभावे असम्बन्धे ।

**आसङ्गिनी** स्त्री आसङ्गः सातत्यमस्त्यस्य इनि ङीप् । १वात्यायां त्रिकाण्ड० । २आसङ्गयुक्ते त्रि० स्त्रियां ङीप् ।

**आसङ्गिम** पु० आसङ्गे भवः डिमच् । सुश्रुतोक्ते कर्णवेधाङ्गकर्णबन्धनाकृतिभेदे । “तत्र समासेन पञ्चदश कर्णबन्धनाकृतयोभवन्ति नेमिसन्धानक उत्पलभेद्यक वल्लूरक आसङ्गिम” इत्यादिना विभज्य “अभ्यन्तरदीर्घैकपालिरासङ्गिमः” इति सुश्रुते लक्षितः ।

**आसञ्जन** न० आ+सन्ज–ल्युट् । १आसङ्गे २सम्यक्सम्बन्धे “व्रततिवलयासञ्जनात्” शकु० । णिच्–ल्युट् । ३योजने

**आसञ्जित** त्रि० आ+सन्ज–णिच्–क्त । संयोजिते

**आसत्ति** स्त्री आ+सद–क्तिन् । १सङ्गसंसर्गे २प्राप्तौ न्यायमते ३प्रत्यक्षजनकसन्निकर्षे “आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते” भाषा० । ४शाब्दबोधोपयोगिन्यामव्यवधानेन पदजन्यपदार्थोपस्थितौ । “आसत्तियोग्यताकाङ्क्षातात्पर्य्यज्ञानमिष्यते । कारणं सन्निधानन्तु पदस्यासत्तिरुच्यते, भाषा० “यत्पदार्थेन यत्पदार्थस्यान्वयोऽपेक्षितस्तयोरव्यवधानेनोपस्थितिः कारणम् । तेन गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादौ न शाब्दबोधः । नीलो घटो द्रव्यं पट इत्यादावासत्तिभ्रमाच्छाब्दभ्रमाभावेऽपि न क्षतिः । ननु यत्र क्षणी कुण्डली वाससी देवदत्त इत्युक्तं तत्रोत्तरपदस्मरणकाले पूर्वपदस्मरणस्य नाशात् अव्यवधानेन उत्तरपदस्मरणासम्भव इति चेन्न प्रत्येकपदसंस्कारै श्चरमतावच्छिन्नयवर्णस्मरणस्याव्यवधानेनोत्पत्ते: नानासन्निकर्षैरेकप्रत्यक्षस्येव नानासंस्कारैरेकस्मरणोत्पत्तेरपि सम्भवात् । तावत्पदसंस्कारसहितचरमवर्णस्य ज्ञानस्योद्बोधकत्वात् । कथमन्यथा नानावर्णकपदस्मरणम् । परन्तु तावत्पदार्थानां स्मरणादेकदैव खलेकपोतन्यायात् तावत्पदार्थानां क्रियाकर्मभावेनान्वयबोधरूपः शाब्दबोधो भवतीति केचित्” मुक्ता० ।

शाब्दबोधहेतुः आसत्तिश्च शब्दचिन्तामणौ निरूपिता यथा । “आसत्तिश्चाव्यवधानेनान्वयप्रतियोग्युपस्थितिः सा च स्मृतिर्नानुभवोऽतोनान्योन्याश्रयः अथ नानाविशेषणककर्मकर्तृकरणाधिकरणक्रियादिपदज्ञानजन्यक्रमिकपदार्थस्मृतीनां न यौगपद्यं सम्भवति आशुतरविनाशिनां क्रमिकाणां मेलकानुपपत्तेरिति कथन्तावत्पदार्थान्वयबोधः विशेषणज्ञानसाध्यत्वाद्विशिष्टज्ञानस्येति चेत् प्रत्येकमनुभवजन्यसंस्कारमेलकादेव तावत्पदस्मृतिः तत एकदैव तावत्पदार्थस्मृतौ सत्यां वाक्यार्थानुभवः न चान्त्यविषयसंस्कारेणान्यस्य न स्मरणमिति वाच्यं वाक्यार्थानुभवानुपपत्त्या फलबलेन संस्काराणां परस्परसहकारेण तत्रैकस्मरणकल्पनात् प्रत्येकस्य संस्काराणामिवानन्यगतिकतया पदस्मरणे । अथ “यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते । तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते” तथैवमन्वयान्तराभिधानं न स्यात् विरम्य व्यापाराभावादिति वाच्यं एवमपि प्रथमस्मरणे चेत्तदुपस्थापकत्वात् उत्तरस्य चोदं सामग्रीवैकल्यं न पूर्व्वस्येति चेत् अस्तु तावदेवं तथापि चरमतावत्पदार्थघटितवाक्यार्थानुभवे उक्तैव गतिरनन्यगतिकत्वात् । अत्र वदन्ति । सन्निधानं पदजन्यैवान्वयबोधहेतुः द्वारमित्यादावध्याहृतेनापि पिधानादिनान्वयबोधदर्शनात् न च द्वारं पिधेहीतिशब्द एवाध्याह्रियते अनुपयोगात् अर्थस्यैवान्वयप्रतियोगित्वादावश्यकत्वाच्च अर्थापत्तेरुपपादकविषयकत्वात् न च शब्दमात्रमुपपादकमपि तु तदर्थः । अवश्यं कल्प्यार्थवाच्यस्यैव हेतुत्वात् शब्दस्मृतेरन्यथासिद्धेः अन्यथा पदबोधितस्यैवार्थस्यान्वयबोधकत्वमिति नियमशक्तिकल्पनापत्तिं स्वार्थान्वयपरत्वाच्छब्दानां द्वारमिति न पिधानान्वयबोधकमिति तदन्वयबोधार्थमवश्यं शब्दकल्पनमिति चेत् कल्पनायां व्यभिचारात् तत्राक्षेपादिप्रयोगेन कर्मान्वयबोधाच्च अथ द्वारपदस्वभावमात्रं पिधेहि शब्दस्य कल्प्यते लाघवात् न च पिधानाभिधायकानेकशब्दोपस्थितौ विनिगमनाविरहः संस्कारतारतम्यात्-

पदविशेषस्मृतेरिति चेत् न आकाङ्क्षादिमत्प्रतियोग्यन्वितस्वार्थपरत्वस्य क्लृप्तत्वात्तावतैवार्थाध्याहारात् न च श्रुतपदानि स्वप्रयोजनानीति कथमध्याहृते तेषां तात्पर्य्यमिति वाच्यं श्रुतार्थान्वयानुपपत्त्याध्याहृते तात्पर्य्यात् कथमन्यथोदनं पचतीत्यत्र समभिव्याहृतमात्रादन्वयबोधः कर्त्राद्येरपि स्मृतत्वादिति चेत् न तात्पर्य्यनियमादित्यवेहि "यत्परः शब्दः स शब्दार्थः" इति न्यायात् अन्यथा तथापि दैवात् स्मृतकर्त्रायपदोपस्थानेनान्वयबोधः स्यात् अथ देवदत्त ओदनमित्यादिवाक्ये क्रियापदाध्याहाराभावेन कर्त्तुरनभिधानात् तृतीया स्यादिति चेत् न अध्याहृतेनापि पचतिपदेन कर्त्तुरनभिधानात्। कर्त्तृसंख्याभिहितेति चेत् न, देवदत्तस्य पाककर्त्तृत्वेन तृतीयापत्तेः तात्पर्य्यं तत्र व्यवस्थेति चेत् तुल्यं ननु द्वारं पिधेहीत्यादौ पिधानशाब्दानुभवे पिधानोपस्थापकपदत्वेनान्वयबोधजनकत्वमिति चेत् न अन्वयप्रतियोग्युपस्थापकपदत्वेन जनकत्वात् न तु तदुपस्थापकतावच्छेदकत्वेन गौरवात् एवं पिधानान्वयबोधेऽपि अन्यथा गौणलाक्षणिकयोरन्वयबोधेन स्यात् तयोरननुभावकत्वादिति उच्यते क्रियापदोपस्थापिता क्रिया कारकपदोपस्थापितं च कारकं परस्परमाकाङ्क्षति न तूपस्थितिमात्रम् अन्यथा द्वारं कर्मता पिधेहि द्वारं पिधानकृतिरित्यत्रापि क्रियाकर्माध्याहारे शाब्दबोधप्रसङ्गः क्रियाकर्मणोरुपस्थितेस्तुल्यत्वात् एवंविधपदोपस्थापिते परस्परमाकाङ्क्षा नास्तीति चेत् तर्ह्याकाङ्क्षायां पदविशेषोपस्थापितत्वं तन्त्रं न तूपस्थितिमात्रम्। अर्थविशेषेऽसाधुत्वात् न तत्रान्वयबोध इति चेत् न पिधेहीति पदं विना द्वारमित्यस्यासाधुत्वात् तदर्थप्रयोगे साधुत्वस्य तुल्यत्वात् साधुत्वज्ञानस्यान्वयबोधेऽप्रयोजकत्वाच्च गौणीयातापभ्रंशाद्वा अन्वयबोधाच्च न चाकांक्षासंसर्गोऽपशब्दोबाधकाभावात्।

तस्मात् क्रियापदस्य कारकपदेन, कारकपदस्य च क्रियापदेन सहान्वयबोधकत्वं नत्वेकं विनापरस्य। अपि च सकर्म्मकक्रियापदप्रयोगं विना द्वितीयानुपपत्तिः क्रियापदार्थयोगे द्वितीया चेत् घटः आनयनं कृतिरित्यत्रापि द्वितीयापत्तेः तथा पुष्पेभ्य इत्यत्र स्पृहयतिपदाध्याहारं विना चतुर्थ्यनुपपत्तिः यदि च स्पृहयतिपदार्थयोगे चतुर्थी तदा पुष्पमिच्छतीत्यत्रापि स्यात् स्पृहयतीच्छति पदयोरैकार्थ्यात्। अथ साधुत्वार्थं द्वारं पुष्पेभ्य इत्यत्र पिधेहि स्पृहयति पदाध्याहारोऽनुमन्यते नत्वन्वयबोधार्थं तत्रान्वयप्रतीतिर्निधानादेरेवोत्पत्तेरिति चेत् तर्हि क्रियापदप्रयोगं विना न कारकविभक्तिः कारकपदप्रयोगं विना न तदन्वययोग्यं क्रियापदमिति केवलकारके क्रियापदाध्याहारः केवलक्रियायाञ्च कारकपदाध्याहारः साधुत्वार्थमावश्यक इति तज्जन्यैवोपस्थितिरन्वयबोधौपयिकी। तस्मात् क्रियाकारकपदोपस्थापितयोरेव क्रियाकारकयोः परस्परान्वय इति शब्दाध्याहार एव अर्थाक्षेपे वक्ष्यामः"।

व्याख्यातं चैतत् मथुरानाथेन दिङ्मात्रमत्रोदाह्रियते "आसत्तिं निरूपयति आसत्तिश्चेति अन्वयप्रतियोगिनोः पदार्थयोरव्यवधानेनोपस्थितिरासत्तिरित्यर्थः साव्यवहितत्वसम्बन्धेन तत्पदार्थोपस्थितिमत्तो तत्पदार्थोपस्थितिस्तत्पदार्थे तत्पदार्थस्यासत्तिरिति फलितार्थः नचैवमासत्त्यासत्तिविभागव्याघातः समूहालम्बनरूपपदार्थोपस्थितेरेव सर्वत्र शाब्दबोधप्रयोजकतया गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादावपि शाब्दानुभवाव्यवहितपूर्व्ववर्त्तिसमूहालम्बनोपस्थितिमादाय सर्व्वाव्यवधानेनोपस्थितिसत्त्वात् उपस्थितेरंशेन व्यवधानासम्भवादिति वाच्यं भेदगर्भाव्यवधानस्य पूर्व्वापरत्वसाधारणस्यात्र प्रवेशात् तच्च स्वध्वंसाधिकरणभिन्नत्वे सति यः स्वप्रागभावाधिकरणसमयः प्रागभावानधिकरणक्षणत्वावच्छेदेन स्वसमयावच्छेदेनोत्पत्तिकत्वे सति स्वभिन्नत्वम्। इत्थञ्च प्रथमं या प्रत्येकपदेभ्यः प्रत्येकपदार्थानां क्रमिका स्मृतिः सैवासत्तिरन्वयबोधाव्यवहितपूर्व्ववर्त्तिसमूहालम्बनरूपोपस्थितिः। अतएवासत्तिघटकं चेत्तुः प्रत्येकपदजन्यपदार्थोपस्थितेर्नानात्वविनाशिनीनां युगपच्छाब्दबोधात् पूर्व्वमसम्भवेन समूहस्य तत्त्वासम्भवात् नचैवं दण्डी कुण्डली खड्गी देवदत्त इत्यादावनेकविशेषणकानां विशेषणकान्वयबोधस्थले चासत्त्यभावप्रसङ्गः तत्र विशेष्योपस्थितेर्विशेषणान्तरोपस्थित्या व्यवधानादिति वाच्यं प्रकृतान्वयबोधानुगुणायः स्वध्वंसाधिकरणक्षणवृत्तित्वस्याव्यवधानघटकीभूतस्यान्तर्गतत्वात् विशेषणान्तरोपस्थितिश्च न प्रकृतान्वयबोधानुगुणः अननुगुणत्वञ्च फलवत्त्वम् यादृशयादृशक्षणेन व्यवधानेऽप्यन्वयबोधोऽनुभवसिद्धस्तादृशभिन्नत्वस्य चाननुगुणत्वरूपत्वात्। अतएव गिरिर्भुक्तमित्यादौ भुक्तादिपदार्थोपस्थितिजनकगिरिपदोच्चारणानन्तरं चिरतरं विलम्ब्याग्निमत्पदोच्चारितं तत्र अव्यवधानघटकोऽपि तादृशानुगुणक्षणान्वयबोधानुपपत्तेरिति तदुभयत्र नासत्तिः। नचैवं तत्र पदोपस्थितिव्यवधानेन, पदार्थोपस्थित्यव्यवधानेन, तत्रासत्त्यापत्तिरिति वाच्यं तत्पदोपस्थित्यव्यवहिततत्पदोपस्थितिजन्या तत्पदार्थो

पस्थितेरव्यवधानेन तत्पदार्थोपस्थितितत्पदद्वयजन्यतत्पदार्थयोरन्वयबोधे आसत्तिरिति विवक्षितत्वात् । एवञ्च यत्र पदोपस्थितिरव्यवधानेन, पदार्थोपस्थितिश्च व्यवधानेन, यत्र वा पदार्थोपस्थितिरव्यवधानेन, पदोपस्थितिश्च व्यवधानेन, तत्रोभयत्रापि नासत्तिः किन्त्वेकपदोपस्थितिजन्यपदार्थोपस्थितिरपरपदोपस्थितिश्च समूहालम्बनरूपा ततोऽपरपदार्थोपस्थितिः पदान्तरोपस्थितिश्च समूहालम्बनरूपेत्यादिक्रमेण पदार्थोपस्थितावासत्तिः पदोपस्थिते रव्यवधानमपि पूर्वोक्तलक्षणसाधारण्यं प्रकृतान्वयबोधानुगुणलक्षणघटितं बोध्यम् नतु आसत्तिभ्रमादन्वयबोध इति सर्वैर्गीयते स कुतोऽस्ति वाच्यं यत्र व्यवहितपदोपस्थितावव्यवहितत्वदोषव्यवहितायां पदार्थोपस्थितौ अव्यवहितत्वभ्रमो तत्र तत्सम्भवात् । अथैवमासत्तिज्ञानस्य शाब्दबोधहेतुत्वे रूपवत्याः पदजन्यपदार्थोपस्थितेः पृथक्कारणत्वे किं मानं, न च विशेषणज्ञानसाध्यं विशिष्टज्ञानमिति विशेषणज्ञानत्वेन कारणमिति वाच्यम् आसत्तिज्ञानस्यैव पदार्थविषयकत्वेन विशेषणज्ञानत्वादिति चेन्न तद्विरहेणापि शाब्दधीविलम्बात् तस्यापि पृथक्कारणत्वात् न च तद्व्यतिरेकस्थाने आसत्तिविरहादेव शाब्दधीविलम्ब इति वाच्यं नह्यासत्तिः स्वरूपसती हेतुः किन्तु तज्ज्ञानमेव तद्व्यतिरेकस्थानेऽपि सम्भवादिति निर्वचनात्तदसत् एकवृन्तपस्थाप्यप्रतिवर्तमानत्वयोरन्वयबोधस्थानेऽव्याप्तेर्यत्तानुमित्यादिना एकदैव पदजातमनुमितं स्मृतं वा ततश्च समूहालम्बनपदार्थस्मरणं जात तत्राव्याप्तेश्च तत्र प्रत्येकपदार्थोपस्थितेरभावात् नच तत्रापि क्रमिकप्रत्येकपदार्थोपस्थितिः कल्पनीयेति वाच्यम् अनुभवविरोधात् प्रत्येकपदार्थोपस्थितिमन्तरेणापि तत्र शाब्दबोधस्यानुभविकत्वात् किञ्च तस्याः स्वरूपसद्धेतुत्वं स्वयमेव निराकृतं क्रमिकप्रत्येकपदार्थोपस्थितेः शाब्दबोधात् पूर्वं विनष्टत्वात् नाप्येतज्ज्ञानं कारणं मानाभावात् तदुपस्थितिज्ञानविलम्बात् शाब्दबोधविलम्बस्याननुभविकः न च दैवाददृष्टादिना पदार्थोपस्थितौ पदजन्यत्वभ्रमेण शाब्दबोधानुदयात् तज्ज्ञानस्यापि हेतुत्वमिति वाच्यं इत्थं पदजन्यपदार्थोपस्थितेः स्वरूपसतो हेतुत्वानङ्गीकारे शाब्दबोधाभावात् अव्यवधानांशवैयर्थ्याच्च न चैतदुभयमानन्तरं शाब्दानुभवदर्शनादेतज्ज्ञानं हेतुरिति वाच्यं नहि यत्सत्त्वे यदुत्पद्यते तदेव तत्कारणं, घटाव्यवहितपूर्ववर्तिनां तत्पदार्थानामेव घटहेतुत्वापत्तेः न च पदजन्यपदार्थोपस्थितौ अव्यवहितत्वाव्यवहितपदजन्यत्वयोः संशये व्यवहितत्वव्यवहितपदजन्यत्वनिश्चये च शाब्दबोधानुत्पत्तेस्तन्निश्चययोर्हेतुः तयोः प्रतिबन्धकत्वकल्पने गौरवादिति वाच्यं तात्पर्यज्ञानसत्त्वे व्यवहितत्वव्यवहितपदजन्यत्वग्रहेऽपि शाब्दबोधदर्शनादनुत्पत्तेरेवासिद्धेः नचैवं व्यवहितपदघटितश्लोकादौ योजनायां कारितायामेवान्वयबोधोत्पत्तिस्तदन्यथा कुतस्तत्र किं बीजमिति वाच्यं योजनायास्तात्पर्यग्राहकत्वात् । अतएव यस्य योजनां विनैव तात्पर्यग्रहस्तस्य न योजनापेक्षा । एतेन अन्वयप्रतियोगिपदं तदुपस्थापकपदं तथा च तदुपस्थापकपदोपस्थित्यव्यवधानेन तदुपस्थापकपदोपस्थितिस्तयोरासत्तिः न तु पदार्थोपस्थितीनामव्यवधानमपेक्षितमिति केनाप्युक्तमप्यपास्तं तन्मतेऽन्योन्याश्रयापत्त्यानुपस्थितेः समूहालम्बनोपस्थितिमादाय सर्वत्राप्तः सत्त्वेन आसत्तिज्ञानसार्थविभागव्याघातापत्तेः । न च भेदगर्भमव्यवधानं विवक्षणीयं पूर्वोक्तदोषाणामपि दुष्टेः । एतज्ज्ञानस्य कारणत्वे उक्तरूपेण मानाभावाच्च । केचित्तु अव्यवधानेनेति विशेषणे तृतीया अन्वयप्रतियोगिपदस्य अन्वयप्रतियोगिन उपस्थितिर्यस्मात् इति व्युत्पत्त्या अन्वयप्रतियोग्युपस्थापकपरं तथा च तत्पदार्थान्वितत्पदार्थशाब्दबुद्धौ तत्पदे तत्पदाव्यवधानमासत्तिः नतूपस्थितीनामव्यवधानं विवक्षितं कौलश्लोकादौ विपरीतरूपदोषविशेषात् अव्यवधानक्रमेणान्वयबोधः । न चैवं श्लोकादौ योजनायामन्वयबोधो न स्यात् पदानां व्यवधानेनोच्चारितमिति विशेषदर्शनेन बाधकसम्भवात् इति वाच्यं योजनयोपस्थितवाक्यान्तरादेव तत्रान्वयबोधात् न तु श्लोकादितः । अव्यवधानज्ञानगुणरूपभेदाभेदसाधारणं स्वपरसाधारणञ्च वाच्यं तेनैकपदाद्युपस्थितयोः प्रतिवर्तमानत्वयोरन्वयबोधेऽपि न वाध्यनुपपत्तिरित्याहुः तदसत् वस्तुमात्राभ्यो अन्योन्याश्रयापत्त्यानुपस्थितेश्चात् पर्यादिज्ञानसत्त्वे अव्यवधानज्ञानाभावेऽपि शाब्दबुद्धेरानुभविकत्वाच्च नव्यास्तु इत्थं पदधीजन्यपदार्थोपस्थितिरासत्तिरियञ्च स्वरूपसत्येव हेतुः अतएव निष्कृष्टा आसत्तिस्तु यद्यपि स्वरूपसत्येव प्रयोजिका इत्यादिप्रभाकरोपाध्यायेनोक्तं न च एतस्या अपि कारणत्वे मानाभाव इति वाच्यं तथाहि आनयेति वाक्यमाकर्णयतः प्रत्यक्षेण घटं पश्यतो घटस्य शाब्दबोधापत्तेः घटमानयेति वाक्यमाकर्णयतः कारणतया घटपदकारण

वाक्यकरणवत् आकाङ्क्षस्य शाब्दबोधापत्तेः नचैवं गिरि-र्भुक्तमग्निमान् देवदत्तेनेत्यादितो गिरिरग्निमान् भुक्तं देवदत्तेनेत्यन्वयबोधापत्तिरिति वाच्यं तथा तात्पर्य्य-प्रकरणे इष्टापत्तेः कदाचित् तत्र तथान्वयबोधस्य सर्व्वैरेव इष्टत्वात् नचैवं क्वचिद्योजनायाः कथमुपयोग इतिवाच्यं तात्पर्य्यग्रहार्थं तदुपयोगितेत्युक्तत्वादिति प्राञ्चः अव्यवधानेनान्वयप्रतियोग्युपस्थितिरासत्तिरुक्ता सा च शाब्दबोधाङ्गेव तथा च तत्रापि आसत्तिः कारणं सा च शाब्दबुद्धिरूपा तत्रास्य यद्यपरासत्तिः कारणं तदा अन-वस्था फलीभूता चेत् अन्योन्याश्रय इत्यतआह सा चेति प्रकृतादन्वयबोधनिर्वाहकपदजन्यपदार्थोपस्थितिपरिपाटी पदर्थविशेषायक्ते अथेति नव्यास्तु ननु इत्यत्रा पद जन्यप-दार्थोपस्थितिचेदासत्तिस्तदा नानाविशेषणकस्थाने कथमन्वय-बोधः? सर्व्वासां पदार्थोपस्थितीनाम् एकदाऽसम्भवादि-त्याशङ्कते अथेति इत्याहुः। नैककं नैकनम्। विशेषणज्ञान-साध्यत्वादिति विशेषणं पदार्थस्तदुपस्थितिसाध्यत्वात् इत्यर्थः इत्यत्रा पदधीजन्येत्यादिः। विशिष्टज्ञानस्य शाब्दबोधानुभ-वस्य। नैककात् समूहात् एकदैव तावत्पदस्मृतिः न च सक-लपदगोचरस्मरणाभावेऽपि प्रत्येकपदानुभवजनितप्रत्येकपदार्थ-स्मरणाहितसंस्कारैश्च एव सकलपदार्थगोचरमेकं स्मरणं सम्भवति तथा च सकलपदगोचरैकस्मरणपर्य्यन्तानुधा-वनं विफलमिति वाच्यं प्रकारान्तरेण पदार्थोपस्थितेः शाब्दबोधाहेतुत्वात् पदज्ञानजन्यत्वोपपत्तये तदनुधावनात् ननु श्रोत्रेण प्रत्येकपदानुभवोऽपि न सम्भवति तथाहि आदौ घोत्पत्तिस्ततो द्वितीयकाले घत्वनिर्विकल्पकोत्पत्तिः अकारोत्पत्तिश्च अथ तृतीयकाले अकारतत्त्वनिर्विकल्पक-घत्वविशिष्टधीटोत्पत्तिघनाशाः ततश्चतुर्थकाले घत्वविशिष्टधी टत्वनिर्विकल्पकाकारनाशचरमाकारोत्पत्तयः इदानीञ्च घकारभानं न सम्भवति प्रत्यक्षं प्रति विषयस्य हेतुत्वात् ततः पञ्चमकाले टत्वविशिष्टबोधाकारतत्त्वनिर्विकल्पकटकारनाशाः इदानीं प्राथमिकाकारभानं न सम्भवति तदभावात् ततः षष्ठक्षणे अत्वविशिष्टबोधाकारनाशौ इदानीं टकारभानं न सम्भवति तदभावात् तथा च कथं वर्णसमूहात्मकपद-गोचरश्रौत्रानुभवः न च पूर्व्वपूर्व्ववर्णोपनयसहितान्त्य-वर्णसन्निकर्षात् श्रौत्रानुभवसम्भव इति वाच्यं बहि-रिन्द्रियजप्रत्यक्षे उपनीतं विशेषणतयैव भासते इति नियमात् प्रत्येकवर्णसमूहस्य विशेष्यकपदप्रत्यक्षस्योपनय-मर्य्यादया असम्भवात् पदप्रत्यक्षे प्रत्येकं सर्व्वस्य वर्णस्य तस्य विशेष्यत्वात् न च पूर्व्ववर्णोऽन्त्यवर्णविशेषणतया भासत इति वाच्यं पूर्व्ववर्णेऽन्त्यवर्णविशेषणत्वनियामकस्य तत्सम्बन्धस्याभावात् इति चेत् मैवं घादिवर्णसमुदायमात्रं न घटादिपदं टघादेरपि घटपदत्वापत्तेरपि तु अव्यवहितो-त्तरत्वसम्बन्धेन पूर्वपूर्ववर्णवदुत्तरोत्तरवर्ण एव पदं तत्र सव-र्था न दुर्ग्रहं पूर्व्वपूर्ववर्णोपनयसहकारेणाव्यवहितोत्तरत्व सम्बन्धेन उत्तरोत्तरवर्णविशेषणतया पूर्वपूर्ववर्णप्रत्यक्षसम्भवात् वैयाकरणास्तु पूर्व्ववर्णस्य ज्ञानरूपाया उपनयसामग्र्याः सत्त्वे-ऽपि पूर्ववर्णस्यैवोत्तरवर्णे विशेषणत्वेन भाने नियाम-काभावात् विनिगमनाभावेन अव्यवहितपूर्व्वत्वसम्बन्धेनैव उत्तरोत्तरवर्णस्यापि विशेषणतया भानस्य दुर्व्वारतया असृतपठ्योस्तुल्यपदत्वापत्तेः तथा च असृपदोच्चारणे तपदस्य श्रवणप्रत्यक्षत्वापत्तिरित्यतो वर्णसमुदायादन्यः स्फोट-एव पदमित्याहुः तद्विशेषश्च स्फोटशब्दे वक्ष्यते।

अत्रायं विशेषः। चिन्तामणिमते शब्दाध्याहारएव मधु-रानाथेन तु आसत्तिग्रन्थशेषे अर्थाध्याहारोऽपीति व्यवस्थापितम्। यथा "अस्तु वा शब्दाध्याहार एवावश्यक स्तथापि तज्जन्यपदार्थोपस्थितित्वेन कुतो हेतुत्वं लाघ-वात् पदार्थोपस्थितित्वेन हेतुत्वस्योचितत्वात् तथा च श्वेतं धावतीत्यादौ सति तात्पर्य्ये यथाकथञ्चिदुप-स्थितघटादेरप्यन्वयबोध इत्यर्थाध्याहारपक्ष एव सम्यक्" "वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः" सा०द०। "आसत्तिक्रमेणान्वयः" रघु०।

**आसदन** न० आ+सद–ल्युट्। १प्राप्तौ २नैकट्यसम्बन्धे च।

**आसन** न० आस–ल्युट्। १स्थितौ "एकत्रासनभोजनैः" स्मृतिः। २स्वस्थानस्थितिरूपे राज्ञां षड्गुणान्तर्गतगुण-भेदे च। [illegible]। "परस्परस्य सामर्थ्य-विघातादासनं स्मृतम्। अरेश्च विजिगीषोश्च यानवत् पञ्चधा स्मृतम्"। यानस्य पञ्चविधत्वञ्च। "विगृह्य सन्धाय तथा सम्भूयाथ प्रसङ्गतः। उपेक्षया च निपुणैर्यानं पञ्चविधं स्मृतमिति" अमरेणोक्तम्। "परस्य सस्य सैन्यानां नाशं मत्वा स्थितस्य। आसनं स्वामिने ब्रूयात् मन्त्री स्वामिहिते रतः" इत्युक्ते ३लिङ्गिनो योगाङ्गनि-षण्णव्यापारे च। आस्यतेऽत्र आधारे ल्युट्। ४उपवेशना-धारे कम्बलाद्यासने। "आसनं वसनं शय्या दाराभाण्ड-मपस्करम्। आत्मनस्तु शुचि प्रोक्तं न परेषां कदाचन" आ०त०पु०। "प्रयतस्तत्रासनया उपागतः" रघुः। "स्वक्षाटस्त्वनिमासने मुनिः" माघः "कृताञ्जनं कोलमके-

तस्मात्तनूनपातं यजति । अथेडो यजति प्रजा वा इडो यद्वा वै रेतः सिक्तं प्रजायतेऽथ तदीड़ितमिवाचरमिच्छमानं चरति तत् प्रैवैतज्जनयति तस्मादिडो यजति । अथ बर्हिर्यजति । भूमा वै बर्हिर्भूमानमेवैतत् प्रजनयति तस्माद्बर्हिर्यजति । अथ स्वाहास्वाहेति यजति । हेमन्तो वा ऋतूनां स्वाहाकारो हेमन्तो हीमाः प्रजाः स्वं वशमुपनयते तस्माद्धेमन्नाम्लायन्त्योषधयः प्र वनस्पतीनां पलाशानि मुच्यन्ते प्रतितरामिव वयांसि भवन्त्यधस्तरामिव वयांसि पतन्ति विपतितलोमेव पापः पुरुषो भवति हेमन्तो हीमाः प्रजाः स्वं वशमुपनयते' । शत० ब्रा० १,५,४,२ । ऋतूनां पञ्चप्रयाजभागित्वमग्निप्रार्थनयैव जातम् इत्युक्तं तत्रैव "ऋतवो ह वै देवेषु यज्ञे भागमीषिरे आ नो यज्ञे भजत मा नो यज्ञादन्तर्गतास्त्वेव नोऽपि यज्ञे भाग इति । तद्वै देवा न जज्ञुः । त ऋतवो देवेष्वजानत्सु असुरानुपावर्त्तन्ताप्रियान्देवानां द्विषतो भ्रातृव्यान् । ते हैतामेधितुमेधाञ्चक्रिरे । यामेषामेतामनु शृण्वन्ति कृषन्तो ह स्मैव पूर्व्वे वपन्तोयन्ति लुनन्तोऽपरे मृणन्तः शश्वद्धैभ्योऽकृष्टपच्या एवौषधयः पेचिरे । तद्वै देवानामागश्चास । कनीयः कनीयो ह्वैतद्भवति यद्द्विषन्द्विषतेऽरातीयति किमेतावन्मात्रमुपजानीत यथेदमितोऽन्यथा सदिति । ते होचुः ऋतूनेवानुमन्त्रयामहा इति केनेति प्रथमानेवैनान् यज्ञे यजामेति । स हाग्निरुवाच । अथ यन्मां पुरा प्रथमं यजथ क्वाहं भवानीति न त्वामायतनाच्च्यावयाम इति ते यदृतूनभिक्रामाश्चयाग्निमायतनान्नाच्यावयंस्तस्मादग्निरच्युतो नो ह वा आयतनाच्च्यवते यस्मिन्नायतने भवति य एवमेतमग्निमच्युतं वेद । ते देवा अग्निमब्रुवन् । परे ह्येमांस्त्वमेवानुमन्त्रयस्वेति स हेत्याग्निरुवाच, ऋतवोऽविदं वै वो देवेषु यज्ञे भागमिति कथं नोऽविद इति प्रथमानेव वो यज्ञे यक्ष्यन्तीति । त ऋतवोऽग्निमब्रुवन् आ वयं त्वामस्मासु भजामो यो नो देवेषु यज्ञे भागमविद इति स एषोऽग्निर्ऋतुष्वाभक्तः समिधो अग्ने तनूनपादग्न इडो अग्ने बर्हिरग्ने स्वाहाग्निमिति' शत० ब्रा० १,६,१,७,८ । प्रयाजं चरन्तीत्युपक्रम्य "इड अग्न आज्यस्य व्यन्त्विति तृतीयः" आश्व० श्रौ० । "इडस्पदे समिध्यसे" यजु० १५,३० "इडः पृथिव्याः" वेददी० ।

**इड़ा (ला)** स्त्री इल–अच् वा लस्य डत्वम् । १गवि, २वाचि, ३भूमौ "प्रबुध्यते ननिमिड़ायास्पदे" भा०व० २२५ अ० । "इडा पिन्वते विश्वदानीम्" ऋ०४,५०,८, "इडा भूमिः" भा० । इल+गतौ करणे घञर्थे क । देहस्थे ४नाडीभेदे । "इडा च पिङ्गला चैव सुषुम्णा च सरस्वती अलम्बुषा कुहूश्चैव शङ्खिनी शिखिनी तथा । विश्वोदरी विश्वमुखी व्याप्रप्राह्वा ताश्चतुर्दश" इति तन्त्रोक्तासु प्रधानासु चतुर्दशसु नाडीषु तिस्रः प्रधानाः तथा हि । "शिराः शतानि सप्तैव" या० "शिराः नाभिसंबद्धाश्चत्वारिंशत् वातपित्तश्लेष्मवाहिन्यः सकलकलेवरव्यापिन्यो नानाशाखाः सत्यः सप्त शतानि भवन्तीति" मिता० । "सप्त शिराशतानि, सुश्रु० । तेन देहमध्ये सप्त शतानि नाड्यः तन्मध्ये एताश्चतुर्दश प्रधानतयोक्ताः । तासु मध्येऽपि तिस्रः प्रधानाः देहस्थनाड़ीरुपक्रम्य । शारदा० "नाड्यस्तत्र समुद्भूतास्तासु मुख्यास्तिस्रः समीरिताः । इड़ा वामे स्थिता नाड़ी पिङ्गला दक्षिणे मता । तयोर्मध्यगता नाड़ी सुषुम्णा च समाश्रिता । पादाङ्गुष्ठद्वयं याता शिखाभ्यां शिरसा पुनः । ब्रह्मस्थानं समापन्ना सोमसूर्य्याग्निरूपिणी । तस्या मध्यगता नाड़ी चित्राख्या योगिवल्लभा । ब्रह्मरन्ध्रं विदुस्तत्र पद्मसूत्रनिभं परम् । इड़ायां सञ्चरेच्चन्द्रः पिङ्गलायां दिवाकरः । ज्ञातौ योगनिदानज्ञैः सुषुम्णायां तु तावुभौ" तत्स्थानरुद्धा कार्य्यमाह "इड़याकर्षयेद्वायुं बाह्यं षोडशमात्रया । धारयेत्पूरितं योगी चतुःषष्ट्या तु मात्रया । सुषुम्णामध्यगं सम्यक् द्वात्रिंशन्मात्रया शनैः । नाड्या पिङ्गलया चैनं रेचयेद्योगवित्तमः । प्राणायाममिमं प्राहुर्योगशास्त्रविशारदाः" २५ पटले । "पिङ्गलायां स्थिता ह्रस्वा इड़ायां संवृताः परे (दीर्घाः) । सुषुम्णामध्यगा ज्ञेयाश्चत्वारो ये नपुंसकाः" शार० ५ प० । दीर्घादिरयमित्यन्ये । ५हविर्भेदे च "यजमानपञ्चमा इड़ां भक्षयन्ति" श्रुतिः । ६स्वले च तत्रैव "इड़ां गोमित्रावरुणोत इष्टम्" ऋ०७,६४,२ "इड़ामन्नम्" भा० "घृतैर्गव्यूतिमुक्षतमिडाभिः" ऋ० ७,६४,४ । "इड़ाभिरन्नैः" भा० । ७देवीभेदे "स्मृतिः प्रीतिरिडा कान्तिः शान्तिः पुष्टिः क्रिया तथा । शिष्टाश्च देव्यः" इत्युपक्रम्य । "उपतस्थुर्महाभागं बलिमिन्द्र महारथम्" हरिवं० २५६ अ० "इड़ा देवी भारती विश्वतूर्त्तिः" ऋ० ५,२,८ । "अभि न इड़ायूथस्य माता" ऋ०५,४१,१९ । "इडा गोरूपधरा मनोः पुत्री माध्यमिका वाक् वेति" भा० । बुधस्य जायायां पुरूरवसो मातरि पश्चात् मनुपुत्रत्वे सुद्युम्नतया ख्यातायां मित्रावरुणयोरंशजातायां कन्यायाञ्च तत्कथा हरिवं० "अकरोत् पुत्रकामस्तु मनुरिष्टिं प्रजापतिः । मित्रावरुणयोस्तात पूर्व्वमेव

विशाम्पते ! । अनुत्पन्नेषु नवसु पुत्रेष्वेषु तु भारत ! । तस्यान्तु वर्त्तमानायामिष्ट्यां भरतसत्तम ! । मित्रावरुण-योरंशे मनुराहुतिमाजुहोत् । आहुत्यां हूयमानायां देवगन्धर्वमानवाः । तुष्टिञ्च परमां जग्मुर्मुनयश्च तपो-धनाः । अहोऽस्य तपसो वीर्य्यमहो श्रुतमहोऽद्भुतम् । तत्र दिव्याम्बरधरा दिव्याभरणभूषिता । दिव्यसंहनना चैव इड़ा जज्ञे इति श्रुतिः । तामिलेत्येव होवाच मनुर्दण्ड-धरस्तदा । अनुगच्छस्व मां भद्रे तमिला प्रत्युवाच ह । धर्म-युक्तमिदं वाक्यं पुत्रकामं प्रजापतिम् । इड़ोवाच । मित्रावरुणयोरंशे जाताऽस्मि वदतांवर ! । तयोः सकाशं यास्यामि न मां धर्मो हतोऽवधीत् । सैवमुक्त्वा मनुं देव मित्रावरुणयोरिला । गत्वाऽन्तिकं वरारोहा प्राञ्जलि-र्वाक्यमब्रवीत् । अंशेऽस्मिन् युवयोर्जाता देवौ ! किं करवाणि वाम् । मनुना चाहमुक्ता वै अनुगच्छस्व मामिति । तां तथा वादिनीं साध्वीमिलां धर्मपरा-यणाम् । मित्रश्च वरुणश्चोभावूचतुर्यन्निबोध तत् । अनेन तव धर्म्मेण प्रश्रयेण दमेन च । सत्येन चैव सुश्रोणि ! प्रीतौ स्वो वरवर्णिनि ! । आवयोस्त्वं महाभागे ख्यातिं कन्येति यास्यसि । मनोर्वंशकरः पुत्रस्त्वमेव च भविष्यसि । सुद्युम्न इति विख्यातस्त्रिषु लोकेषु शोभने । जगत्प्रियो धर्म्म-शीलो मनोर्वंशविवर्द्धनः । निवृत्ता सा तु तच्छ्रुत्वा ग-च्छन्ती पितुरन्तिकम् । बुधेनान्तरमासाद्य मैथुनायोपम-न्त्रिता । सोमपुत्राद्बुधाद्राजंस्तस्यां जज्ञे पुरूरवाः । जनयित्वा सुतं सा तमिला सुद्युम्नतां गता" ।

८ दुर्गायाञ्च "आचार्य्यां भद्रिरां चण्डीमिलां मलयवासि-नीम्" हरिवं० १७८अ० दुर्गास्तवः । इडैव स्वार्थे कन् तत्रार्थे

**इडाचिका** स्त्री इडावत् स्वच्छं मध्यभागम् अचति अच—ण्वुल् इत्०टापि अत इत्वम् । वरटायाम् (बोलता) शब्दच०

**इडिक्क** पु० वनभवे छागे हेम० [ अप् । इषे छोरस्वा०

**इडुर** पु० इडतीति इट् इषस्तन्तो तया म्रियते ह—कर्म्मणि

**इडीय** त्रि० इडाया अवस्थादूरदेशः उत्करा० छ । अव-स्थादूरदेशादौ

**इण्** गित् इच्छोभेदार्थम् अदा० पर० सक० अनिट् । एति इतः यन्ति । इयात् इहि एतु आयत् अगात् इयाय ईयतुः ईयुः इययिथ इयेथ ईयिव । एता एष्यति ऐष्यत् एतव्यम अयनीयम् इत्यम् । एता, आयकः इतः इतिः अयनम् अयः आयः अयम् ईयिवान् ईयुषी । इत्वा इत्वा उपेत्य । "अनवक्तेति मामदत्" ऋ०१,१४०,५, "इतः क्व मैत्रावरुणौ किमेतौ ?" भट्टिः "अहस्त्र भाष्य-कारश्च कुशाग्रीयधियावुभौ, नैव शब्दाम्बुधेः पारम्" कलापप० "एमीदेषां निष्कृतं जारिणीव" ऋ०१०,३४,५. "आयन्नापोऽयनमिच्छमानाः" ऋ० ३,३३,७, "अगात् सरोजं जलमध्ययोध्यम्" "ईयुर्भरद्वाजमुनेर्निकेतम्" "ततृष्वतः प्रथमियाय मन्मः" भट्टिः "सुहृद्रथोवर्त्तते यत्" ऋ० १,१८३,२ "यन्ति वा आप एत्यादित्य एति चन्द्रमा यन्ति नक्षत्राणि" शत०ब्रा० ११,५,७,१० "मामेवैष्यत्य संशयम्" "मामेवैष्यति कौन्तेय !" इति च गीता "अपो-दामी स धर्मात्मा इयान्न दर्शनम् रहः" भा०आ०८२अ० कर्म्मणि ईयते "इन्द्रोमायाभिः पुरुरूपईयते" श्रुतिः "वनितयाऽनितया" रजनीवधूः" रघुः

अति+अतिक्रमे सक० "नात्येति सकृदाहृता" स्मृतिः "षड-शीतिमुखेऽतीते" "अतीते चोत्तरायणे" स्मृतिः "अ॰. चेत् पञ्चमीं रात्रिमतीत्य परतोभवेत्" शुद्धित० स्मृतिः अभि+अति+आभिमुख्येनातिक्रमे सक० "योऽस्य स्वर्गीलोकोऽ-जितोभवेत् तमभ्यत्येति" शत० ब्रा० १२,५,२,८, ।

वि+अति+विशेषेणातिक्रमे "व्यतीतकालस्त्वहमभ्युपेतः"

अधि+चिन्तने गत्यर्थस्य प्राप्त्यर्थत्वात् ज्ञानार्थताञ्च लाभे ज्ञाने च । इकवत्

अनु+अनुगमने सक० । "आदित्यं वा अस्तं यान्तमन्ये देवा अनुयन्ति" शत०ब्रा० ११,६,२,४ । "सुताम्बितो दशरथ इत्युदाहृतः" भट्टिः सन्ततसम्बन्धे अन्वयः । "तदन्वये शुद्धिमति" रघुः शाब्दबोधोपयोगिसम्बन्धभेदे च । "साकाङ्क्षशब्दैर्यो बोधस्तदर्थान्वयगोचरः" शब्दशक्ति० सम+अनु सम्यगन्वये । "तत्तु समन्वयात्" शा०सू० ।

अन्तर्+अन्तर्गतौ अन्तरायः अन्तरेति इह शब्दे ९१९पृ० उदा०

अप+अपगमने अपसरणे अक० "अनुपेतमपेतकल्मषम्" भाग० "ध्रुवमपायेऽपादानम्" "अपाये यदुदासीनम्" भर्तृ० "सत्त्वे निविशतेऽपैति" भाष्यका० वि+विशेषेण विगमे "व्यपैति ददतः स्वधा" स्मृतिः "सत्याचारव्यपेतेन मार्गेणा-धर्षितः परैः" या० स्मृतिः ।

अपि+प्राप्तौ सक० "स्वमपीतो भवतीति स्वपितीत्याच-ते" श्रुतिः "पञ्च नद्यः सरस्वतीमपियन्ति सस्रोतसः" वाज० लये अक० अप्ययः अपीतिः "अपीतौ दर्शनात्" "स्वाप्य-यात्" शा०सू०

अभि--आभिमुख्येन गतौ सक० "देहात् प्रयेष्टमभ्येति हित्वे-मां मानुषीं तनुम्" अभि+उप+आभिमुख्येन प्राप्तौ सक०।

अभि+सम् आभिमुख्येन सम्यग्गतौ सक० "तं जातमभिसमीत देवाः" शत० ११,५,२, णिचि अबोधने गमादेशः। समगमयत् ते अजीगमत् त बोधने तु प्रत्या(प)ययति ते प्रत्यापिपत् त-प्रत्यायियत् त। सनि अबोधने गमादेशः जिगमिषति बोधे तु प्रतीषिषिषति। उपसर्गस्यावर्णात् परस्य गुणभावेन एत्वं प्राप्तौ वृद्धिरेकादेशः। अवैति अवैमि उपैति।

**इतण्ड** पुंन० इदि-रन् पृ०। उष्णाकर्षके मंदाकारे पदार्थे "अथैनमितण्डकाभ्यां परिस्तृणाति असौ वा आदित्य एषोऽग्निरहोरात्रे इतण्डे अमुं तदादित्यमहोरात्राभ्यां परिस्तृणाति तस्मादेषोऽहोरात्राभ्यां परिस्तृतः यद्वेवैनमितण्डाभ्यां परिस्तृणाति असौ वा आदित्य एषो अग्निरिमा उभयलोकावितण्डे अमुं तदादित्यमाभ्यां लोकाभ्यां परिस्तृणाति तस्मादेष आभ्यां लोकाभ्यां परिस्तृतः परिमण्डले भवतः परिमण्डलौ हीमौ लोकौ नौमौ लिदूतौ तयो एषोऽन्तोऽथो अनतिदाहाय" शत० ब्रा० ६,७,१,२५,२६, "परिमण्डलाभ्यामितण्डाभ्यामुखां परिस्तृणाति" कात्या० १६, ५, २, २, "उखा याभ्यां स्तृयते तौ इतण्डौ" कर्क०।

**इत्** त्रि० एति गच्छति इ-क्विप्। १मत्वरे व्याकरणोक्ते प्रक्रियाकालोच्चारिते प्रयोगकालेऽश्राविणि वर्णे वेदे यथा तिप् सिप् इत्यादौ पकारादि ते च "उपदेशेऽजनुनासिक इत्" "हलन्त्यम्" "न विभक्तौ तुस्माः" "आदिर्ञिटुडवः" "षः प्रत्ययस्य" "चुटू" "लशक्वतद्धिते" पा०सूत्रैः साप-वाद दर्शिताः तस्य लोप" इत्यनेन तस्य प्रयोगेऽदर्शनस्य विहितम् "आदिरन्त्येन सहेता" पा० २ अनन्तरार्थे ३अवधारणार्थे च अव्य० "यदेदन्ता अदद्दन्त पूर्व आदित्" यजु० १७,२५,, "आत् इत् इति च्छेदः इत् एवार्थे" वेददी० "उपोपेनु मघवन्! भूय इन्नु" यजु० २,२४, "इत् एवार्थे" वेददी० ५इत्थमित्यर्थे च "सन्ताहिमेत्तानि वरुणस्य व्रतानि" यजु० ४,२०, इदित्यव्ययमित्थमित्यर्थे" वेददी०

**इत** त्रि० इ-क्त। १गते "वनितानितवारणगोवधूः" रघुः भावे क्त। २गतौ "तदितादिवादयो पयः" शत० ब्रा० ६,२,१,१२। ३ज्ञाने च न०। "वीतमवीतञ्चेति" सां० कौ०।

**इतर** त्रि० इना कामेन तीर्य्यते तॄ-अप् तरति पचाद्यच् वा। १नीचे पामरे "इतरदिव परिभूय ज्ञानम्, अविगणय्य तपःप्रभावम्, उन्मूल्य गाम्भीर्य्यम्, मन्मथेन जड़ीकृतः" काद०। ईयतेऽनेन इतः विशेषस्तं राति रा क। २भेदाश्रये। "इतरतापशतानि यथेच्छया वितर तानि सहे चतुरानन!" उद्भटः। "यत्र हि द्वैतमिव भवति तदितर इतरम् पश्यति" श्रुतिः। "ते यतध्वं परं शक्त्या विजयायेतराय वा" भा० आ० १० अ०। "वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः" या० स्मृ० "इतराणि च रक्षांसि पेतुर्वानरकोटिषु" "इतरोदहने स्वकर्म्मणाम्" रघुः "तमिमं कुरु दक्षिणेतरम्" कुमा०। अस्य सर्वनाम कार्य्यम्। इतरे इतरस्मै इतरस्मात् इत्यादि। "विजयायेतराय वै" इत्यादि छान्दसम् न तत्-कार्य्यम्। वर्णाश्रमेतराणामित्यत्र बहुव्रीहिः तेन न सर्वनामकार्य्यम्। एवं "शरं सव्येतरे भुजे" रघुश्लोकेऽपि बहुव्रीहिः। तसिल् इतरतः। "जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्" भाग०। थाल् इतरथा "एवं देवत्वेतरथा मानुषे" शत० ब्रा० ६'८'१,८, इतरेण निर्वृत्तम् संकलादि० अञ्। ऐतरः। इतरानिर्वृत्ते त्रि० इतरस्या पत्यम् शुभ्रा० ढक्। ऐतरेयः तदपत्ये पुंस्त्री।

**इतरेतर** त्रि० इतर+द्वित्वं समासवद्भावश्च। अन्योन्यशब्दार्थे। "स्त्रीनपुंसकयोरुत्तरपदस्यायाविभक्ते राम्भावो वा वक्तव्यः" वार्त्ति० इतरेतराम् इतरेतरं वा इमे ब्राह्मण्यौ कुले वा भोजयतः" सि० कौ०। समासवद्भावात् एकत्वात्न पुंभावः इतरेतरेण "टखाद्ये टाबभावः क्लीबे चाड्विरहः स्त्रमोः। समासे सोरलुक् चेति सिद्धं बाहुलकात्त्रयमित्युक्तं कार्य्यं तेन क्लीबे इतरेतरमित्येव। "इतरेषां तु वर्णानामितरेतरकाम्यया" मनुः। "यथा नाभिचरेतां तौ वियुक्तावितरेतरम्" मनुः। परमतदादिवत् सर्वनामकार्य्यम्। किन्तु नाद्ड इति भेदः "व्यूहावुभौ ताविरेतरस्मात्" रघुः

**इतरेतरयोगः** पु० इतरेतरस्य योगः १अन्वयः। प्रत्येकप्राधान्येन सर्व्वनामन्वये। तदर्थे हि द्वन्द्वसमास इष्यते स चानेकवत् प्रत्येकप्राधान्यात्। धवश्च खदिरश्च इति वाक्ये हि धवखदिरौ इत्यत्र भिनत्तीत्यादि क्रियायां प्रत्येकस्य प्राधान्येनैवान्वयः तथा च एकजातीयक्रियान्वयितावच्छेदकविशिष्टे प्रत्येकान्वयबोधकत्वे इतरेतर योगाख्यः द्वन्द्वः संहतिप्राधान्ये तु समाहारद्वन्द्वः इति भेदः। २परस्परसम्बन्धे च।

**इतरेतराश्रय** पु० इतरेतरमाश्रयति आ+श्रि-अच्। अन्योन्याश्रये तर्कदोषभेदे अन्योन्याश्रय शब्दे २१७पृष्ठे विवृतिः।

**इतरेद्युस्** अव्य० इतरस्मिन्नह्नि इतर+एद्युस्। इतरदिवसे इत्यर्थे

**इतश्चेतश्च** अव्य०। इतश्च इत्थम्। अनियतदिग्भागादौ।

"इतश्चेतश्च विचरन् तस्मिन् मुनिवराश्रमे" देवीमा०।

**इतस्ततस्** अव्य० द्वन्द्वः। अनियतस्थाने इत्यर्थे "बाङ्कूल-विक्षेपविसर्पिशोभैरितस्ततश्चन्द्रमरीचिगौरैः" कुमा०।

**इतस्** अव्य० इदम्+तसिल् इशादेशः। १अस्मादित्यर्थे "इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्" कुमा०। २अ-स्मिन्नित्यर्थे च। "इतोनिषीदेति विसृष्टभूमिः" कुमा०। "प्रयुक्तमप्यस्त्रमितो वृथा स्यात्" रघुः।

**इति** अव्य० इण-क्तिच्। १हेतौ, २प्रकाशने, ३निदर्शने, ४प्रकारे, ५अनुकर्षे, ६समाप्तौ, ७प्रकरणे, ८स्वरूपे, ९सान्निध्ये, १०विवक्षानियमे, ११मते, १२प्रत्यक्षे, १३अव-धारणे, १४व्यवस्थायाम्, १५परामर्शे, १६माने, १७इत्य-र्थे, १८प्रकर्षे,१९उपक्रमे च। तत्र स्वरूपद्योतकता त्रिधा शब्दस्वरूपद्योतकता प्रातिपदिकार्थद्योतकता वाक्यार्थ-द्योतकता चेति भेदात्। तत्र शब्दस्वरूपद्योतकत्वे तद्योगे न प्रथमा। "कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्त्तते" पुरा० "अतएव गवित्याह भूसत्तायामितीडयम्" भर्तृहरिः "रामरामेति रामेति कूजन्तं मधुरं वचः" रामा० "रामेति रामभद्रेति रामचन्द्रेति वा जपन्" रामकवचम्। प्रातिपदिकार्थद्योतकत्वे प्रथमा। "चयस्त्विषामित्यवधारितं पुरस्तात् शरीरीति विभाविता-कृतिम्। विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः" माघः। "दशरथ इत्युदाहृतः" भट्टिः। "वदन्त्यपर्णेति च तां पुराविदः" कुमा०। वाक्यार्थ-द्योतकत्वे न प्रथमा निपातेनाभिहिते प्रतिपादिकार्थे एव प्रथमाविधानात् वाक्यस्य च शक्त्या लक्षणया वा एकार्थ-बोधकत्वाभावेन प्रातिपदिकत्वाभावात् "भू सत्तायामिती-डयम्" भर्तृ० "श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात्। प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदोषिका" मीमांसाका०। तत्र हेतौ "इतीव धारामवधीर्य्य" नैष० "इति स्म सा कारुतरेण लेखितम्" नैष०। प्रकारे "इति मदमदनाभ्यां रागिणः स्पष्टरागाः" माघः प्रकाशार्थे इतिहरि इत्यादौ अव्ययी०इदबर्थे "पिरोधिषिद्धमिति-कर्त्तुमुद्यतम्" प्रकरणे इतिकार्य्यमितिकर्त्तव्यम्। इति-वृत्तम्। भावे क्तिन्। २०गतौ २१ज्ञाने च स्त्री "प्राशावीद्धिपतम चतुष्पदित्यै" ऋ० १,१२४,१" । २२ ऋषिभेदे पु०।

**इतिक** त्रि० इत गमनमस्त्यस्य ठन्। मतिमति ततः नडा० गोत्रापत्ये फक्। ऐतिकायनः तद्गोत्रापत्ये पुंस्त्री

**इतिकथ** त्रि० इति इत्थं कथा यस्य। अर्थशून्यवाक्य-प्रयोक्तरि अश्रद्धेयवचने।

**इतिकथा** स्त्री इति इत्थं कथा। अर्थशून्यवाक्ये मेदि०।

**इतिकर्त्तव्य** त्रि० इति इत्थं कर्त्तव्यम्। इत्थं कर्त्तव्ये परि-पाटीयुक्ते कर्तव्ये। "एवं सर्वं विधायेदमितिकर्त्तव्यमा-त्मनः" मनुः "संदिदेशेतिकर्त्तव्यम् वज्रवेगप्रमाथिनौ" भा०व०२८५अ० "स च व्यवहारः कोदृशः कतिविधः कथमे-तिकर्त्तव्यताकलापोनाभिहितः" इति मिता० "कथयस्वेति कर्त्तव्यं श्वःकाले करवामहे" भा० आ० १९५ अ०। "धर्मे प्रमीयमाणे हि वेदेन करणात्मना। इतिकर्त्तव्यता-भागं मीमांसा पूरयिष्यति" पुरा० इतिकर्त्तव्यताद्यौष्यत। "तेषु तेष्विति कृत्यं हि पुरुषस्य समाप्यते" मनुः। "ततोऽर्जुनस्य कृष्णाय विनिश्चित्येतिकर्त्तव्यताम्" भा० आ०२२० अ०।

**इतिवृत्त** न० इत्थं वृत्तम्। इदंप्रकारान्विते चरिते। "इति-वृत्तं नरेन्द्राणामृषीणाञ्च महात्मनाम्" भा० आ०२अ० उपचारात् तज्ज्ञापके २पुराणादौ च। "भर्मेतिवृत्तं किल गेयमद्भुतम्" रामा०। "दूरानुवर्त्तिनि स्यात् तस्य प्रासङ्गिकेतिवृत्ते तु" सा०द०।

**इतिश** पु° ऋषिभेदे। तस्य गोत्रापत्यम् नडा० फक्। ऐति-शायनस्तद्गोत्रापत्ये पुंस्त्री।

**इतिह** अव्य० इति एवं ह किल द्वन्द्वः। उपदेशपरम्परायाम् यथाऽत्र वटे यक्ष इत्युपदेशपरम्परैव न तु केनापि दृष्टा तथा कथितम्। इति तस्य प्रसिद्धिमात्रता "इति होचुर्वृद्धा" शा०को०।

**इतिहास** पु० इतिह पारम्पर्य्योपदेश आस्तेऽस्मिन् आस-आधारे घञ् ६त०। "धर्मार्थकाममोक्षाणामुपदेशसमन्वितम्। पूर्ववृत्तकथायुक्तमितिहासं प्रचक्षते" इत्युक्तलक्षणे पुरावृत्त-प्रकाशके भारतादिग्रन्थे। "इतिहासपुराणाद्यैः षष्ठं सप्तमं नयेत्" दक्षः "स्वाध्यायं श्रावयेत् पित्र्ये धर्मशास्त्राणि चैव हि। आख्यानानीतिहासांश्च पुराणानि खिलानि च" मनुः। "वाकोवाक्यमितिहासपुराणः पञ्चमोवेदानां वेदः" छा०उ० "इतिहासोत्तमादस्माज्जायन्ते कविबुद्धयः। पञ्चभ्य इव भूतेभ्योलोकसंविधयस्त्रयः। भारतस्येतिहासस्य पुण्यां ग्रन्थार्थसंयुताम्। संस्कारोपगतां ब्राह्मीं ना-नाशास्त्रोपबृंहिताम्" भा०आ०१अ०इत्युक्तेः भारतस्येति-हासरूपत्वम्। "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" स्मृतिः। २अन्यस्मिन् पुरावृत्ते स च भारते स्वाभिम-

श्रौतौ "अश्वाष्टुदाहरन्तीममितिहासं पुरातनम्" इत्यनेन बहुशो दर्शितः। "नवमेऽहनि तार्क्ष्यो वैपश्यितस्तस्य वयांसि विषसामोमान्याचक्षत इति वयांसि ब्रह्मचारिण इत्युपसमानीताः स्युस्तानुपदिशतीतिहासोवेदः सोऽयमितीतिहासमाचक्षीत" आश्व०श्रौ० वेदभागविशेषस्यैवेतिहासरूपत्वमुक्तम्। तस्य पुराणसम्प्रतिपादकत्वात् तथेति बोध्यम् तदभिप्रायेणैव "वाकोवाक्यमितिहासपुराण इति" छान्दोग्यवाक्यमिति द्रष्टव्यम्। पौराणिकमतसिद्धे २ऐतिह्ये प्रमाणे च।

**इतिहासपुराण** न० इतिहासावेदकं पुराणम्। आथर्वणवेदभागभेदे शमा०६०२इतिहासपुराणसमाहारे च।

**इत्कट** पु० इतं गन्तारं जनं कटति आवृणोति स्वशिखाग्रफलेन कट—आवरणे अच् ६तत० (ओकड़ा) इति ख्याते तत्समीपगन्तुर्वस्त्रादौ हि तत्फलसंयोगात् गतिनिरोध इति लोकप्रसिद्धम्।

**इत्किला** स्त्री किल—शौक्ल्ये क किलः इत् गतः किलः शौक्ल्यं यस्मात्। रोचनायाम् गन्धद्रव्यभेदे शब्दच०।

**इत्थम्** अव्य० इदम्+थमु। १इदंप्रकारे इत्थम्भावः इत्थम्भूतः। २अनेन प्रकारेणेत्यर्थे च "इत्थमत्र विलपन्तममुञ्चत्" नैष०। "इत्थं रतेः किमपि भूतमदृश्यरूपम्" कुमा० "इत्थं व्रतं धारयतः प्रजार्थम्" रघुः। "इत्थमाराध्यमानोऽपि" कुमा० "इत्थं क्षितीशेन वशिष्ठधेनुः" रघुः। "सिद्धाप्रयोगे एतस्मिन् उपपदे णमुल्। इत्थङ्कारम् इत्थम्भावमित्यादि।

**इत्थम्भाव** पु० इत्थं भावः प्राप्तिः भू—प्राप्तौ घञ्। कस्यचित् प्रकारस्य प्राप्तौ।

**इत्थम्भूत** त्रि० इत्थं कञ्चित् प्रकारं भूतः प्राप्तः भू—कर्त्तरि क्त। कञ्चित् प्रकारं प्राप्ते "इत्थम्भूतलक्षणे" "लक्षणेत्थम्भूताख्यानभागवीप्सास्विति" च पा०।

**इत्थशाल** पु० इत्थं शल—अच् पृ०। नील०ता०उक्ते योगभेदे तल्लक्षणादि यथा "शीघ्रोऽल्पभागैर्बहुभागमन्देऽग्रस्थे निजं तेज उपाददीत स्वादित्थशालोऽयमथो त्रिविधाविधार्द्धहीनोयदि पूर्णमेतत्। शीघ्रोयदा भान्यनन्तरस्थितः सन् मन्देऽग्रभस्थे निदधाति तेजः। स्वादित्थशालोऽयमथैव दीप्तांशकाधिकांशैरिह मन्दपृष्ठे। तदा भविष्यद्बलमोक्षमित्थशालं विभेदं कृषयोक्षमाहुः"। "लग्ने शकार्याधिपयोर्बदैव योगस्तदा कार्यमुपैति सत्त्वः। लग्नेशकार्याधिपतत्पृथक्त्वावयव त्वरस्मिन् पतितौस्त्वदृष्टे। तदा बलाढ्यं कथयन्ति योग विशेषतः क्षेत्रसमाऽतिशस्तः। स्वक्षादिषत्स्थानगतः शुभैश्चेत् युतेक्षितोभूद्यितमपायाशे।

तदा शुभं प्रागभवत् सुपूर्णमध्ये भविष्यत्यपवर्त्तते च। व्यत्यस्तमस्मादिपरीतभावेऽथवेऽरिक्तोऽनिष्टपदं प्रपन्नः। अभूच्छुभं प्रागशुभं त्विदानीं संयातलाभे न च भावि वाच्यम्" नील०ता०। "प्रागित्थशालोऽपर इन्दुवारस्वेत्यशालोऽपर ईसराफः" "चेदष्टमेशेन कृतेत्थशालः" नील०ता० कम्बूलादौ विशेषः तत्तच्छब्दे वक्ष्यते अन्यत्र इति। इत्थशाली ताहशयोगवति ग्रहे।

**इत्था** अव्य० इदम्+थाल्—इदादेशः। १इत्थमित्यर्थे। "क इत्था वेद यत्र सः" कठो० "इन्द्रमित्थागिरोममाच्छाः" ऋ० १०२,४,२। २सत्ये निरु० इदम्+थम् थादेशः। ३इदंप्रकारेत्यर्थे। "इत्थाधिया यज्ञवन्त" ऋ० २,२७,६,

**इत्य** त्रि० इण—कर्म्मणि क्यप्। गम्ये। "इत्यः शिष्येण गुरुवत्" भट्टिः। "इत्थेऽनभ्यासस्य" वार्त्ति० तुम् अनभ्यासमित्यः दूरतः परिहर्त्तव्यः" सि०कौ०। भावे क्यप्। २गतौ स्त्री। "स्तेनस्येत्यामन्विहि तस्करस्य" यजु०१२,२२ "इत्यां गतिम्" वेददी०।

**इत्यक** पु० इत्यार्थं कायति शब्दायते कै—क इत्यायां गतौ राजभवनप्रवेशे अधिकतोया कन् स्वार्थे। प्रतीहाराधिकारिणि द्वारपाले। [ ईत्वरी।

**इत्वन्** त्रि० इण्—क्वनिप्। गन्तरि स्त्रियां ङीप् वनोरश्च।

**इत्वर** त्रि० इण्—करप्। १पथिके, २नीचे, ३क्रूरकर्म्मणि च। ४षण्डे पु०। स्त्रियां करबन्तत्वात् ङीप्। सा चाभिचारिणायां ५स्त्रियाञ्च "सपत्नीत्वरं स्या अगत्" ऋ० १०,८८,४। [इन्द्रशब्दे उ०।

**इद्** अव्य० इदि क्विप् वा० नलोपः। इत् इत्यस्यार्थे एवकारार्थे

**इद** ऐश्वर्य्ये इदित् भ्वा० पर० सक० सेट्। इन्दति ऐन्दीत् इन्दाम्—बभूव आस चकार। इन्द्रः।

**इदंयुग** न० कर्म्म०। एतद्युगे। इदंयुगे साधुः प्रतियुगा० खञ्। ऐदंयुगीनः एतद्युगसाधौ त्रि०।

**इदङ्कार्य्या** स्त्री इदं कार्य्यं यस्याः। १दुरालभायां शब्दच० २एतद्रूपकार्य्यान्विते त्रि०।

**इदन्तन** त्रि० अस्मिन् काले भवः नि०ट्युल् तुट् च। इदानीन्तने "यज्ञाशैनरिदन्तनैः" हर०स्मृतिः।

**इदन्ता** स्त्री इदमो भावः। इदंशब्दार्थभावे अङ्गुल्यादिना दर्शनयोग्यतायाम् "अनिर्द्देश्यमिति" श्रुतिपदव्याख्याने "इदन्तयानिर्द्देश्यमप्रत्यक्षम्" भाष्यम्।

**इदन्द्र** पु० इदं पश्यति दृश—बा० कुम् ईत०। परमात्मनि तस्य निरुक्तिरैतरेये दर्शिता यथा "स एतमेव पुरुषं ब्रह्म

त्सरमिति भानोर्मान्द्यशैघ्य्रसमागतिभिः समामनन्ति" भाग०५स्क०। "मण्डलाभ्यां चन्द्रार्कमण्डलाभ्यां सञ्चरन्तीति तेन यदा सूर्य्यस्य शुक्लप्रतिपदि संक्रान्तिर्भवति तदा सौरचान्द्रयोर्मासयोर्युगपदुपक्रमो भवति स संवत्सरः। ततः सौरमानेन वर्षे षट् दिनानि वर्द्धन्ते चान्द्रमानेन च षट् न्यूनानीति द्वादशदिनव्यवधानादुभयोरप्यसाङ्गत्यं भवति एवं पञ्च वर्षाणि गच्छन्ति तत्र द्वौ मलमासौ भवतः। ततः पुनः षष्ठः संवत्सरः" श्रीधरः। तथा च समकालारब्धसौरचान्द्रमासयुक्तोवत्सरःसंवत्सरः चान्द्रसौरमासयोरारम्भे समत्वपरिवर्ज्जितमासारब्धोवत्सरः परिवत्सरः। इदु इत्थं परिवत्, आरम्भे समत्वपरिवर्ज्जनवत्त्वेऽपि अन्ते तयोः समत्वस्यागतिमान् वत्सरः इदावत्सरः। अनुगतः सौरसंक्रान्तिं चान्द्रोमासो यत्र तादृशोवत्सरः अनुवत्सरः। अस्य वत्सस्य असंक्रान्तमासशून्यतया संक्रान्त्यनुगतचान्द्रमास घटितत्वेन तथात्वम्। उत्क्रान्तो रविसंक्रान्तिं चन्द्रमासोऽत्र पुनः समकालारम्भागतिमांश्च योवत्सरः स उदावत्सरः। अत एव इद्वत्सरः चान्द्रसौरयोर्मासयोरारम्भे समकालप्राप्त्यैव। एवमेषामन्वर्थकता द्रष्टव्या। पञ्चमवर्षे मलमासद्वयपातकथनमपि "पञ्चमे पञ्चमे वर्षे द्वौ मासावधिमासकौ। तेषां कालातिरेकेण ग्रहाणामतिचारतः" एतच्च प्रायिकं "द्वात्रिंशद्भिर्गतैर्मासैः दिनैः षोडशभिस्तथा। घटिकानां चतुष्केण पतति ह्यधिमासकः" काल० धृतसिद्धान्तवाक्यात् तेन प्रागुक्तभारतवाक्यं "मलमासः स विज्ञेयोमासे त्रिंशत्तमे भवेदिति" काठकगृह्यवाक्यञ्च ज्योतिःशास्त्रोक्तमध्यमानमाश्रित्यैव। सिद्धान्तवाक्यं तु स्फुटमानमाश्रित्येत्यनयोरविरोधः। एवमेव माधवादयः

**इद्वत्सर** पु० इद्–उ वत्सरः। इदावत्सरे। "इद्वत्सराय परिवत्सराय संवत्सराय" अथ०६,५५,२।

**इद्ध** न० इन्ध–भावे क्त। १आतपे, २दीप्तौ, ३आश्चर्य्ये च। कर्त्तरि–क्त। ४दीप्ते ५दग्धे च त्रि०। "समिद्धशरणादीप्ता" भट्टिः। "तमिद्धमाराधयितुं सकर्म्मकैः" माघः। "इद्धाबोधैरिति" भट्टौ बोधे इद्धत्वं सर्वशास्त्रस्फुरणार्थप्राप्तिम् शासने इद्धत्वमप्रतिहतत्वम्। "[मह्यो ददाति" भाग०।

**इद्धा** अव्य० इन्ध-धाच् नि०। प्राकाश्ये स्वरादिः "समिद्धमिद्धेव!

**इध्म** न० इध्यतेऽग्निरनेन इन्ध–मक्। १काष्ठे "यस्त इध्मं जभरत् सिष्विदानः" ऋ०४,२,६, "इध्मं काष्ठभारम्" भा०। २यज्ञियवर्हिर्भेदे पु०। वसुममाचकरणप्रकारादि कात्या०श्रौ० दर्शितम्। "अयुग्धातूनि यूनानि" स्रू०। "इध्मवन्धनवर्हिर्बन्धनार्थानि यूनानि संनहनानि रज्जवोऽयुग्धातूनि भवन्ति। धातवस्तृणगुणप्रक्षेपाः अयुजो विषमा एकत्रिपञ्चसप्तनवादिविषमसंख्या धातवोयेषां तान्ययुग्धातूनि। तथा चापस्तम्बः "त्रिधातु पञ्चधातु वा शुल्वं करोतीति" शुल्वं रज्जुमित्यर्थः। "पञ्चविंशतिकुशमयानि यूनानि" इति यज्ञपार्श्वे। तथा "समूलानाममूलानां वा दर्भाणां पूर्ववत् शुल्वं कृत्वोदगग्रं निधायेति" इध्मप्रस्तावे। मानवे च "शुल्वं प्रतिदधात्ययुग्धातु प्रदक्षिणमिति"। तैत्तिरीयके। "अथ त्रिरन्वाहितं शुल्वं कृत्वेति" कर्क०। बर्हिषो बन्धनप्रकारमाह। "प्रागग्रे यूनउदगग्रं बर्हिराचिनोति" स्रू०। प्रागग्रे यूने प्रागग्रे संनहने बन्धनार्थायां रज्जौ उदगग्रं बर्हिराचिनोति बन्धनाय स्थापयति" कर्क०। अथेध्मबन्धनस्य प्रकारमाह। "उदगग्रे प्रागग्रमिध्मम्" स्रू०। आचिनोतीत्यनुवर्त्तते उदगग्रे यूने संनहने प्रागग्रमिध्ममाचिनोति बन्धनार्थं निदधाति" कर्क०। "प्रत्यगग्रन्थिमवगूहति" स्रू०। इध्मवर्हिर्बन्धनार्थानां यूनानां ग्रन्थीन् प्रत्यगवगूहति यूने गाढं बद्धा यूनस्याग्रमूले संकल्प्य प्रदक्षिणमावेष्ट्य इध्मवर्हिषोरग्रभागे प्रोतयित्वा पश्चादिति तयोर्मूलभागे अवगूहति प्रेरयति प्रत्यक्शब्देन इध्मवर्हिषोःपश्चाद्भागो मूलभाग इत्युच्यते दिग्वाचिनोर्वर्हिरुदगग्रे निहिते असम्भवात्। काठके "ग्रन्थिं कृत्वा पुरस्तात् प्रत्यञ्चमपकर्षतीति"। मानवे "शुल्वस्यान्तौ समायम्य "पूषा ते ग्रन्थिमिति" प्रदक्षिणमावेष्टयति पश्चात् प्रत्यञ्चमपकर्षतीति" तैत्तिरीयेऽपि "पश्चात्प्राञ्चमुपगूहतीति"। आपस्तम्बः "पुरस्तात् प्रत्यञ्चं ग्रन्थिमुपगूहति पश्चाद्वा प्राञ्चमिति"। "अष्टादशेध्म परिधिवर्ज्जनाम्" स्रू०। "परिधीनां दृक्षाः पलाशखदिरविकङ्कतादयः परिधिवृक्षाः तेषां परिधिवृक्षाणां सम्बन्धिनः अष्टादशसंख्यकाष्ठकमिध्मं कुर्य्यात्। मानवे "समूलैर्दर्भैः पालाशं खादिरं रौहितकं वाष्टादशदार्विध्मं संनह्यति त्रींश्च परिधीन् योवाश्चियवृक्षस्येति"। काठके "अष्टादशदारु शुल्वं समानवृक्षस्य संनह्यति विंशति मिष्टौ पशुबन्धे चेति"। अतएव सामिधेनीवृद्धौ काष्ठवृद्धिर्भवति ह्रासे च ह्रासो न भवति पित्र्यादौ, तथा-ह्यापस्तम्बः "सामिधेनीवृद्धौ काष्ठानि विवर्धन्ते प्रकृतितो ह्रसमानात्तु प्रकृतिवदिति"। उपवस्त्र तु "मासावदिध्मा

बर्हिरिति” वचनात् ह्रासः । “इध्मप्रमाणं चारत्निरिति सद्भिः प्रकीर्त्तितमिति” कात्यायनः(कर्मप्रदीपे) तथा “समित्-पवित्रं वेदं च कुर्य्यात् प्रादेशसंमितम् । इध्मस्तु द्विगुणः कार्य्यः परिधिस्त्रिगुणः स्मृतः” “स्मार्त्ते प्रादेश इध्मो वा द्विगुणः परिधिस्तत” इति । “एकविंशति वा” सू०। अथ वा एकविंशतिमेकत्रिंशतिसंख्याककाष्ठकमिध्मं कुर्य्यात् तथा चापस्तम्बः “खादिरं पालाशं वैकविंशतिदारुकमिध्मं करोति” । “ततः परिधीनेके” सू० । एके आचार्य्यास्तत एकविंशतिसंख्यकाष्ठकादिध्मात्त्रीणि काष्ठान्यरत्निमात्राण्ययेवोपादाय परिधीन् परिदधति “तद्वेकइध्मस्यैवैतान् परिधीन् परिदधतीति” श्रुतेः । अथ वैकमेवेदं सूत्रम् “एकविंशति वा ततः परिधीनेके” इति एके आचार्य्या विकल्पेन एकविंशतिसंख्यकाष्ठमिध्मं कुर्वन्ति तत इति तस्मादेवैकविंशतिकाष्ठकेध्मात् परिधीन् परिदधति च । एतदेव युक्ततरम् आपस्तम्बसूत्रे एकविंशतिकाष्ठानां विभागदर्शनात् । तथा चाहापस्तम्बः “खादिरं पालाशं वैकविंशतिदारुकमिध्मं करोति त्रयः परिधयः पालाशकाष्ठकाः खादिरौदुम्बरविल्वरोहितकविकङ्कतानां ये वा यज्ञिया वृक्षा आर्द्राः शुष्का वा सत्वचकाः,स्थविष्ठो मध्यमोऽणीयान्द्राघीयान्दक्षिणार्ध्यो ह्रसिष्ठ उत्तरार्ध्यो द्वे, आघार समिधावनुयाज समिदेकविंशतिः समूलानाममूलानां वा दर्भाणां पूर्ववत्कुत्स्नं कृत्वोदगग्रं निधायेति” । अथ एवंविधमेकीयमतम् यदेकविंशतिकाष्ठकः इध्मः । तस्मिन् पक्षे चेध्मादेव त्रीणि काष्ठान्यादाय परिधिपरिधानमिति । बन्धनानन्तरमिध्मबर्हिषोर्भूमौ निधानं न चायम् आपस्तम्बसूत्रे अनधोनिदधातीत्युक्तत्वात् । तद्वैक इध्मस्यैवैतान् परिधीन् परिदधतीत्यत्र हरिस्वामिनः तदु तथा न कुर्य्यादनवक्लृप्ता हि तस्यैते भवन्तीति वाक्यमात्रैः परिधिभिरार्द्रैश्च भवितव्यम् । इध्म स्तु शुष्कः इन्धनत्वादेव द्विप्रादेशश्च तेन ते इध्मैकदेशभूताः परिधित्वायासमर्थाः स्युः तदिदमाह अभ्याधानाय हीति शुष्को ह्यादाधेयः यावत्पर मात्रमाहवनीये परे सन्नयन्तीत्यभिप्रायः यस्तु परिधिवृक्षा आहरति सोऽवध्यवेष्टनीयादग्निस्थरादति-रिक्तमेवाहरति अग्निवेष्टनं च दाहभयाच्च शुल्वमिति तऽएवावक्लृप्ता इति” कात्या० १,२,१४,२१ ।

‘अपरमितं प्रणयनीयं त्रिवृतम” सू० । “प्रणयनस्यायं प्रणयनीयः तं प्रणयनीयमग्निप्रणयनार्थमिध्ममपरिमितमपरिमितकाष्ठकं त्रिवृतं तिसृभिः शणवल्वजरज्जुभिर्वेष्टितं कुर्य्यात् त्रीणि वृतानि वन्धनानि यस्य स त्रिवृतः तं त्रिवृतमिति । अपरिमितत्वं च प्रागुक्तेध्मकाष्ठसंख्यापेक्षयातिशयेनाधिकसंख्यकाष्ठकत्वम् । तेन चतुर्विंशतिसामिधेनीको मदृष्टापयुक्तत्र सप्तविंशतिः काष्ठानि भवन्ति । ततश्च प्रणयनीये ततोऽप्यधिकानि अष्टाविंशतिप्रभृतीनि इष्टकासंख्यानि काष्ठानि भवन्ति” कर्क० ।

छन्दोगप० “प्रादेशद्वयमिध्मस्य प्रमाणं परिकीर्त्तितम् । एवंमिताः स्युरेवेह समिधः सर्व्वकर्म्मसु । समिधोऽष्टादशेध्मस्य प्रवदन्ति मनीषिणः । दर्शे च पौर्णमासे च क्रियास्वन्यासु विंशतिः । समिदादिषु होमेषु मन्त्रदैवतवर्जिता । पुरस्ताच्चोपरिष्टाच्च इन्धनार्थं समिद्भवेत् । इध्मोऽप्येधार्थमाचार्य्यैर्हविराहुतिषु स्मृतः । यत्र चास्य निवृत्तिः स्यात्तत् स्पष्टीकरवाण्यहम् । अङ्गहोमसमित्तन्त्रसोष्यन्त्याख्येषु कर्म्मसु । येषां चैतदुपर्य्युक्तं तेषु तत्सदृशेषु च । अक्षभङ्गादिविपदि जलहोमादिकर्म्मणि । सोमाहुतिषु सर्व्वासु नैतेष्विध्मो विधीयते । “इध्मजातीयकाष्ठार्द्धप्रमाणं मेक्षणं भवेत्” । “सुमन्द्भीतिरिध्मभृतिः पक्थ्यर्कैः” ऋ० ६,२०,१२ ।“इध्मानां काष्ठानां भृतिः” भा० । तुषितदेवगणभेदे स च भाग० ४स्क० १अ० दर्शितो यथा “तोषः प्रतोषः सन्तोषो भद्रः शान्तिरिडस्पतिः । इध्मः कविर्विभुः स्वाह्नः सुदेवो रोचनोद्विषट् । तुषिता नाम ते देवा आसन् स्वायम्भुवेऽन्तरे” भाग० ।

इध्मजिह्व पु० इध्मं काष्ठं जिह्वेवास्य । वह्नौ ।

इध्मवाह पु० लोपामुद्रागर्भजाते अगस्त्यपुत्रे ऋषिभेदे“बहुसम्मितः पुत्र एकोऽप्यस्तु तपोधन !” इति लोपामुद्रया-प्रार्थितोऽगस्त्यस्तस्यां पुत्रमुत्पादयाम तस्य नाम दृढस्युरि-ध्मवहनाच्च इध्मवाह इति नामान्तरं तदेतदुक्तं भा०व० । ९९ ।“तत आधाय गर्भन्तमगमत् वनमेव सः” “तस्मिन् वन-गते गर्भोऽवर्द्धत सप्त शारदान् । सप्तमेऽब्दे गते चाथ प्रा-च्यवत् स महोज्ज्वलः । ज्वलन्निव प्रभावेन दृढस्युर्नाम भारत !। साङ्गोपनिषदान् वेदान् जपन्निव महातपाः । तस्य पुत्रोऽभवदृषेः स तपस्वी महाद्विजः । स बालएव तेजस्वी पितुस्तस्य निवेशने । इध्मानां भारवहनादिध्म-वाहस्ततोऽभवत्” ।

इन गतौ तना० पर० सक० सेट् । निरुक्ते इन्वतीति बहुवचनान्त इति केचित् इनोति इनुतः इन्वन्ति इनोमि इन्वः इनुवः इनुयात् इनोतु इनु इनवानि ऐनोत् । ऐनीत् इयेन । निरुक्ते इन्वति इति एकवचनान्तेन इन्वधातुरेवायमिति

बहुधः स च व्याप्तौ० प० सेट् । इन्वति ऐन्वीत् इन्वामास तद्रूपम् । "अथावमाय इन्वसि" ऋ०१,१७६,१ ।

**इन** पु० इण-नक् । १ सूर्ये, "मन्दलिनइनलग्नभवत्युत-व्यया इनाद्वर्षपद सभोज्ञम्" नील० ता० । २प्रभौ "स न मद्दीनमहीनपराक्रमम्" रघुः । ३नृपविशेषे च ।

**इनक्ष** व्याप्ति गतौ छान्दस इकारोपसर्जनः भ्वा०पर०स०नक्ष-तद्रूपम् इनक्षति "दूरेचत्तायच्छन्त सहृहन्न यदिनक्षत्" ऋ०१,१२२,६, "इनक्षत् व्याप्नोति नक्ष गतौ छान्दस इ-कारोपसर्जन इति भा० "शुक्रेण शोचिषाद्यामिनक्षत्, ऋ०१०,४५,७, [ इन्द्रे राजनि० ।

**इनानी** स्त्री इनमानयति आन—णिच्-अण् गौरा० । वटपत्नी

**इन्थिहा** स्त्री ताजकोक्तायां मुथहायाम् । तदानयन-प्रकारादि नील० ता० उक्तम् यथा "स्वजन्मलग्नात् प्रति-वर्षमेकैकराशिभोगा मुथहा क्रमेण । स्वजन्मलग्नं रवि-तष्टयातं शरद्युतं वा भवत्वेन्थिहा स्यात् । प्रत्यहं शरलिप्ता-भिर्वर्द्धते सानुपाततः । सार्द्धमंशद्वयं मासरल्याङ्कः कोऽपि सूरयः । स्वामिसौम्येक्षणात् सौम्यं युतदृष्टा भयं रुजः । भावालोकनसंयोगात् फलमस्या निरूप्यते । वर्षलग्नात् सुखास्तान्त्यरिपुरन्ध्रेष्वशोभना । पुण्यकर्मायभा स्वास्य' दत्तेऽथवोद्यमादनम् । शत्रुत्रयं मानसतुष्टिलाभं प्रतापवृद्धिं नृपतेः प्रसादम् । शरीरपुष्टिं विविधोद्यमांश्च ददाति सौख्यं मुथहा तनुस्था । उत्साहतोऽर्थागमनं यशश्च स्वबन्धुसौख्यानलुपाश्रयाश्च । मिष्टान्नभोगोबलपुष्टिसौख्यं स्यादर्थभावे मुथहा यदाब्दे । पराक्रमाद्वित्तयशःसुखाप्तिः सौन्दर्यसौख्यं द्विजदेवपूजा । सर्वोपकारस्तनुपुष्टिकान्तिर्म-पाश्च यचेन्मुथहा तृतीये । शरीरपीड़ा रिपुभीः स्ववर्गैर्वैरं मनस्तापनिरुद्यमत्वे । स्यान्मुन्थहायां सुखभावगायां जना-पवादामयदीर्घदुःखम् । यदीन्थिहा पञ्चमगाब्दवेशे सद्-बुद्धिसौख्यात्मजवित्तलाभः । प्रतापवृद्धिर्विविधाविलासा देवद्विजार्चा नृपतिप्रसादः । क्षतत्वमङ्गेषु रिपूदयश्च भयं रुजस्तस्करतो नृपाद्वा । कार्य्यार्थनाशो मुथहाऽरिगा चेत् दुर्बुद्धिवृद्धिः स्वकृतेऽनुतापः । कलत्रबन्धुव्यसनारिभीतिहृत्-साहभङ्गो धनधर्म्मनाशः । अस्तोपगा चेन्मुथहा तनोः स्या-द्रुजा मनोमोहविरुद्धचेष्टा । भयं रिपोस्तस्करतोविनाशो धर्मार्थयोःसुव्यसनामयश्च । मृत्युस्थिता चेन्मुथहा नराणां बलक्षयः स्याद्गमनं विदूरे । स्वामित्वमर्थोपगमो नृपे-भ्योधर्मोत्सवःपुत्रकलत्रसौख्यम् । देवद्विजार्चा परमं यशश्च भाग्योदयो भाग्यगतेन्थिहा स्यात् । नृपप्रसादं च जनोपकारं सत्कर्मसिद्धिं द्विजदेवभक्तिम् । यशोऽभिवृद्धिं विविधार्थलाभं दत्तेऽम्बरस्था मुथहा धनाप्तिम् । यदे-न्थिहा लाभगता विलाससौभाग्यमेरुक्तमनःप्रसादाः । भवन्ति राजाश्रयतोधनाप्तिः सन्मित्रपुत्राभिमताप्तयश्च । व्ययोऽधिको दुष्टजनैश्च सङ्गोरुजस्तथा विक्रमतोऽप्यसिद्धिः । धर्मार्थहानिर्मुथहा व्ययस्था यदा तदा स्वजनतोऽपि वैरम् । क्रूरैर्दृष्टःयुतदृष्टा यो भावो मुथहात्र चेत् । शुभं तद्भा-वजं नश्येदशुभञ्चापि वर्द्धते । शुभस्वामियुक्तेक्षिता वीर्य्य-युक्सेन्थिहा स्वामिसौम्येत्थशालं प्रपन्ना । शुभं भावजं पोषयेन्नाशुभं साऽन्यथात्वेऽन्यथा भाव जस्तोविमृश्य । जनुर्लग्नतोऽस्तान्त्यषष्ठमृत्युबन्धुस्थिताब्दे हता क्रूरखेटैस्तु चेत् । विनश्येत् स यत्रेन्थिहा भाव एवं शुभस्वामिदृष्टा न नाशः शुभं च । यदोभयत्रापि हतो भावोनश्येत् स स-र्वथा । उभयत्र शुभत्वेऽपि भावोऽसौ वर्द्धतेतराम् । वर्षेत्व-निष्टगेऽस्या यद्भावे जनुषि स्थिता । क्रूरोपघाताद्भावं ना-शयेत् शुभयुक् शुभा । जनुर्लग्नतस्तुर्यगा सौम्ययुक्ताब्दवेशे पितुर्व्यलाभं विधत्ते । नृपाङ्गीतिदा पापयुक्तातिकष्टाष्टमा-दावपीत्थं विमृश्याभिधेयम् । यस्मिन् भावे स्वामिसौम्येक्षिता सा भावोजन्मन्येष यत्नस्य वृद्धिः । एवं पापैर्नाश उक्तस्तु तस्येत्यूह्यं वीर्य्याद्वर्षतः सौख्यमेव । यदीन्थिहा सूर्यगृहे युतेक्षिता सूर्य्येण राज्यं नृपसङ्गमञ्च । दत्ते गुणानां परभागमाप्तिं स्थानान्तरस्था फलदा इतीति । कुजेन युक्ता कुजभे कुजेन दृष्टा च पित्तोष्णरुजन्तनोति । शस्त्राभिघातं रुधिरप्रकोपं सौरेक्षिता सौरगृहे विशेषात् । चन्द्रेण युक्ते-न्दुगृहेऽथ दृष्टेन्दुनापि वा धर्मयशोऽभिवृद्धिः । नैरुज्यस-न्तोषमतिप्रवृद्धिं ददाति पापेक्षणतोऽतिदुःखम् । बुधेन शुक्रेण युतेक्षितापि तद्भेऽपि वा स्त्रीमतिलाभसौख्यम् । धर्मं यशश्चाप्यतुलं विधत्ते कष्टं च पापेक्षणयोगतः स्यात् । युतेक्षिता वा गुरुणा गुरोर्भे यदीन्थिहा पुत्रकलत्रसौ-ख्यम् । ददाति हेमाम्बररत्नकोषं शुभेक्षणाद्वादिह रा-ज्यलाभः । शनेर्गृहे तेन युतेक्षितापि यदीन्थिहा वातरुजं-विधत्ते । मानक्षयं वह्निभयं धनस्य हानिं च जीवेक्षणतः शुभाप्तिम् । तमोमुखे चेन्मुथहा धनाप्तिर्यशःसुखं धर्मसन्-ततिश्च । सितेज्ययोगेक्षणतः पदाप्तिः सुवर्णरत्नाम्बरल-ब्धयश्च । भोग्या राहोर्लवास्तस्य मुखं पृष्ठं गता लवाः । ततः षष्ठभं पुच्छं विमृश्येति फलं वदेत् । तत्पृष्ठभागेन शुभा यदा स्यात्तत्पुच्छगापद्रिपुभीतिदुःखम् । पापेक्ष-णादर्थकुलस्य हानिर्वैजन्मनीत्थं व्यहविनाशः । वे जन्म-

काले बलिनोऽयदकाले चेह बलास्ते शुभं समाने। विपर्य्ययेपूर्व्वमभिहितस्तुल्यं फलं स्यादुभयत्र साम्ये। षष्ठेऽष्टमेऽन्त्ये भवि चेन्निहैयोऽस्तगोऽथ वक्रोऽशुभदृष्टयुक्तः। क्रूराच्चतुर्थास्तगतश्च भव्योन स्याद्गजं यच्छति विनाशम्। यद्यष्टमेशेन युतोऽथदृष्टःशुतास्थदृष्ट्या न शुभस्तदापि। योगद्वये व्याविधमं यदैकोयोगस्तदा स्वत्वसमत्वमाहुः। सुयहानतपतिर्वापि अस्तनीविततयुक् शुभैः। वर्षारम्भे शुभं इत्तेऽवदेवेदन्तेऽन्यथा शुभम्"।

**इन्दम्बर** इदि-किप् इन्द् ऐश्वर्य्यान्वितमम्बरमिव नीलवर्णत्वात्। नीलोत्पले" शब्दमा०।

**इन्दि** (न्दी)स्त्री इदि-इन्। लक्ष्म्याम् वा ङीप् तत्रैव।

**इन्दिन्दिर** पु० इन्दि-किरच् नि०। भ्रमरे त्रिका०।

**इन्दिरा** स्त्री इदि-किरच्। लक्ष्म्याम्"इन्दिरा लोकमाता च लक्ष्मीस्तव:। [ वल्लभ० २पद्मे ६त०। ३लक्ष्मीरूहे।

**इन्दिरामन्दिर** न० इन्दिरायामन्दिरमिव। १विष्णौ राज-

**इन्दिरालय** पु०६त०। १पद्मे २नीलोपले च। क्लीवत्वमपि।

**इन्दिवर** न०इन्दिर्लक्ष्मीस्तस्यावरं वरणीयम्। नीलोत्पले वा ङीप् इन्दीवरमप्यत्र। "इन्दीवरदलश्याममिन्दिरानन्दवर्द्धनम्" विष्णु स्तव; "इन्दीवरैरुत्पचितान्तरेव" रघु २उत्पलमात्रे च"नीलेन्दीवरलोचनत्रययुताम्"तन्त्र०[ ३तद्युक्तलतायाञ्च।

**इन्दीवरिणी** स्त्री इन्दीवर+समूहे इनि। १उत्पलसमुदाये,

**इन्दीवरी** स्त्री इन्दीं लक्ष्मीं वृणाति वृ-अच् गौरा० ङीष्। शतमूल्याम्। मेदि० इन्दीवर्य्यभिन्ना टावन्तः राजनि०।

**इन्दीवार** पु० इन्द्यालक्ष्म्यावारो वरणमत्र। नीलोत्पले।

**इन्दु** पु० उनत्ति चन्द्रिकया भुवं क्लिन्नां करोति उन्द-उ आदेरिच्च। १ चन्द्रे, "दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव"रघु"तस्याः प्रसन्नेन्दुमुखप्रसादम्" मल्लोदधेः पूरइवेन्दुदर्शनात्"रघुः "रामस्येन्दोरिव श्रिय"रघुः "न नम्मसाचिव्यमकारि नेन्दुना""चिप्राइवेन्दोः सह्योऽधिवेलम्"माघः"करैरिन्दोरन्तश्छुरित इव संभिन्नमुकुलः" वेणी० व्यक्ततकरैः सकलतापनवारणेनास्य इन्दुत्वम्। २तद्देवताके मृगशिरोनक्षत्रे "त्वष्टा करोन्द्वेन्दुकरान्त्यमैत्रे दीपिते ३एकसंख्यायुक्ते, नवेन्दुवेदेषुकुताश्चलब्धा" सि०शि०। ४कर्पूरे च।

अयं गगनमण्डले राशिचक्रे ग्रहाणां मध्ये सर्व्वेषाम् धस्तात् स्थित: यथाह सू० सि०। "मन्दामरेज्यभूपुत्रसूर्य्यशुक्रेन्दुजेन्दवः। परिभ्रमन्त्यधोऽधस्थाः"। तस्य कक्षामानमाह। सि० शि० यथा "वाद्धीद्रिगोमनुराश्विमिताकक्षा (४३३१४९७। ३०) चान्द्री सहस्रगुणिता जिनरामसंख्या"(३२४०००)। एतन्मितयोजनानि इन्दुकक्षामानम्। अनुलोमं गच्छतां ग्रहाणां राशिचक्रे इष्टसमये कोऽयंशोऽस्थितिरिति ज्ञानाय अहर्गणेन तस्य स्फुटीकरणप्रकारादि तत्रैव दर्शितं यथा। "अभ्रेभिभाद्रगजकुञ्जरगोऽद्रुपक्षा (२५९८८९८५०) कक्षां स्फुरन्ति गणका भगणस्य चैनाम्। "अत्र रविकक्षातो भकक्षा षष्टिगुणा, एवं भकक्षाया षष्ट्यंशोरविकक्षा" प्रमि० "कल्पोद्भवैः चितिदिनैर्गगनस्य कक्षा भक्ता भवेद्दिनगतिर्गगनेचरस्य। "पादोनगोऽक्षधृतिभूमितयोजनानि (११-८५८४०) खेटा व्रजन्त्यनुदिनं निजवर्त्मनीमे" सि०शि० "यदि कुदिनैः कक्षामितयोजनानि गच्छन्ति तदैकेन किमिति फलं दिनगतियोजनानि। तानि च स्फुटत्वेन तावत् पादोनगोऽक्षधृतिभूमितानि स्युः" प्रमि०। ग्रहानयनमाह। "अहर्गणात् कचिनवाङ्गनिघ्नात् (९९६१) नवेन्दुवेदेषुकुताश्च (३५४१९) लब्ध्या। अहर्गणघ्नो गोऽक्षधृतीन्दु (११८५९) निघ्नो विवर्जित: स्युर्गतयोजनानि" स्वयास्वया तानि पृथक् च कक्षया हृतानि वा स्युर्भगणादिकाग्रहा:" सि० शि०। "अहर्गणे भूनेत्रनवनन्द ९९२१गुणे नवशशिरसश्रुतिवाणाग्निभि ३५४११ भक्ते यल्लब्धं तेन विवर्जितः कार्य्यः। कः ?। मन्देन्द्रियधृतीन्दु ११८गुणोऽहर्गणः। एवं गतयोजनानि स्युः तेभ्यः पृथक् पृथक् स्वया स्वया कक्षया भाजितेभ्यो भगणादिका ग्रहालभ्यन्ते अत्रोपपत्तिः। दिनगतियोजनैरहर्गणे गतयोजनानि भवन्तीति सुगमम्। अत्र सुखार्थं गोऽक्षधृतीन्दुभिः११८५९ संपूर्णैरहर्गणो गुणितः। सोऽधिको जातः। यदधिकं तच्छोध्यम्। तस्याधिकस्य ज्ञानायमुपायः। परमोऽहर्गणः कुदिनतुल्यः। तेन गुणकेन गुण्यः। एवं गोऽक्षधृतीन्दुनिघ्नः सन् खकक्षातोऽधिको भवति। तस्मात् खकक्षां विशोध्य शेषेणानुपातः। यदि कुदिनतुल्येनाहर्गणेनैतावदधिकं भवति तदिष्टेनाहर्गणेन किमिति। अत्र कुदिनानां तस्य शेषस्य च पञ्चपञ्चदुगवेदैरयुतगुणितै ४४५५०००० रपवर्त्ते कृते सति शेषस्थाने कचिनवाङ्का उत्पन्नाः कुदिनस्थाने नवेन्दुवेदेषुकुताश्चाः। एव त्रैराशिकेन यल्लभ्यते तेन स्थूलगतिगुणितेऽहर्गणे वर्जिते गतयोजनानि भवन्ति। सर्वेषां ग्रहाणां तान्येव गतेस्तुल्यत्वात्। अथ ग्रहार्थमनुपात। यदि कक्षातुल्यैर्ग-

तयोऽनेरेको भगणस्तर्दिभिः किमिति फलं गतभगणाद्याः सर्वे यहा भवन्तीत्युपपन्नम्" प्रमिता० । "यहस्य कक्षैव हि तत्पातयोःपृथक् च कल्प्यात तदीयसिद्धये । अर्कस्य कक्षैव सितज्ञयोः सा ज्ञेया तयोरानयनार्थमेव । उक्तं तयोर्यं चलतुङ्गकक्षा तत्रैव तौ च भ्रमतोऽर्कगत्या" सि० शि० "अतोऽनयोः पातस्य च या कक्षा गच्छति सा तयोरानयनार्थमेव कल्प्या । अन्यथा या यहस्य कक्षा सैव तयोरपि । यतो यहकक्षाया उभयप्रदेशयोरव्यपदेशः । यत्र च विम्बमण्डलेन सह संपातस्तस्य प्रदेशस्य पातसंज्ञेति गोले सम्यक् प्रतिपादितमस्ति । तथा बुधशुक्रयोरत्र ये अर्ककक्षातुल्ये कक्षे आगच्छतस्ते तयोरानयनार्थमेव । किन्तु तयोर्यं चलकक्षे तत्रैव च भ्रमतः परमर्कगत्या । एतदुक्तं भवति भूमध्यादर्कं प्रति नीतं सूत्रं यत्र चलकक्षायां लगति तत्र बुधो यत्र शुक्रचलकक्षायां लगति तत्र शुक्रो भ्रमतीत्यर्थः" प्रमि०।

अत्र गगनकक्षा च कल्पाद्ङ्गणः । यथाहार्यभटः । 'योयत्र भ्रमति खगस्तद्वृत्तं भवति तस्य कक्षाख्यम् । अम्बरकक्षा कल्पाद्गणनाभा भवेद्‌द्युगतिः' । स्वस्वकक्षायां स्थितानामपि यहाणां नीचोच्चस्थानस्थितिवशतः परिधिभेदादिकं भवतीति यहयज्ञे वक्ष्यते । अत्र बुधशुक्रकक्षयोः रविकक्षातुल्यत्वं यदुक्तं तन्मध्यकक्षया फलानयनार्थम् । श्रीपतिना तु यहान्तराणां कक्षामितिरुक्ता यथा ।"अब्ध्यङ्कषट्कनगजाः (८१४६८१६) क्षितिनन्दनस्य, खाक्षेषदन्तशतखेन्दुमिताथ (१०४३२११) जैवी । रूपाश्विनागयुगषैकगुणेन्दवाणाः (५१३०४८२१) खाभ्रत्रिसागररसोत्कृतयः (२६६४६३०) सितस्य । भूधराद्रिनननागरसर्त्तुरुद्राधराश्विशशिनः (१२७६६८७८७) शनिकक्षा । एतच्च खगोलयज्ञे विस्तरेण वक्ष्यते ।

इन्दुश्च जलमयः सूर्यसम्पर्कात् उज्ज्वलितो भवति तेन च दिने दिने यथा यथा शुक्ले पक्षे रविवियोगभेदात्तेजःसम्पर्कविशेषस्तथा तथा वर्द्धते कृष्णे तु रविमण्डलसन्निकृष्टतया क्रमशो दिने दिने तत्तेजःसम्पर्कविशेषाभावस्तेन क्रमेण दिने दिने क्षय इत्यादिकमप्युक्तं सि० शि० । "तरणिकिरणसङ्गादेष पीयूषपिण्डो दिनकरदिशि चन्द्रश्चन्द्रिकाभिश्चकास्ति । तदितरदिशि बालाकुन्तलश्यामलश्रीघंट इव निजमूर्त्तिच्छायगैवातपस्थः । सूर्य्यादधःस्थस्य विधोरधःस्थमर्धं ह्यदृश्यं खकलाऽसितं स्यात् । दर्शेऽथ भार्धान्तरितस्य शुक्लं तत् पौर्णमास्यां परिवर्त्तनेन । कक्षा-चतुर्थे तरणेर्हि चन्द्रः कर्णान्तरे तिर्य्यगतो यतोऽसात् । पःदोनषट्काद्य (८५।४५) सवान्तरेऽतो दलं ह्यदृश्यस्य दलस्य शुक्लम् । उपचितिमुपयाति शौक्ल्यमिन्दोस्त्यजत इनं भजतश्च सेचनत्वम् । जलमयजलजस्य गोलकत्वात् प्रभवति तीक्ष्णविषाणरूपतास्य । यद्यान्योदक् तपनशशिनोरन्तरं सोऽत्र बाहुः कोटिस्तूर्ध्वाधरमपि तयोर्यच्च तिर्यक् स कर्णः । दोर्मूलेऽर्कः शशिदिशि भुजोऽयाग्र कोटिस्तदग्रे चन्द्रः कर्णो रविदिग्गमया दीयते तेन शौक्ल्यम्" ।

"प्राग्वद्भिते इतरपार्श्वे चन्द्रकक्षां रविकक्षां च विलिख्य तत्रोर्ध्वरेखां तिर्यग्रेखां च कृत्वा चन्द्रकक्षोर्ध्वरेखासंपाते चन्द्रबिम्बं विलिख्येदं दर्शयेत् । तिर्य्यग्रेखाया उपरि चन्द्रकक्षाव्यासार्धमितेऽन्तरेऽन्यां तिर्यग्रेखां कुर्यात् । सा रेखा प्रत्यग्रविकक्षायां यत्र लग्ना तत्र स्थित एवार्के ऊर्ध्वरेखावच्छिन्नचन्द्रबिम्बार्धं पश्चिमतः शुक्लं भवति । तस्यार्धमधस्तनं मनुष्यादृश्यम् । तत्रस्थेऽर्के व्यर्केन्दु सपादषड्भागोन (८५।४५) राशित्रयं भवति । एतावत्येव व्यर्केन्दु भुजे बिम्बार्धं पश्चिमं पूर्वं वा शुक्लं भवितुमर्हतीति प्रमि० "धाम्नां धामनिधेरयं जलमयो धत्ते सुधादीधितिः सद्यःकस्तूपालकान्तविशदच्छायां विवस्वद्दिशि । कृष्णे यर्मधृणेः करैघंट इवार्न्याखान् विभागे पुनर्बालाकुन्तलकालतां कलयति स्वच्छां तनोश्छायया" श्रीपतिः। 'भानुस्ते प्रतिबिम्बितो जलमये शीतांशुगोले दिशा निस्तेजा निशि सुप्रभः कथमयो किं सूर्यबिम्बासमः । गोलार्धं रविगोज्ज्वलं च सकलं न स्यात् तद्भागे यथा मासार्धेऽखिलदृश्यतेति गणकान् भानाङ्गयः पृच्छति' भास्कराजः ।

इन्दु० सं० शौक्ल्यादि प्रकारादि प्रदर्श्य तद्धारादिफलसङ्कं यथा "नित्यमधःस्थस्येन्दोर्भाभिर्भानोः सितं भवत्यर्धम् । स्वच्छाययान्यदसितं कुम्भस्येवातपस्थस्य । सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम् । क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः । त्यजतोऽर्कतलं शशिनः पश्चादवलम्बते यथा शौक्ल्यम् । दिनकरवशात्तथेन्दोः प्रकाशते ऽधःप्रभृत्युदयः । प्रतिदिवसमेवमर्कात् स्थानविशेषेण शौक्ल्यपरिवृद्धिः। भवति शशिनोऽपरार्द्धे पश्चाद्भागे घटस्येव । ऐन्द्रस्य शीतकिरणो मूलाषाढाद्वयस्य वा यातः । बाम्येन, बीजजलचरकाननहा वह्निभयदश्च । दक्षिणपार्श्वेन गतः शशी विशाखानुराधयोः पापः । मध्येन तु प्रशस्तः पितृदेव विशाखयोश्चापि । षडनागतानि पौष्णाद् द्वादश रौद्राच्च मध्ययोगीनि । ज्येष्ठाद्यानि

नक्षत्राण्युडुपतिनातीव युज्यन्ते । उन्नतमीषच्छृङ्गं नौसंस्थाने विशालता चोक्ता । नाविकपीडा तस्मिन् भवति शिवं सर्वलोकस्य । अर्धोन्नते च लाङ्गलमिति पीडा तदुपजीविनां तस्मिन् । प्रीतिश्च निर्निमित्तं मनुजपतीनां सुभिक्षं च । दक्षिणविषाणमर्धोन्नतं यदा दुष्टलाङ्गलाख्यं तत् । पाण्ड्यनरेश्वरनिधनकृदुद्योगकरं बलानां च । समशशिनि सुभिक्षक्षेमवृष्टयः प्रथमदिवससदृशाः स्युः । दण्डवदुदिते पीडा गवां नृपश्चोग्रदण्डो ऽत्र । कार्मुकरूपे युद्धानि यत्र तु ज्या ततो जयस्तेषाम् । स्थानं युगमिति याम्योत्तरायतं भूमिकम्पाय । युगमेव याम्यकोट्यां किञ्चिन्तुङ्गं स पार्श्वशायीति । विनिहन्ति सार्थवाहान् वृष्टेश्च विनिग्रहं कुर्यात् । अभ्युच्छ्रायादेकं यदि शशिनोऽवाङ्मुखं भवेच्छृङ्गम् । आवर्जितमिति सुभिक्षकारि तद्गोधनस्यापि । अव्युच्छिन्ना रेखा समन्ततो मण्डला च कुण्डाख्यम् । अस्मिन्माण्डलिकानां स्थानत्यागो नरपतीनाम् । प्रोक्तस्थानाभावादुदग्गुङ्गः सस्यवृद्धिवृष्टिकरः । दक्षिणतुङ्गश्चन्द्रो दुर्भिक्षभयाय निर्दिष्टः । शृङ्गेणैकेनेन्दुं विलीनमथवाप्यशृङ्गमवाङ्मुखम् । सम्पूर्णं चाभिनवं दृष्ट्वैको जीवितान्तं पश्येत् । संस्थानविधिः कथितो रूपाण्यस्मात् प्रवक्ष्यामि चन्द्रमसः । स्वल्पो दुर्भिक्षकरो महान् सुभिक्षावहः प्रोक्तः । मध्यतनुर्वज्राख्यः क्षुद्भयदः सम्भ्रमाय राज्ञां च । चन्द्रो मृदङ्गरूपः क्षेमसुभिक्षावहो भवति । ज्ञेयो विशालमूर्तिर्नरपतिलक्ष्मीविवृद्धये चन्द्रः । स्थूलः सुभिक्षकारी प्रियधान्यकरस्तु तनुमूर्तिः । प्रत्यन्तान् कुनृपांश्च हन्त्युडुपतिः शृङ्गे कुजेनाहते, शस्त्रक्षुद्भयकृद्यमेन, शशिजेनावृष्टिदुर्भिक्षकृत् । श्रेष्ठान् हन्ति नृपान्महेन्द्रगुरुणा, शुक्रेण चाल्पान् नृपान्, शुक्ले याप्यमिदं फलं परिहृतं कृष्णे यथोक्तागमम् । भिन्नः सितेन मगधान् यवनान् पुलिन्दान् नेपालभृङ्गिमरुकच्छसुराष्ट्रमद्रान् । पाञ्चालकैकयकुलूतकपूरुषादान् हन्यादुशीनरजनानपि सप्त मासान् । गान्धारसौवीरकसिन्धुकीरान् धान्यानि शैलान् द्रविडाधिपांश्च । द्विजांश्च मासान्दश शीतरश्मिः सन्तापयेद्वाक्पतिना विभिन्नः । उद्युक्तान् सह वाहनैर्नरपतींस्त्रैगर्तकान्मालवान् कौलिन्दान् गणपुङ्गवानथ शिबीनायोध्यकान् पार्थिवान् । हन्यात् कौरवमत्स्यशुक्त्यधिपतीन् राजन्यमुख्यानपि प्रालेयांशुरसृक्-पृष्ठे तनुगते षण्मासमर्यादया । यौधेयान् सचिवान् सकौरवान् प्राचीशानथ चार्जुनायनान् । हन्यादर्कजभिन्नमण्डलः शीतांशुर्दशमासपीडया । मगधान्मथुरां च पीडयेद्धरणीयांश्च तटं शशाङ्कजः । अपरस्य सितं युगं वदेद् यदि भित्त्वा शशिनं विनिर्गतः । क्षेमारोग्यसुभिक्षविनाशी शीतांशुः शिखिना यदि भिन्नः । कुर्यादायुधजीविविनाशं चौराणामधिकेन च पीडाम् । उल्कया यदा शशी ग्रस्त एव हन्यते । हन्यते तदा नृपो यस्य जन्मनि स्थितः । भस्मनिभः परुषोऽरुणमूर्तिः शीतकरः किरणैः परिहीनः । श्यावतनुः स्फुटितः स्फुरणो वा क्षुत्समरामयचौरभयाय । प्रालेयकुन्दकुमुदस्फटिकावदातो यत्नादिवाद्रिसुतया परिमृज्य चन्द्रः । उच्चैःकृतो निशि भविष्यति मे शिवाय यो दृश्यते स भविता जगतः शिवाय । यदि कुमुदमृणालहारगौरस्तिथिनियमात् क्षयमेति वर्धते वा । अविकृतगतिमण्डलांशुयोगी भवति नृपां विजयाय शीतरश्मिः । शुक्ले पक्षे सम्प्रवृद्धे प्रवृद्धिं ब्रह्मक्षत्रं याति वृद्धिं प्रजाश्च । हीने हानिस्तुल्यता तुल्यतायां कृष्णे सर्वं तत्फलं व्यत्ययेन" ।

"भूमध्यात् चन्द्रादेरुच्छ्रितियोजनमपि" सि० शि० उक्तं यथा "नगनगाग्निनवाष्टरसा(६८९३७७) रवेः रसरसेषु महीषुमिता ५१५६६ विधोः । निगदितावनिमध्यत उच्छ्रितिः श्रुतिरियं किल योजनसंख्यया" "अत्रोपपत्तिः कक्षाध्याये चन्द्रार्कयोः कक्षे कथिते किन्तु व्यासौ नोक्तौ तौ त्रैराशिकेनानेयौ । यदि भनन्दाग्निमित ३९२७ परिधेः खबाणसूर्यमितो १२५० व्यासः (लीलावत्युक्तदिशा आनीतः तदा) ४३३१४९७ । १० मितायाः सूर्यकक्षायाः, ३२४०००मितचन्द्रकक्षाया वा कोऽयम् इत्यनुपातेन व्यास आनेयः तदर्द्धमेव श्रुतिः । इयमेव भूमध्यात् चन्द्रार्कयोः उच्छ्रितिः प्रमि०" इयं मध्यश्रुतिः, उच्चनीचयोरन्यैव यथा "मन्दश्रुतिर्द्राक् श्रुतिवत् प्रसाध्या" सि० शि० उच्चनीचवृत्तपरिधिना उच्छ्रितिः साध्या त्रैराशिकेनानेया" प्रमि० युक्तञ्चेदम् ग्रहाणां स्वस्वकक्षायाः उच्चादिस्थानविशेषाऽस्ति तत्रोच्चस्थानस्थितौ परिधेराधिक्यं नीचस्थाने तु न्यूनता मध्ये मध्यता इति तदनुसारेण परिधिवैलक्षण्यात् उच्छ्रितिवैलक्षण्यमिति । एवमन्येषां ग्रहाणामपि स्वस्वकक्षाभिरनुपातेन व्यासमानीय तदर्द्धं मध्य श्रुतिरित्याद्यवगन्तव्यम् । अत्रेदं लक्षणीयम् अत्र भूमध्यादिति भूमिव्यासार्द्धमध्यादित्येवार्थकं न तु भूपृष्ठमध्यत इत्यर्थकम् । तथा च भूव्यासार्द्धस्य तत्तदुच्छ्रितेर्योजने भूपृष्ठादुच्छ्रितिर्भवति भूपृष्ठात् उक्तः उच्छ्रायो नैव युज्यते ग्रहाणां कक्षारूपपरिधेर्व्यासार्द्धस्य भूगोलार्द्धकान्तत्वेन तदर्द्धपर्यन्तमेव तद्व्यासार्द्धत्वौचित्यादिति

एवं सौरागमादिभिः इन्दुमण्डलस्य सूर्य्यमण्डलादधःस्थायित्वे सिद्धे" भाग०५स्क०। "एवं चन्द्रमा अर्कगभस्तिभ्य उपरिष्टात् लक्षयोजनत उपलभ्यमानोऽर्कस्य संवत्सरभुक्तिं, पक्षाभ्यां मासभुक्तिं, सपादर्क्षाभ्यां दिनेनैव पक्षभुक्तिमग्रचारी द्रुततरगमनो भुङ्क्ते अथापूर्य्यमाणाभिरपचीयमानाभिश्च कलाभिः पितृणामहोरात्राणि पूर्व्वापरपक्षाभ्यां वितन्वन् सर्व्वजीवनिवहप्राणो जीवश्च एकमेकं नक्षत्रं त्रिंशता मुहूर्त्तैर्भुङ्क्ते य एष षोडशकलः पुरुषो भगवान्मनोमयोऽन्नमयोऽमृतमयो देवपितृमनुष्यपशुपक्षिसरीसृपवीरुधां प्राणाप्यायनशीलत्वात् सर्व्वमय इति वर्णयन्ति"। अत्र अर्कगभस्तिभ्य इत्यत्र हेतौ पञ्चमी अन्वयश्चास्य उपलभ्यमान इत्यत्र। यथा च सूर्य्यकिरणैरेव चन्द्रस्योपलब्धिस्तत्र प्रागुक्तवचनैः समर्थितम्। न तु अपादाने पञ्चमी उपरिष्टात् इत्यत्रान्वयिनी। तथात्वे सौरागमविरोधः स्यात्। उपरिष्टात् इत्यत्र भूमेरित्यध्याहार्य्यं लक्षयोजनमिति बहुयोजनपरमिति न काचिदनुपपत्तिः। एवमन्यान्यपि पौराणिकवचनानि व्याख्यातव्यानि। इन्दुपक्षद्वयेन यथा पितृणां दिनस्य सम्पादनं तदप्युक्तम्" सि० शि०। "विधूर्द्धभागे पितरो वसन्तः स्वाधःसुधादीधितिमामनन्ति। पश्यन्ति तेऽर्कं निजमस्तकोर्द्धे दर्शे यतोऽस्मात् द्युदलं तदेषाम्। भार्द्धान्तरत्वान्न विधोरधःस्थं तस्मान्निशीथः खलु पौर्णमास्याम्। कृष्णे रविः पक्षदलेऽभ्युदेति शुक्लेऽस्तमेत्यर्थत एव सिद्धम्" अत्राधःस्थत्वमर्कस्य पितृपेक्षया बोध्यम् तद्विषयमेव वा पौराणिकं सूर्य्यस्याधःस्थत्ववचनमिति न किञ्चिदनुपपन्नम्"। चन्द्रस्याधःस्थित्वे च यथा तिथ्यादिसम्भवः तथोक्तम् कालमाधवीये "अर्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशीति" वचनव्याख्याने।

"अयमर्थः अधः प्रदेशवर्त्ती शीघ्रगामी चन्द्रः ऊर्द्ध्वप्रदेशवर्त्ती अशीघ्रगामी सूर्य्यः। तथा सति तयोर्गतिविशेषवशाद्दर्शे चन्द्रमण्डलमन्यूनमनतिरिक्तं सत् सूर्य्यमण्डलस्याधोभागे व्यवस्थितं भवति तदा सूर्य्यरश्मिभिः व्याकलत्वेनाभिभूतत्वाच्चन्द्रमण्डलमीषदपि न दृश्यते। उपरितने दिने शीघ्रगत्या प्राचीं याति राशेर्द्वादशभिरंशैः सूर्य्यमण्डलाद्विप्रकृष्टं गच्छति। तदा चन्द्रस्य पञ्चदशसु भागेषु प्रथमभागो दर्शनयोग्यो भवति। सोऽयं भागः प्रथमकलेत्यभिधीयते तत्कलानिष्पत्तिपरिमितकालः प्रतिपत्तिथिर्भवति एवं द्वितीयादितिथिष्ववगन्तव्यमिति"। तदेतद्विष्णुधर्म्मोत्तरे विस्तरेणाभिहितम् "चन्द्रार्कगत्या कालस्य परिच्छेदो यदा भवेत्। तदा तयोः प्रवक्ष्यामि गतिमाश्रित्य निर्णयम्। भगणेन समग्रेण ज्ञेया द्वादश राशयः। त्रिंशांशश्च तथा राशेर्भाग इत्यभिधीयते। आदित्याद्विप्रकृष्टस्तु भाग-द्वादशकं यदा। चन्द्रमाःस्यात्तदा राम! तिथिरित्यभिधीयते" "सेयं द्वादशभिर्भागैः सूर्य्यमुक्तवती प्रथमा चन्द्रकला शृङ्गद्वयोपेतसूक्ष्मरेखाकारा शौक्ल्यमीषदुपयाति उत्तरोत्तरदिनेषु सूर्य्यमण्डलविप्रकर्षात् तारतम्यानुसारेण शौक्ल्यमुपचीयते। अनयैव रीत्या सन्निकर्षतारतम्येन मेचकत्वमुपचीयते तदेतदुक्तम्" सि० शि०। उपचयमुपयाति शौक्ल्यमिन्दोरित्यादि ।९२१पृष्ठे उक्तम्। सूर्य्याचन्द्रमसोर्यौ सन्निकर्षविप्रकर्षौ तयोरवसानदर्शपूर्णिमयोः संपद्यते तदाह गोभिलः। "यः परोविप्रकर्षः सूर्य्याचन्द्रमसोः सा पूर्णमासी यः परः सन्निकर्षः सामावास्येति" मन्वत्र चन्द्रकलानां सूर्य्ये प्रवेशनिर्गमौ प्रतीयेते सोमोत्पत्तौ ८३४पृ० तु वह्न्यादिदेवतासु। नायं दोषः। अवदादिदर्शनापेक्षया ज्योतिःशास्त्रस्य प्रवृत्तत्वात् सोमोत्पत्तौ तु वह्न्यादिदेवतानान्तत्कालप्रयुक्ता तृप्तिर्विवक्षिता तत्र यदि सूर्य्ये प्रवेशनिर्गमौ यदि वा वह्न्यादिदेवतादिषु सर्व्वथापि कलाप्रयुक्ता एव प्रतिपदादितिथयः" काल मा०। पक्षाणां कलानुसारेणैव स्वस्वकक्षास्थराश्यंशादिमानम् तथा च स्वल्पकक्षायां स्थितस्य राश्यंशकलादिकं स्वल्पं महत्यां स्थितस्य महत् यथोक्तमार्य्यभट्टेन। "मध्ये सूर्य्याब्दानां प्रपूरयन्ति पक्षा भपरिणाहम्। दिव्येन भपरिधिं समं भ्रमन्तः स्वकक्षासु। मण्डलमल्पमधस्तात् कालेनाल्पेन पूरयति चन्द्रः। उपरिष्टात् सर्व्वेषां महच्च महता शनैश्चापि। अल्पे हि मण्डलेऽल्पा महति महान्तश्च राशयोऽंशाद्याः। अंशाः कलास्तथैवं विभागतुल्याः स्वकेषु। भानामधःशनैश्चर सुरगुरुभौमार्कभृगुबुधचन्द्राः। एषामधश्च भूमिर्मेधीभूता च मध्यस्था"। तेन पक्षाणां प्रागुक्तस्वस्वकक्षा द्वादशभिर्भक्ताः राशिप्रमाणयोजनानि। ते च पुनस्त्रिंशद्भक्ता अंशमानयोजनानि। ते षष्ट्या भक्ता कलामितयोजनानि एवं षष्ट्याभागे विकलादियोजनानि। अधिकं पक्षशब्दे वक्ष्यते। एतन्मण्डलाधिष्ठातृचन्द्रोत्पत्तिरत्रिजातशब्दे ११११पृष्ठे उक्ता।

इन्दुक पु० इन्दुरिव शुभ्रत्वात् कन्। अश्मन्तकवृक्षे। राजनि०।

इन्दुकक्षा स्त्री ६त०। चन्द्रस्य राशिचक्रस्थे परिधौ तन्मानमिन्दुशब्दे ९२१ पृ० उक्तम्।

पुण्यक्षिद्दिवात् प्रच्युतः कीर्त्तिर्मे व्युच्छिन्नेति स मामुपातिष्ठदथ प्रत्यभिजानाति मां भवानिति । तमहमब्रवं न वयं रासायनिकाः कार्य्यचेष्टाकुलत्वाच्च प्रत्यभिजानाम्यात्मनोऽर्थानामनुष्ठानं न शरीरोपतापेनात्मनः समारभामोऽर्थानामनुष्ठानं स मामुवाच अस्त्यन्यस्त्वत्तश्चिर जात इति तमहमब्रवम् अस्ति खलु हिमवति प्राकारकर्णो नामोलूकः प्रतिवसति स मत्तश्चिरजातो भवन्तं यदि जानीयादितः प्रकृष्टे चाध्वनि हिमवांस्तत्रासौ प्रतिवसतीति । ततः स मामश्वो भूत्वा तत्रावहद्यत्र बभूवोलूकः अथैनं स राजा पप्रच्छ प्रतिजानाति मां भवानिति । स मुहूर्त्तमिव ध्यात्वाऽब्रवीदेनं नाभिजानामि भवन्तमिति । स एवमुक्त इन्द्रद्युम्नः पुनस्तमुलूकमब्रवीद्राजर्षिः । अथास्ति कश्चिद्भवतः सकाशाच्चिरजात इति स एवमुक्तोऽब्रवीदस्ति खल्विन्द्रद्युम्नं नाम सरस्तस्मिन्नाडीजङ्घो नाम बकः प्रतिवसति सोऽस्मत्तश्चिरजाततरस्तं पृच्छेति । तत इन्द्रद्युम्नो मामुलूकमादाय तत्सरोऽगच्छद्यत्रासौ नाडीजङ्घो नाम बको बभूव । सोऽस्माभिः पृष्टो भवानिममिन्द्रद्युम्नं राजानमभिजानाति स एनं मुहूर्त्तं ध्यात्वाऽब्रवीन्नाभिजानाम्यहमिन्द्रद्युम्नं राजानमिति ततः सोऽस्माभिः पृष्टः कश्चिद्भवतोऽन्यश्चिरजाततरोऽस्तीति स नोऽब्रवीदस्ति खल्वस्मिन्नेव सरस्यकूपारो नाम कच्छपः प्रतिवसति स मत्तश्चिरजाततरः स यदि कथञ्चिदभिजानीयादिमं राजानं तमकूपारं पृच्छध्वमिति । ततः स बकस्तमकूपारं कच्छपं विज्ञापयामास । अस्त्यस्माकमभिप्रेतं भवन्तं कञ्चिदर्थमभिप्रष्टुं साध्वागम्यतां तावदिति तच्छ्रुत्वा कच्छपस्तस्मात् सरसः उत्थायाभ्यगच्छद्यत्र तिष्ठामो वयं तस्य सरसस्तीरे आगतञ्चैनं वयमपृच्छाम भवानिममिन्द्रद्युम्नं राजानमभिजानातीति । स मुहूर्त्तं ध्यात्वा बाष्पसम्पूर्णनयन उद्विग्नहृदयो वेपमानो विसंज्ञकल्पः प्राञ्जलिरब्रवीत् । कथमहमेनं न प्रत्यभिज्ञास्यामीह ह्यनेन सहस्रकृत्वश्चितिषु यूपा आहिताः । सरश्चेदमस्य दक्षिणाभिर्दत्ताभिर्गोभिरतिक्रममाणाभिः कृतम् । अत्र चाहं प्रतिवसामीति । अथैतत् सकलं कच्छपेनोदाहृतं श्रुत्वा तदनन्तरं देवलोकाद्देवरथः प्रादुरासीद्वाचश्चाश्रूयन्त इन्द्रद्युम्नं प्रति प्रस्तुतस्ते स्वर्गो यथोचितं स्थानं प्रतिपद्यस्व कीर्त्तिमानस्यव्यग्रो याहीति” ।

एतत्सरश्चोत्कलाख्ये वर्णितं तत्राधिकृत्य । “इन्द्रद्युम्नसरः प्राप्य हंसकूटमतीत्य च । शतशृङ्गं महाराज तापसः समतप्यत” इत्युक्तेः शतशृङ्गपर्व्वतसमीपे हंसकूटानन्तरं तत्सरः इति गम्यते । “हंसकूटस्य यच्छृङ्गमिन्द्रद्युम्नसरः प्रति” इति हरिवं० १५७ उक्तेश्च हंसकूटसन्निकृष्टत्वमस्यावगम्यते । पुरुषोत्तममूर्त्तिप्रकाशकथापरः पुरुषोत्तमशब्दे तद्विवृतिर्वक्ष्यते ।

**इन्द्रद्रु** पु० इन्द्रस्य इन्द्रध्वजार्थो द्रुः । १अर्जुनवृक्षे । तस्य तद्ध्वजनिर्माणे प्रथमोपात्तत्वात् तथात्वम् । इन्द्रध्वजशब्दे विवृतिः । इन्द्रनामा द्रुः । २कटजवृक्षे राजनि० ।

**इन्द्रद्रुम** न० इन्द्रद्रुवत् विग्रहः । अर्ज्जुनवृक्षे शब्दर० ।

**इन्द्रधनुस्** न० इन्द्रे इन्द्रस्वामिके मेघे धनुरिव । इन्द्रायुधशब्दे वक्ष्यमाणे पदार्थे “विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च” मनुः । तस्य ऋजुत्वे रोहितत्वम् । वक्रत्वे इन्द्रधनुष्ट्वमिति भेदः ।

**इन्द्रध्वज** पु० इन्द्रस्य तत्सन्तोषार्थो ध्वजः । भाद्रशुक्लद्वादश्यां श्रवणाख्ये ऋक्षादिशस्यवृद्ध्यर्थं तत्प्रीतये राज्ञा क्रियमाणे ध्वजे तदुत्पत्तितत्करणप्रकारादि दर्शितं वृहत्संहितायां यथा

“ब्रह्माणमूचुरमरा भगवञ्छक्ताः स्म नासुरान् समरे । प्रतियोधयितुमतस्त्वां शरण्य शरणं समुपयाताः । देवानुवाच भगवान् क्षीरोदे केशवः स वः केतुम् । यं दास्यति तं दृष्ट्वा नाजौ स्थास्यन्ति वो दैत्याः । लब्धवराः क्षीरोदं गत्वा ते तुष्टुवुः सुराः सेन्द्राः । श्रीवत्साङ्कं कौस्तुभमणिकिरणोद्भासितोरस्कम् । श्रीपतिमचिन्त्यमसमं समन्ततः सर्वदेहिनां सूक्ष्मम् । परमात्मानमनादिं विष्णुमविज्ञातपर्यन्तम् । तैः संस्तुतः स देवस्तुतोष नारायणो ददौ चैषाम् । ध्वजमसुरसुरवधूमुखकमलवनतुषारतीक्ष्णांशुम् । तं विष्णुतेजोभवमष्टचक्रे रथे स्थितं भास्वति रत्नचित्रे । देदीप्यमानं शरदीव सूर्यं ध्वजं समासाद्य मुमोद शक्रः । सकिङ्किणीजालपरिष्कृतेन स्रक्छत्रघण्टापिटकान्वितेन । समुच्छ्रितेनामरराड् ध्वजेन निन्ये विनाशं समरेऽरिसैन्यम् । उपरिचरस्यामरपो वसोर्ददौ चेदिपस्य वेणुमयीम् । यष्टिं तां स नरेन्द्रो विधिवत्सम्पूजयामास । प्रीतो महेन मघवान् प्राहैवं ये नृपाः करिष्यन्ति । वसुवद्वसुमन्तस्ते भुवि सिद्धाज्ञा भविष्यन्ति । मुदिताः प्रजाश्च तेषां भयरोगविवर्जिताः प्रभूतान्नाः । ध्वज एव चाभिधास्यति जगति निमित्तैः फलं सदसत् । पूजा तस्य नरेन्द्रैर्बलवृद्धिजयार्थिभिर्यथा पूर्वम् । शक्राज्ञया प्रयुक्ता तामागमतः प्रवक्ष्यामि । तस्य विधानं शुभकरणदिवस-

-नक्षत्रमङ्गलमुहूर्त्तैः । प्रास्थानिकैश्चनमियाद्दैवज्ञः सूत्रधारश्च । उद्यानदेवतालयपितृवनवल्मीकमार्गचितिजाता । कुब्जोर्ध्वशुष्ककण्टकिवल्लीवन्दाकयुक्ताश्च । बहुविहगालयकठोरपवनानलपीड़िताश्च ये तरवः । ये च स्युः स्त्रीसञ्ज्ञा न ते शुभाः शक्रकेत्वर्थे । श्रेष्ठोऽर्जुनोऽश्वकर्णः प्रियकधवोदुम्बराश्च पञ्चैते । एतेषामन्यतमं प्रशस्तमथवाऽपरं वृक्षम् । गौरासितक्षितिभवं सम्पूज्य यथाविधि द्विजः पूर्व्वम् । विजने समेत्य रात्रौ स्पृष्ट्वा ब्रूयादिमं मन्त्रम् । 'यानीह वृक्षे भूतानि तेभ्यः स्वस्ति नमोऽस्तु वः । उपहारं गृहीत्वेमं क्रियतां वासपर्य्ययः । पार्थिवस्त्वां वरयते स्वस्ति तेऽस्तु नगोत्तम । ध्वजार्थं देवराजस्य पूजेयं प्रतिगृह्यताम्' । छिन्द्यात् प्रभातसमये ह्यष्टमकं प्राङ्मुखोऽपि वा भूत्वा । परशोर्ज्जर्जरशब्दो नेष्टः स्निग्धो घनश्च हितः । नृपजयदमविध्वस्तं पतनमनाकुञ्चितं च पूर्व्वोदक् । अविलग्नं चान्यतरौ विपरीतमतस्त्यजेत्पतितम् । छित्त्वाग्रे चतुरङ्गुलमष्टौ मूले जले क्षिपेद्यष्टिम् । उद्धृत्य पुरद्वारं शकटेन नयेन्मनुष्यैर्वा । अरभङ्गे बलभेदो नेम्या नाशो बलस्य विज्ञेयः । अर्थक्षयोऽक्षभङ्गे तथाणिभङ्गे च वर्धकिनः । भाद्रपदशुक्लपक्षस्याष्टम्यां नागरैर्वृतो राजा । दैवज्ञसचिवकञ्चुकिविप्रप्रमुखैः सुवेषधरैः । अहताम्बरसंवीतां यष्टिं पौरन्दरीं पुरं पौरैः । स्रग्गन्धधूपयुक्तां प्रवेशयेच्छङ्खतूर्यरवैः । रुचिरपताकातोरणवनमालालङ्कृतं प्रहृष्टजनम् । सम्मार्जितार्चितपथं सुवेषगणिकाजनाकीर्णम् । अभ्यर्चितापणगृहं प्रभूतपुण्याहवेदनिर्घोषम् । नटनर्त्तकगेयज्ञैराकीर्णचतुष्पथं नगरम् । तत्र पताका श्वेता विजयाय भवन्ति रोगदाः पीताः । जयदाश्च चित्ररूपा रक्ता शस्त्रप्रकोपाय । यष्टिं प्रवेशयन्तीं निपातयन्तो भयाय नागाद्याः । बालानां तलशब्दे सङ्ग्रामः सत्त्वयुद्धे वा । सन्तक्ष्य पुनस्तक्षा विधिवद्यष्टिं प्ररोपयेद्यन्त्रे । जागरमेकादश्यां नरेश्वरः कारयेच्चास्याः । सितवस्त्रोष्णीषधरः पुरोहितः शाक्रवैष्णवैर्मन्त्रैः । जुहुयादग्निं सांवत्सरो निमित्तानि गृह्णीयात् । इष्टोद्रव्याकारः सुरभिः स्निग्धो घनोऽनलोऽर्चिष्मान् । शुभकृत्तोऽन्यो नेष्टो यात्रायां विस्तरोऽभिहितः । स्वाहावसानसमये स्वयमुज्ज्वलार्चिः स्निग्धः प्रदक्षिणशिखो हुतभुग् नृपस्य । गङ्गादिवाकरसुताजलचारुहारां धात्रीं समुद्ररसनां वशगां करोति । चामीकराशोककुरण्टकाब्जवैदूर्यनीलोत्पलसन्निभेऽग्नौ न । ध्वान्तमन्तर्भवनेऽवकाशं करोति रत्नांशुहतं नृपस्य । येषां रथौघार्णवमेघदन्तिनां सदृशोऽग्निर्यदि वापि दुन्दुभेः । तेषां मदान्धेभघटाविघट्टिता भवन्ति याने तिमिरोपमा दिशः। ध्वजकुम्भहयेभभूभृतामनुरूपे वशमेति भूभृताम् । उदयास्तधराधराधरा हिमवद्विन्ध्यपयोधरा धरा । द्विरदमदमहीसरोजलाजैर्घृतमधुना च हुताशने सगन्धे । प्रणतनृपशिरोमणिप्रभाभिर्भवति पुरश्छुरितेव भूर्न्नृपस्य । उक्तं यदुत्तिष्ठति शक्रकेतौ शुभाशुभं सप्तमरीचिरूपैः । तज्जन्मयज्ञग्रहशान्तियात्राविवाहकालेष्वपि चिन्तनीयम् । गुडपूपपायसाद्यैर्विप्रानभ्यर्च्च दक्षिणाभिश्च । श्रवणेन द्वादश्याम् उपोष्याऽन्यत्र वा श्रवणात् । शक्रकुमार्य्यः कार्याः प्राह मनुः सप्त पञ्च वा तज्ज्ञैः । नन्दोपनन्दसञ्ज्ञे पादेनार्धेन चोच्छ्रायात् । षोड़शभागाभ्यधिके जयविजये द्वे वसुन्धरे चान्ये । अधिका शक्रजनित्री मध्येऽष्टांशेन चैतासाम् । प्रीतैः कृतानि विबुधैर्यानि पुरा भूषणानि सुरकेतोः । तानि क्रमेण दद्यात् पिटकानि विचित्ररूपाणि । रक्ताशोकनिकाशं चतुरस्रं विश्वकर्म्मणा प्रथमम् । रसना स्वयम्भुवा शङ्करेण चानेकवर्णधरा । षष्टाश्रि नीलरक्तं तृतीयमिन्द्रेण भूषणं दत्तम् । असितं यमश्चतुर्थं मसूरकं कान्तिमद्यच्छत् । मञ्जिष्ठाभं वरुणः षडश्रि तत्पञ्चमं जलोर्मिनिभम् । मायूरं केयूरं षष्ठं वायुर्जलदनीलम् । स्कन्दः स्वं केयूरं सप्तममदद्दृध्वजाय बहुचित्रम् । अष्टममनलज्वालासङ्काशं हव्यभुग्दत्तम् । वैदूर्यमष्टमिन्दुर्नवम् ग्रैवेयकं ददावन्यत् । रथचक्राभं दशमं छत्रं त्वष्टा प्रभाचयैर्युक्तम् । एकादशमुद्दिशं विश्वेदेवाः सरोजसङ्काशम् । द्वादशमपि च निवेशं मुनयो नीलोत्पलाभासम् । शिञ्जद्ध्वजोर्ध्वनिर्गतमुपरि त्रिशालं त्रयोदशं केतोः । शिरसि बृहस्पतिशुक्रौ लाक्षारससन्निभं ददतुः । यद्यद्येन विनिर्मितममरेण विभूषणं ध्वजस्यार्थे । तत्तत्तद्दैवत्य विज्ञातव्यं विपश्चिद्भिः । ध्वजपरिमाणत्र्यंशः परिधिः प्रथमस्य भवति पिटकस्य । परतः प्रथमात्प्रथमादष्टाशाष्टांशहीनानि । कुर्यादहनि चतुर्थे पूरणमिन्द्रध्वजस्य शास्त्रज्ञः। मनुना चागमगीतान् मन्त्रानेतान् पठेन्नियतः । 'वृत्राक्रैर्वस्वतशक्रसोमैर्धनेशवैश्वानरपाशभृद्भिः । महर्षिसिद्धैः सदिगप्सरोभिः शुक्राङ्गिरःस्कन्दमरुद्गणैश्च । यथा त्वमूर्जस्कर । नैकरूपैः समर्चितस्त्वाभरणैरुदारैः । तथेह तान्याभरणानि देव । शुभानि सम्प्रीतमना गृहाण । अजोऽव्ययः शाश्वत एकरूपो विष्णुर्वराहः पुरुषः पुराणः । त्वमन्तकः सर्वहरः कृशानुः सहस्रशीर्षा शतमन्युरीड्य ।

करि सप्तजिह्वं त्रातारं त्वाम् इन्द्रमवितारं सुरेशम् । शक्रं हुतवहं सुषेणम् अस्माकं वीरा उत्तरे भवन्तु”। प्रपूरणे चोच्छ्रयणे प्रवेशे स्नाने तथा माल्यविधौ विसर्गे । पठेदिमान्नृपतिः सोपवासो मन्त्रान् शुभान् पुरुहूतस्य केतोः । छत्रध्वजादर्शफलार्द्धचन्द्रैर्विचित्रमालाकदलीक्षुदण्डैः । सव्यालसिंहैः पिटकैर्गवाक्षैरलङ्कृतं दिक्षु च लोकपालैः । अच्छिन्नरज्ज्वा दृढकाष्ठमातृकं विशिष्टयन्त्रार्गलपादतोरणम् । उत्थापयेच्छक्रमसहस्रचक्षुषः सारद्रुमाभग्नकुमारिकान्वितम् । अविरतजनरावं मङ्गलाशीःप्रणामैः पटुपटहमृदङ्गैः शङ्खभेर्यादिभिश्च । श्रुतिनिगदितवचोभिः पापठद्भिश्च विप्रैरशुभरहितशब्दं केतुमुत्थापयीत । फलदधिघृतलाजाक्षौद्रपुष्पाग्रहस्तैः प्रणिपतितशिरोभिस्तुष्टुवद्भिश्च पौरैः । इतमनिमिषभर्तुः केतुमीश प्रजानाम् अरिनगरनताग्रं कारयेद्विड्वधाय । नातिद्रुतं न च विलम्बितमप्रकम्पमम्लानमाल्यपिटकादिविभूषणं च । उत्थानमिष्टमशुभं यदतोऽन्यथा स्यात् तच्छान्तिभिर्नरपतेः शमयेत्पुरोधाः । क्रव्यादकौशिककपोतककाककङ्कैः केतुस्थितैर्महदुशन्ति भयं नृपस्य । चाषेण चापि युवराजभयं वदन्ति श्येनो विलोचनभयं निपतन् करोति । छत्रभङ्गपतने नृपमृत्युस्तस्करान्मधु करोति निलीनम् । हन्ति चाप्यथ पुरोहितमुल्का पार्थिवस्य महिषीमशनिश्च । राज्ञो विनाशं पतिता पताका करोत्यवृष्टिं पिटकस्य पातः । मध्याग्रमूलेषु च केतुभङ्गो निहन्ति मन्त्रिक्षितिपालपौरान् । धूमावृते शिखिभयं तमसा च मोहो व्यालैश्च भग्नपतितैर्न भवन्त्यमात्याः । ग्लायन्त्युदक्प्रभृति च क्रमशो द्विजाद्या भङ्गे च वर्द्धकिवधः कथितः कुमार्याः । रज्ज्वग्रस्फोटने बालपीडा राज्ञो मातुः पीडनं मातृकायाः । यद्यत्कुर्युर्बालकाश्चारणा वा तत्तत्तादृग्भावि पापं शुभं वा । दिनचतुष्टयमुत्थितमर्चितं समभिपूज्य नृपोऽह्नि पञ्चमे । प्रकृतिभिः सह लक्ष्म विसर्जयेद् बलभिदः स्वबलाभिविवृद्धये । उपरिचरवसुप्रवर्त्तितं नृपतिभिरप्यनु सन्ततं कृतम् । विधिमिममनुमान्य पार्थिवो न रिपुकृतं भयमाप्नुयादिति” ध्वजप्रमाणादि ति॰त॰ कालि॰पु॰ उक्तं यथा । “अर्ज्जुनोऽप्यश्वकर्णश्च प्रियकोधवएव च । औडुम्बरश्च पञ्चैते केत्वर्थे सत्तमाः स्मृताः । अन्ये च देवदार्व्याद्याः शालाद्याश्चारवत्तथा । तत्र वृक्षं तदेदायौ स्पृष्ट्वा मन्त्रमिमं पठेत्” । तद्देत् च्छेदयेत् । “यानि वृक्षे तु भूतानि तेभ्यः स्वस्ति नमोऽस्तु वः । उपहारं गृहीत्वेमं क्रियतां वासपर्य्ययः । पार्थिवस्त्वां वरयते स्वस्ति तेऽस्तु नगोत्तम ! । ध्वजार्थं देवराजस्य पूजेयं प्रतिगृह्यताम्” । ततोऽपरेह्नि तं छित्वा मूलमष्टाङ्गुलं पुनः । जले प्रक्षिप्य तदग्रस्य च्छित्त्वैवं चतुरङ्गुलम् । ततो नीत्वा पुरद्वारं केतुं निर्माय तत्र वै । शुक्लाष्टम्यां भाद्रपदे केतुं वेदिं प्रवेशयेत् । द्वात्रिंशद्धस्तमानस्तु अधमः केतुरुच्यते । द्वात्रिंशस्तु ततो ज्यायान् द्वाचत्वारिंशदुत्तमः । कुमार्य्यः पञ्च कर्त्तव्याः शक्रस्य नृपसत्तम । शालमय्यस्तु ताः सर्व्वास्त्वपराः शक्रमातृकाः । केतोः पादप्रमाणेन कार्य्याः शक्रकुमारिकाः । मातृकार्द्धप्रमाणात्तु यन्त्रं हस्तद्वयं तथा । एवं कृत्वा कुमारीश्च मातृका केतुमेव च । एकादश्यां सिते पक्षे यष्टीनामधिवासनम् । अधिवास्य ततो यष्टी गन्धद्वारादिमन्त्रकैः । इन्द्रस्य मण्डलं कृत्वा वासवं विस्तृतात्मकम् । अच्युतं पूजयित्वादौ शक्रं पश्चात् प्रपूजयेत् । शक्रस्य प्रतिमां कुर्य्यात् काञ्चनीं दारवीं तथा” काञ्चनीं कनकमयीम् “अन्यतैजसभूतां वा सर्व्वाभावे तु मृण्मयीम् । तां मण्डलस्य मध्ये तु पूजयित्वा विशेषतः । ततः शुभे मुहूर्त्ते तु केतुमुत्थापयेन्नृपः । “वज्रहस्त ! सुराधिप ! बहुनेत्र ! पुरन्दर ! । क्षेमार्थं सर्व्वलोकानां पूजेयं प्रतिगृह्यताम् । एह्येहि सर्व्वामरसिद्धसङ्घैरभिष्टुतो वज्रधरामरेश ! । समुत्थितस्त्वं श्रवणाद्युपादे गृहाण पूजां भगवन्नमस्ते” । इति मन्त्रेण तन्त्रेण नानानैवेद्यचन्दनैः । घटेषु दश दिक्पालान् पश्चाच्च परिपूजयेत् । साध्यादीन् सकलान् देवान् मातृः सर्व्वाननुक्रमात् । ततः शुभे मुहूर्त्ते तु शान्तिस्वस्तिकसंयुतः । केतूत्थानभूमिस्तु यज्ञवेद्यास्तु पश्चिमे । विप्रैः पुरोहितैः सार्द्धं गच्छेद्राजा समङ्गलैः । रज्जुभिः पञ्चभिर्बद्धं यन्त्रस्थितं समातृकम् । कुमारीभिश्च संयुक्तं दिक्पालानाञ्च चिह्नकैः । यथावर्णैर्यथादेशैर्ध्वजितैश्चन्द्रवेष्टितैः धृतं तं किङ्किणीजालैर्वृहद्घण्टाढ्यचामरैः । चित्रमाल्याम्बरैश्चापि चतुर्भिः परितोरणैः । उत्थापयेन्महाकेतुं राजा मान्यैः शनैः शनैः । प्रतिमां तां महेन्द्रस्य केतौ शक्रं विचिन्तयन् । यजेत्तु पूर्व्ववत्तत्र शचीं मातलिमेव च । जयन्तं तनयं तस्य वज्रमैरावतं तथा । ग्रहांश्चाप्यर्च्चयेद् दिक्पालान् सर्व्वांश्च गणदेवताः । पूजितानाञ्च देवानां वह्निहोमं समाचरेत् । होमान्ते तु बलिं दद्यात् वासवाय महात्मने । तिलं घृतं चाक्षतञ्च पुष्पं दूर्व्वां तथैव च । एतैस्तु जुहुयाद्देवान् स्वैः स्वैर्मन्त्रैर्नरोत्तमः । ततो हो-

मासदाने तु ब्राह्मणानपि भोजयेत्। एवं प्रपूजयेन्नित्यं सप्तरात्रं दिने दिने। त्रातारमिति मन्त्रोऽयं वासवस्य परः प्रियः। एवं कृत्वा दिशाभागे शक्रोत्थापनमादितः। श्रवणर्क्षयुतायाञ्च द्वादश्यां पार्थिवः स्वयम्। अन्त्यपादे भरण्यास्तु निशि शक्रं विसर्जयेत्। सुप्तेषु सर्वलोकेषु यथा राजा न पश्यति। "साद्धं सुरासुरगणैः पुरन्दर! शतक्रतो!। उपहारं गृहीत्वेमं महेन्द्रध्वज गम्यताम्" उत्पाते सप्तरात्राणि तथोपप्लवदर्शने। व्यतीत्य शनिभौमौ च अन्यस्मिन्नपि विसर्जयेत्। यस्मिन्कस्मिन् दिने चैव सूतकान्ते विसर्जयेत्। तथा रक्षेन्नृपः केतुं न पतेच्छकुनिर्यथा। शनैः शनैः पातयेत्तं यथोत्थापनमादितः। विसृष्टं शक्रकेतुं तं सालङ्कारं तथा निशि। क्षिपेदनेन मन्त्रेण अगाधे सलिले नृपः। "तिष्ठ केतो! महाभाग! यावत्संवत्सरं जले। भवाय सर्वलोकानामन्तराय-विनायक!"। उत्थापयेत्तूर्य्यरवैः सर्वलोकस्य वै पुरः। एवं यः कुरुते पूजां वासवस्य महात्मनः। न तस्य राज्ये दुर्भिक्षं नतयो नाप्यधर्मकृत्"। "इन्द्रध्वजसमुत्थानं प्रमादाच्च कृतं यदि। तदा द्वादशमे वर्षे कर्त्तव्यं नान्तरा पुनः" ति०त० भविष्य०। पञ्चमाष्टमदिनयोर्विसर्जने शाखभेदेन व्यवस्था। इन्द्रकेतुशक्रध्वजादयोऽप्यत्र।

**इन्द्रनक्षत्र** न०। इन्द्रस्वामिकं नक्षत्रम्। १ज्येष्ठानक्षत्रे तस्य तत्स्वामिकत्वात् तथात्वम्। अस्य नाथाद्रे ४९९पृष्ठे नक्षत्रेश्वरा उक्ताः। इन्द्रनामकं नक्षत्रम्। २फल्गुनीनक्षत्रे च। फल्गुनीनक्षत्रस्य इन्द्रनामकत्वमाह शत०ब्रा० २,१, २,११। यथा "फल्गुनीष्वग्नी आदधीत। एता वा इन्द्र-नक्षत्रं यत्फल्गुन्योऽप्यस्य प्रतिनाम्न्योऽर्जुनोह वै नामेन्द्रो-यदस्य गुह्यं नामार्जुन्यो वै नामैतास्ता एतत् परोक्षमाचक्षते फल्गुन्य इति कोऽह्येतस्य गुह्यं नाम प्रहीतुम् इन्द्रो वै यजमानस्तस्य एवैतन्नक्षत्रं अग्नी आधत्ते"

**इन्द्रनेत्र** न० ६त०। १शक्रनेत्रे २सहस्रसंख्यायाञ्च।

**इन्द्रनील** पु० इन्द्र इव नीलः श्यामः। (पाचा) इति ख्याते जरकतमतमणौ" तल्लक्षणमुक्तं रत्नपरीक्षायाम् "क्षीरमध्ये क्षिपेन्नीलं क्षीरस्थं नीलतां व्रजेत्। इन्द्रनील इति ख्यातः सर्व्वरत्नोत्तमोत्तमः"। अस्य नीलवर्णत्वं च रत्नौ गङ्गायमुनासंगमे यमुनासादृश्याय वर्णितम् यथा "क्वचित् प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा अन्यत्र माला सितपङ्कजानामिन्दीवरैरुत्खचितान्तरेव" "प्राप्येन्द्रनील किमुतोन्मयूखम्" रघुः। "एकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम्" "पेशलैरिन्द्रनीलैः" मेघदू०। अस्य सिंहलद्वीपसम्भवत्वे महानीलसंज्ञा यथा ह 'महा-महानीलशिलारुचः पुरः" माघव्याख्यायां मल्लिनाथेन "सिंहलाख्याकरोद्भूता महानीलास्तु ते स्मृताः" इति अग-स्त्यवाक्यं प्रमाणतयोपन्यस्तम्। "वापीष्वन्तर्महानीलरु-त्नाद्य" माघ: व्याख्याने तेन तदेवोक्तम्।

**इन्द्रपत्नी** स्त्री ६त०। १पुलोमजायां शच्याम्। "उताहमस्मि वीरिणीन्द्रपत्नी मरुत् सखा विश्वस्मादिन्द्र उत्तरः" ऋ० १०८६,९। इन्द्रस्य पतिः पालयित्री 'सपूर्व्वाच्चेति' पा० ङीप् नुक् च। २इन्द्रपालयित्रीषु इडादिषु तिसृषु देवीषु च "होता यक्षत्तिस्रो देवीर्न भेषजं त्रयस्त्रिधातवोऽपस इडा सरस्वती भारती महीः। इन्द्रपत्नीर्हविष्मतीः" यजु० २८,८। "इन्द्रपत्नीः इन्द्रस्य पालयित्र्यः" वेददी०। शची तु शुक्रग्रहस्य प्रत्यधिदेवता 'शची प्रत्यधिदैवतमिति शुक्र-ध्यानम्। विवाहादौ पूजनीयषोडशमातृकान्तर्गता च।

**इन्द्रपर्णी** स्त्री इन्द्र इव लीलं पर्णमस्याः जातित्वात् ङीष्। ओषधिभेदे। 'कालानुसार्य्य गुरुकोवकुमाराक्षायाति शिवेन्द्रपर्ण्यः" सुश्रु०।

**इन्द्रपर्व्वत** पु० इन्द्रनामकः पर्व्वतः। १महेन्द्रपर्व्वते इन्द्रवर्णः पर्व्वतः। २नीलवर्णे गिरिभेदे "वैदेहस्थस्तु कौन्तेय इन्द्र-पर्व्वतवासिनः। किरातानामधिपतीनजयत् सप्त पाण्डवः" भा०स० २८ अ०।

**इन्द्रपुत्रा** स्त्री इन्द्रः पुत्रो यस्याः। अदित्याम्। तस्या इन्द्र-जननीत्वात् तथात्वम्।

**इन्द्रपुष्पी** स्त्री इन्द्र इव नीलं पुष्पमस्याः जातित्वात् ङीप्। (विषलाङ्गला) लाङ्गलीवृक्षे। "अर्कालर्ककरञ्जद्वयनागदन्ती-मयूरकभार्गीरास्नेन्द्रपुष्पीक्षुद्रश्वेतेत्यादि" सुश्रुतः। वा कपि अतइत्त्वे इन्द्रपुष्पिकाप्यत्र

**इन्द्रपुरोहित** पु० ७त०। सुराचार्य्ये वृहस्पतौ

**इन्द्रप्रमति** पु० ऋग्वेदाध्ययनार्थं व्यासेन शिष्यत्वेन गृहीतस्य पैलस्य ऋषेः शिष्यभेदे। "प्रथमं व्यासशिष्यस्तु पैल ऋग्-वेदपादपम्। इन्द्रप्रमतये प्रादात् विभज्य पञ्च संहिताः" अग्नि पु०। "एकैकां संहितां ब्रह्मन् एकैकस्मै ददौ विभुः। पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह"। इत्युपक्रम्य "पैलः स्वसंहितामूचे इन्द्रप्रमतये मुनिः" भाग०१२ स्क०६ अ०।

**इन्द्रप्रस्थ** न० इन्द्रस्य इन्द्रस्थानमेरोः प्रस्थ इव (दिल्लीति) ख्याते पुरे। "इन्द्रप्रस्थगमस्तावत् कारि मा सन्तु चेदयः" माघः। "इन्द्रप्रस्थं वृकप्रस्थं माकन्दं वारणावतम्। इति

मे चतुरोमासान्वर्ष्मिष्टकेष पञ्चमम्" वेणी० खाण्डव प्रस्थे युधिष्ठिरेण यदभिनवपुरं निर्म्मितं तदिन्द्रप्रस्थतया विख्यातम्। तदेतत् भारते आ०२०६अ० वर्णितम्। 'प्रतिगृह्य तु तद्वाक्यं नृप सर्व्वे प्रणम्य च। प्रतस्थिरे ततो घोरं वनं तन्मनुजर्षभाः। अर्द्धं राज्यस्य सम्प्राप्य खाण्डवप्रस्थमाविशन्। ततस्ते पाण्डवास्तत्र गत्वा कृष्णपुरोगमाः। मण्डयाञ्चक्रिरे तद्वै पुरं स्वर्गवदच्युताः। ततः पुण्ये शिवे देशे शान्तिं कृत्वा महारथाः। नगरं मापयामासुर्द्वैपायनपुरोगमाः। सागरप्रतिरूपाभिः परिखाभिरलङ्कृतम्। प्राकारेण च सम्पन्नं दिवमावृत्य तिष्ठता। पाण्डुराभ्रप्रकाशेन शीतरश्मिनिभेन च। शुशुभे तत्पुरश्रेष्ठं नागैर्भोगवती यथा। द्विपक्षगरुडप्रख्यैर्द्वारैः सौधैश्च शोभितम्। गुप्तमभ्रचयप्रख्यैर्गोपुरैर्मन्दरोपमैः। विविधैरपि निर्व्विद्धैः शस्त्रोपेतैः सुसंवृतैः। शक्तिभिश्चावृतं तद्धि द्विजिह्वैरिव पन्नगैः। तल्पैश्चाभ्यासिकैर्युक्तं शुशुभे योधरक्षितम्। तीक्ष्णाङ्कुशशतघ्नीभिर्यन्त्रजालैश्च शोभितम्। विरोचमानं विविधैः पाण्डरैर्भवनोत्तमैः। तत्त्रिपिष्टपसङ्काशमिन्द्रप्रस्थं व्यरोचत। मेघवृन्दमिवाकाशे विद्धं विद्युत्समावृतम्। तत्र रम्ये शिवे देशे कौरव्यस्य निवेशनम्। शुशुभे धनसम्पूर्णं धनाध्यक्षक्षयोपमम्" "एवं सम्प्राप्य राज्यन्तदिन्द्रप्रस्थं तपोधन!" तत्र २०७अ०।

**इन्द्रप्रहरण** न० ६त०। वज्रास्त्रे तच्च दधीचीमुनेरस्थिनिर्म्मितं तत्कथा अश्वमि शब्दे ४६४पृ० उक्ता।

**इन्द्रभूति** पु० हेमचन्द्रोक्ते गौतमगोत्रजे जिनभेदे।

**इन्द्रभेषज** न० इन्द्रेण प्रकाशितं भेषजम्। इ०तत्। शुण्ठ्यां शब्दरत्ना०।

**इन्द्रमख** पु० इन्द्रस्य तत्पूजार्थो मखः। वर्षादौ शक्रतोषार्थे यज्ञभेदे। स च मखः नन्दादिभिः प्रवर्त्तितः कृष्णेन निवर्त्तितश्च तत्र तत्करणे नन्देन हेतुरुक्तः भा० १० स्क०२४अ० "पर्जन्यो भगवानिन्द्रो मेघास्तस्यात्ममूर्त्तयः तेऽभिवर्षन्ति भूतानां प्रीणनं जीवनं पयः। तं तात! वयमन्ये च वार्मुचां पतिमीश्वरम्। द्रव्यैस्तद्रेतसासिद्धैर्यजन्ते क्रतुभिर्नराः तच्छेषेणोपजीवन्ति त्रिवर्गफलहेतवे। पुंसां पुरुषकाराणां पर्ज्जन्यः फलभावनः" इति नन्दोक्ते कृष्णेन तन्मखनिवारणेन गोवर्द्धनमखस्य प्रवर्त्तनं कृतम् तदपि तत्रैवोक्तं यथा 'सत्त्वं रजस्तमइति स्थित्युत्पत्त्यन्तहेतवः। रजसोत्पद्यते विश्वमन्योन्यं विविधं जगत्। रजसा चोदिता मेघा वर्षन्त्यम्बूनि सर्व्वतः प्रजास्तैरेव सिध्यन्ति किं महेन्द्रः करिष्यति न नः पुरो जनपदा न ग्रामा न गृहा वयम्। वनौकसस्तात! नित्यं वनशैलनिवासिनः। तस्माद्गवां ब्राह्मणानामद्रेश्चारभ्यतां मखः। य इन्द्रमखसम्भारास्तैरयं साध्यतां मखः"। भाग० १०स्क० २४अ०। अधिकं गोवर्द्धनधरशब्दे वक्ष्यते। "मया तेऽकारि मघवन्! मखभङ्गोऽनुगृह्णता। मदनुस्मृतये नित्यं मत्तस्येन्द्रश्रिया भृशम्" इति" २७अ०।

**इन्द्रमह** पु० इन्द्रस्य सन्तोषार्थो महः। इन्द्रसन्तोषार्थे वर्षादौ कर्त्तव्ये उत्सवभेदे। इन्द्रस्य महोत्सव। वर्षाशरत्कालयोः। इन्द्रोत्सव शक्रोत्सवादयोऽप्यत्र।

**इन्द्रमहकामुक** पु० इन्द्रमहे वर्षादिकाले कामुकः कामयिता। कुक्कुरे वर्षादावेव तेषां व्यवायधर्म्मो लोकप्रसिद्धः।

**इन्द्रमार्ग** पु० इन्द्रलोकप्राप्त्यर्थो मार्गः। बदरीपाचनसन्निकृष्टस्थे तीर्थभेदे। "बदरीपाचनं गच्छेद्वसिष्ठस्याश्रमं गतः" इत्युपक्रम्य "इन्द्रमार्गं समासाद्य तीर्थसेवी नराधिप!। अहोरात्रोपवासेन शक्रलोके महीयते" भा० व० ८३अ०। तच्च जलमयं तीर्थम् "देविकामिन्द्रमार्गञ्च स्वर्गविन्दुं विगाह्य च। सप्तगङ्गे त्रिगङ्गे च इन्द्रमार्गे च तर्पयन्" भा०व०२५अ० तत्र अवगाहनतर्पणोक्तेः।

**इन्द्रयव** न० पु० इन्द्रस्य कुटजवृक्षस्य यवाकृतिबीजत्वात् यव इव बीजम्। कुटजवृक्षस्य यवाकारे तिक्तरसे बीजे स्वनामख्याते। "ऐन्द्रोयवस्त्रिदोषघ्नः संग्राही कटुशीतलः। ज्वरातिसाररक्तार्शः कृमिवीसर्पकुष्ठनुत्। दीपनो गुदकीलास्रवातास्रश्लेष्मशूलजित्" भावप्र०।

**इन्द्रलाजी** स्त्री इन्द्रस्य कुटजस्य लाजा इव लाजा यस्याजातत्वात् ङीप्। ओषधिभेदे ततः कुर्वा०ण्य। ऐन्द्रलाज्यस्तद्भवे त्रि०

**इन्द्रलुप्त** न० इन्द्र इन्द्रवर्णौ मोक्षः केशो लुप्तोयस्मात्। केशनाशके (टाक) ख्याते रोगभेदे। तन्निदानादि "रोमकूपानुगं रक्तं पित्तेन सह मूर्च्छितम्। प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः। रुणद्धि रोमकूपांस्तु ततोऽन्येषामसम्भवः। तदिन्द्रलुप्तं खालत्यं रुह्येति च विभाव्यते" निदा० उक्तम्। निदानान्तिकालता तु इन्द्रलुप्तं प्रसज्य भवति। खालत्यं शिरोरुहेष्वेव रुज्या भवेदनेनेति तेषां भेदः उक्तः। वा कप्। इन्द्रलुप्तक तत्रैवार्थे।

**इन्द्रलोक** पु० इन्द्रस्य लोकः भोगभूमिः। अमरावतीनामपुरीयुक्ते स्वर्गस्थानभेदे तत्स्थानममरावतीशब्दे ३२० पृष्ठे उक्तं तत्स्वरूपमाप्तिकारणादिकमुक्तं काशी०। "लोकेऽत्र रम ते विप्र! सहस्राक्षः, पुरी त्वियम्। तपोबलेन महता विहिता विश्वकर्म्मणा। दिवापि कौमुदी यस्यां

सौधाग्रे वोऽप्रियम् भयेत् । यदा कलानिधिः क्वापि दर्पाऽ
हङ्कारमावहेत् । तदा स्वस्त्रैयसौं ज्योत्स्नां सौधेष्वेषु
निगूहयेत् । यदच्छभित्तौ बाल्य स्वमन्वयोषिद्विपश्चिता ।
मुग्धा माद्यु विरोधिन्नलमपि स्वां चित्रशालिकाम् । हर्म्येषु
लोकमर्षाभिभिनिर्मितेष्वत्र निर्भयम् । स्वर्गोलिमानमाधाय
तमोऽहःस्वपि तिष्ठति । चन्द्रकान्तशिलाजालस्तु तमाला-
मलं जलम् । तत्र चादाय कलशैर्नन्यस्यज्जलं जनाः ।
कुविन्दा न च सन्त्यत्र न चात्र पद्मतोहराः । वेलान्यलङ्कृ-
तान्यत्र यतः कल्पद्रुमार्पणात् । गणका नात्र विद्यन्ते
चिन्ताविद्याविशारदाः । यतश्चिन्तन्ति सर्वेषां चिन्तां चिन्ता-
मणिर्द्रुतम् । सूपकारा न सन्त्यत्र रसपाकविचक्षणाः ।
दुग्धे सर्वरसानेका कामधेनुरतोऽनिशम् । कीर्त्तिरत्नैश्रवा-
यस्य सर्वतो वाजिराजिषु । रत्नमुच्चैःश्रवाः सोऽत्र ह-
यानां पौरुषाधिकः । ऐरावतो दन्तिवरश्चतुर्दन्तोऽत्र
राजते । द्वितीय इव कैलासोऽजङ्गमः स्फटिकोज्ज्वलः ।
तरुरत्नं पारिजातः स्त्रीरत्नं चोर्वशी त्विह । नन्दनं वन-
रत्नं च रत्नं मन्दाकिनी ह्यपाम् । त्रयस्त्रिंशत् सुराणां या
कोटिः श्रुतिसमीरिता । प्रतीक्षते सावसरं सेवार्थं प्रत्यहं
त्विह । स्वर्गेष्विन्द्रपदादन्यत्र विशिष्येत किञ्चन । यद्यप्ति
लोकानैश्वर्यं न च तुल्यमनेन हि । अश्वमेधसहस्रस्य
लभ्यं निर्मितमयेन यत् । किन्तेन तुल्यमन्यत् स्यात् पवित्र-
मथवा महत् । अश्विकृतो संयमनी पुण्यवत्यनिशावती ।
गन्धवत्यलकैशी च नैतत्तुल्या महर्द्धिभिः । अयमेव सह-
स्राक्षस्त्वयमेव दिवस्पतिः । शतमन्युरयं देवोनानान्ये-
ऽपि नामतः । सदापि लोकपाला ये तमेनं समुपासते ।
नारदाद्यैर्मुनिवरैरयमाशीर्भिरिज्यते । एतत्स्वैश्वर्यमेव
सर्वेषां लोकानां स्वैश्वमिष्यते । पराजयाच्छेन्द्रस्य त्रै-
लोक्यं स्यात् पराजितम् । दनुजा मनुजा दैत्यास्तपस्यन्त्य-
पसंयमाः । गन्धर्वयक्षरक्षांसि याहेन्द्रपदलिप्सवः ।
सगराद्यामहीपालावाजिमेधविधायकाः । शतयन्तो महा-
बलं शक्रैश्वर्यजिहीर्षवः । निष्प्रत्यूहं क्रतुशतं यः
कश्चित् कुरुतेऽवनौ । जितेन्द्रियोऽमरावत्यां स प्राप्नोति
पुलोमजाम् । असमाप्तक्रतुशता वसन्त्यत्र महीभुजः ।
ज्योतिष्टोमादिभिर्यागैर्यजन्त्यपि ते द्विजाः । तुलापुरु-
षदानादि महादानानि भोक्षुय । ये पञ्चत्वमनात्मा-
नवो लभन्तेऽमरावतीम् । अक्लीवशादिमोबोराः संग्रामेष्व-
पलायिनः । भिन्नात्मा वीरशयने तेऽत्र तिष्ठन्ति भूभुजः
तृष्णाहेयात् समाख्याता महेन्द्रनगरीस्थितिः । यावज्-

कायवन्मत्र सर्वविद्याविशारदाः" १० अ० । "अतिथि-
स्त्विन्द्रलोकेशः" इति मनुना अतिथिपरिचर्य्याभिरपि
तत्प्राप्तिरुक्ता । एवं राजसूययज्ञेनापि तत्प्राप्तिः
भा०स० उक्ता । शक्रलोकादयोऽप्यत्र

**इन्द्रवंशा** स्त्री "स्यादिन्द्रवंशा ततजैरसंयुतैः" वृत्त०र०
उक्ते द्वादशाक्षरपादके वर्णवृत्तभेदे ।

**इन्द्रवज्रा** स्त्री "स्यादिन्द्रवज्रा यदि तौ जगौ गः" वृत्त०र०
उक्ते एकादशाक्षरपादके वर्णवृत्तभेदे ।

**इन्द्रवल्ली** स्त्री इन्द्रप्रिया वल्ली शाक० त० । १पारिजातलतायाम्
"सोमवल्लीमिन्द्रवल्लीं शमीं विल्वस्य कण्टकान्" सुश्रु० ।
(राखालशशा) २इन्द्रवारुण्यां लतायाम् इन्द्रवल्लरीत्यत्र ।

**इन्द्रवस्ति** पु० इन्द्रस्यात्मनो वस्तिरिव । जङ्घामध्यभागे । "इन्द्र-
वस्तिपरिमाणं पीठकूर्परान्तरायाम लोहिताक्षः"
शाक्खसमर्माणि । ... कूर्परो ... इन्द्रवस्ति-
जानुर्वीलोहिताख्यानि विटपञ्चेति" शिर श्च "पार्ष्णिं
प्रति जङ्घामध्य इन्द्रवस्तिर्नाम तत्र शोणितक्षये मरणम्"
इति च सुश्रु० । अतोऽस्य जीववसतितुल्यत्वात्तथात्वम् ।

**इन्द्रवारुणी** स्त्री इन्द्रस्यात्मनो वारुणीव प्रिया (राखालशशा)
तिक्तरसायां श्वेतमूलायां पीतपुष्पायां लतायाम् । स्वार्थे
कन् । इन्द्रवारुणिकापि अत्रैवार्थे ।

**इन्द्रवीज** न० इन्द्रस्य कुटजस्य वीजम । इन्द्रयवे । "सव्ये-
न्द्रवीजं त्रिफलामपि मांसरसाम्बुभिः" सुश्रु० ।

**इन्द्रवृक्ष** पु० ६त० देवदारुवृक्षे जटाधरः । तस्य इन्द्र प्रियत्वेन तु-
ल्यात्तथात्वम । तस्येन्द्रध्वज साधनत्वञ्चेन्द्रध्वजशब्दे उक्तम् ।

**इन्द्रवृद्धा** स्त्री "अथातः क्षुद्ररोगान् व्याख्यास्याम" इत्यु-
पक्रम्य । "वल्मीकमिन्द्रवृद्धेत्यादि विभज्य" । "पद्मप-
करवन्मध्ये पिडकाभिः समाचिताम् । इन्द्रवृद्धां तु तां
विद्याद्वातपित्तोत्थितां भिषक्" सुश्रुतोक्तलक्षणे क्षुद्रो-
गभेदे । "विदृतामिन्द्रवृद्धाञ्च गर्द्दभीं जालगर्द्दभम् ।
इरिवेल्लीं गन्धनाम्नीं कक्षां विस्फोटकांस्तथा । पित्तजस्य
विसर्पस्य क्रियया साधयेत् भिषक्" इति सुश्रु०

**इन्द्रव्रत** न० इन्द्रस्येव वर्षणे व्रतम् । "वार्षिकांश्चतुरो मासान्
यथेन्द्रोऽप्यभिवर्षति । तथाभिवर्षेत् स्वं राष्ट्रं कामैरिन्द्र
व्रतं चरन्" इति स्मृत्युक्ते प्रजापालने राज्ञोव्रतभेदे ।

**इन्द्रशत्रु** पु० इन्द्रः शत्रुः शातयिता यस्य । वृत्रासुरे । इन्द्रा-
सुरस्य तथात्वमुक्तम् यथा "स त्वष्टा चुक्रोध । कुविन्मेऽनुप-
हूतः सोममभक्षदिति स स्वयमेव यज्ञवेशसं चक्रे स योद्रोण-
कलशे शुक्रः परिशिष्ट आस तं प्रवर्त्तयाञ्चकारेन्द्रशत्रु-

वर्धस्वेति सोऽग्निमेव प्राप्य सम्बभूवान्तरैव सम्बभूवेत्युहैके प्राहुः अग्नीषोमावेवाभि सम्बभूय सर्वाविद्याः सर्वं यशः सर्वमन्नाद्यं सर्वां श्रीम् । स यद्वर्त्तमान समभवत् । तस्माद्वृत्रोऽथ यदपात् समभवत्तस्मादहिस्तं दनुश्च दनायुश्च । मातेव च पितेव च परिजगृहतुस्तस्माद्दानव इत्याहुः अथ यदब्रवीदिन्द्रशत्रुर्वर्धस्वेति तस्मादु हैनमिन्द्र एव जघान अथ यद्ध शश्वदवक्ष्यदिन्द्रस्य शत्रुर्वर्धस्वेति शश्वदु ह स एवेन्द्रमहनिष्यत्" शत०ब्रा०१,६,३,८,९,१०. "इन्द्रशत्रुरिन्द्र पूर्वपदोदात्ततयेन्द्रः शत्रुर्यस्येति बहुव्रीहिसमासं ज्ञात्वा तन्त्रं प्रयुक्त मतस्तमिन्द्रो जघान । यद्यसौ अन्त्योदात्त या तत्पुरुषसमासेन, इन्द्रस्य शत्रुरिति व्यस्तनिर्देशेन वा ब्रूयात्तदा निश्चितमेव स इन्द्रं हन्यात्" इति सा० भा० तथा च षष्ठीतत्पुरुषेऽन्तोदात्तः स्वरः तथात्वे इन्द्रस्य शत्रुरित्यर्थके भवेत् बहुव्रीहौ तु पूर्वपदस्वरतेति तथा तेन प्रयोगात् तमेव इन्द्रोजघान "अतएव वेदे स्वरहीनतयोच्चारणे यजमानस्यानिष्टं फलं भवति । यथोक्तं शिक्षायाम् । "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्" । उक्तश्रुत्यनुसारिणी कथा भाग० यथा त्वष्टुः पुत्रस्य विश्वरूपवधादिकमुपवर्ण्य "तस्यासन् विश्वरूपस्य शिरांसि त्रीणि भारत । सोमपीथं सुरापीथमन्नादमिति शुश्रुम । स वै बर्हिषि देवेभ्यो भागं प्रत्यक्षमुच्चकैः । अवदद्यस्य पितरो देवाः सप्रश्रयं नृप ! । स एव हि ददौ भागं परोक्षमसुरान् प्रति । यजमानोऽवहद्भागं मातृस्नेहवशानुगः । तद्देवहेलनं तस्य धर्मालीकं सुरेश्वरः । आलक्ष्य तरसा भीतस्तच्छीर्षाण्यच्छिनद्रुषा । सोमपीथं तु यत्तस्य शिर आसीत् कपिञ्जलः । कलविङ्कः सुरापीथमन्नादं यत् स तित्तिरिः । ब्रह्महत्यामञ्जलिना जग्राह यदपीश्वरः । संवत्सरान्ते तदघं भूतानां स विशुद्धये । भूम्यम्बुद्रुमयोषिद्भ्यश्चतुर्धा व्यभजद्धरिः । भूमिस्तुरीयं जग्राह खातपूरवरेण वै । ईरिणं ब्रह्महत्याया रूपं भूमौ प्रदृश्यते । तुर्यं छेदविरोहेण वरेण जगृहुर्द्रुमाः । तेषां निर्यासरूपेण ब्रह्महत्या प्रदृश्यते । शश्वत् कामवरेणांहस्तुरीयं जगृहुः स्त्रियः । रजोरूपेण तास्वंहो मासि मासि प्रदृश्यते । द्रव्यभूयोवरेणापस्तुरीयं जगृहुर्मलम् । तासु बुद्बुदफेनाभ्यां दृष्टं तद्धरति क्षिपन् । हतपुत्रस्ततस्त्वष्टा जुहावेन्द्राय शत्रवे । इन्द्रशत्रो विवर्धस्व मा चिरं जहि विद्विषम् । अथान्वाहार्य्यपचनादुत्थितो घोरदर्शनः । कृतान्त इव लोकानां युगान्तसमये यथा । विष्वग्विवर्द्धमानं तमिषुमात्रं दिने दिने । दग्धशैलप्रतीकाशं सन्ध्याभ्रानीकवर्चसम् । तप्तताम्रशिखाश्मश्रुं मध्याह्नार्कोग्रलोचनम् । देदीप्यमाने त्रिशिखे शूल आरोप्य रोदसी । नृत्यन्तमुन्नदन्तञ्च चालयन्तं पदा महीम् । दरीगम्भीरवक्त्रेण पिबता च नभस्तलम् । लिहता जिह्वयर्क्षाणि ग्रसता भुवनत्रयम् । महता रौद्रदंष्ट्रेण जृम्भमाणं मुहुर्मुहुः । वित्रस्ता दुद्रुवुर्लोका वीक्ष्य सर्वे दिशो दश । येनावृता इमे लोकास्तपसा त्वाष्ट्रमूर्त्तिना । स वै वृत्र इति प्रोक्तः पापः परमदारुणः भा०६स्क०८अ०। ततः "स इन्द्रशत्रुः कुपितोभृशं तदा महेन्द्रवाहं गदयोरुविक्रमः" इति "तयोर्युद्धमभिधाय" भित्त्वा वज्रेण तत्कुक्षिं निष्क्रम्य बलभिद्विभुः । उच्चकर्त्त शिरः शत्रोर्गिरिशृङ्गमिवौजसम्" भाग०६स्क०१०अ० इन्द्रेण तस्य हननं वर्णितम ।

**इन्द्रशलभ** पु० इन्द्रजातः वर्षाकालजातः शलभः । इन्द्रगोपे ।

**इन्द्रसारथि** पु० ६त० । इन्द्रस्य सारथौ मातलौ ।

**इन्द्रसावर्णि** पु० चतुर्द्दशे मनौ । "मनुर्वा इन्द्रसावर्णिश्चतुर्द्दशम एष्यति । उरुगम्भीरबुद्ध्याद्या इन्द्रसावर्णिवीर्य्यजाः । पवित्राश्चाक्षुषा देवाः शुचिरिन्द्रो भविष्यति । अग्निबाहुः शुचिः शुक्रो मागधाद्यास्तपस्विनः । सत्रायणस्य तनयो वृहद्भानुस्तदा हरिः । विनतायां महाराज ! क्रियातन्तून् वितायिता" भा०८स्क०१३अ०। हरिवंशे तु "भूत्याश्चोत्पादितो देव्यां भौत्योनाम रुचेः सुत" इति भौत्योत्पत्ति मुक्त्वा "चतुर्द्दशेऽथ पर्याये भौत्यस्यैवान्तरे मनोः। अग्नीध्रः काश्यपश्चैव पौलस्त्योमागधस्तथा । भार्गवश्चाग्निबाहु शुचिराङ्गिरसस्तथा । युक्तश्चैव तथात्रेयः शुक्रोवासिष्ठ एव च । अजितः पौलहश्चैव मान्त्याः सप्तर्षयश्च ते इति" चोक्त्वा "देवतानां गणाः प्रोक्ताः पञ्च वै भरतर्षभ । तरङ्गभीरुर्वप्रश्च तरस्वानुग्र एव च । अभिमानी प्रवीणश्च स्नुतः संक्रन्दनस्तथा । तेजस्वी सबलश्चैव भौत्यस्यैते मनोः सुताः । भौत्यस्यैवाधिकारे तु पूर्णः कल्पस्तु पूर्य्यते" । अग्निपु०च "मनुश्चतुर्द्दशो भौत्यः शुचिरिन्द्रो भविष्यति । चाक्षुषाद्याः सुरगणा अग्निबाह्वादयो द्विजाः । चतुर्दशस्य भौत्यस्य पुत्रा उरुमुखा मनोः" इत्युक्तं तेन नामभेदविरोधः कल्पभेदात् समाधेयः ।

**इन्द्रसुत** पु० ६त० । १जयन्ते, २मध्यमपाण्डवे पार्थे, ३अर्जुनवृक्षे, ४वालिनामके वानरे च । इन्द्रपुत्रादयोऽप्यत्र

**इन्द्रसुरस** पु० इन्द्रः कुटजइव सुरसः पर्णासः। (निसिन्दा)

किम्नरादे। अमरे इन्द्रसुरिशैति पाठान्तरे पु०। तत्रैव

**इन्द्रसुरा** स्त्री इन्द्रस्यात्मनः सुरेव प्रिया। (राखालसमा) इन्द्रवारुण्याम् राजनि०"वारुणीकुम्भिन्द्रसुरापटोलेत्यादि" सुश्रु०। "गुडूचीन्द्रसुरा कृष्णा कुष्ठसर्षपनागरैः। तैलमेभिः समैः पक्वं सुराक्षादिरसायुतम्" सुश्रु०।

**इन्द्रसूक्त** न० इन्द्रदेवताकं सूक्तम्। ऋग्वेदान्तर्गते सूक्तभेदे तच्च "इन्द्रं विश्वा अवीवृधन्" इत्यादि एकादशर्चम्। ऋ०१म०११सूक्तम् एतच्च तत्तत्कर्मणि इन्द्रस्तुत्यर्थं पठनीयं तथा द्वारपालेन तुलादानादौ मण्डपस्य पूर्वदिशि पाठ्यञ्च "श्रीसूक्तं पावमानञ्च सोमसूक्तं सुमङ्गलम्। शान्त्यध्यायञ्चेन्द्रसूक्तं रक्षोघ्नं चेति बह्वृचौ। पूर्वं द्वारं समाश्रित्य पठेतामिति निश्चयः" विधानपारि०पु०; तच्च सूक्तं तुलादानादिपद्धतौ ९२ पृष्ठेऽस्माभिः प्रदर्शितम्।

**इन्द्रसेन** पु० इन्द्रस्य सेना इव सेना यस्य। १ नृपभेदे स च परिक्षितः सुतभेदः "परिक्षितोऽभवन् पुत्राः सर्वे धर्मार्थकोविदाः कक्षसेनोग्रसेनौ च चित्रसेनश्च वीर्य्यवान्। इन्द्रसेनः सुषेणश्च भीमसेनश्च नामतः" भा०आ०९४अ०। अयञ्च प्रसिद्धात् परिक्षितः प्राचीनः कुरुवंश्यएव इन्द्रोत्पादनशब्दे विवृतः। युधिष्ठिरस्य २ भृत्यभेदे। "इन्द्रसेनादयश्चैव भृत्याः परि चतुर्दश। रथैरनुययुः शीघ्रैः स्त्रिय आदाय सर्वशः" भा०व०१अ०"इन्द्रसेनो विशोकश्च पुरुश्चार्ज्जुनसारथिः। आहारादीपकरणे सूदाः सन्तु मत्प्रियकारिणः" भा०व०११अ०।

**इन्द्रसेना** स्त्री ६त०। इन्द्रस्य १सेनायाम्। २ब्रह्मस्यादेर्मौद्गल्यस्य ऋषेः पुत्रपत्न्याम्। "मौद्गल्यस्य सुतो ज्येष्ठो ब्रह्मर्षिः सुमहायशाः। इन्द्रसेना यतोगर्भं वध्र्यश्वं प्रत्यपद्यत" हरि०३२अ०। "नारायणीन्द्रसेना बभूव वध्र्याश्वे मुद्गलस्यात्मजमौढ" भा०व०११३अ०।

**इन्द्रसेनानी** पु० इन्द्रसेनां नयति नी-क्विप् ६त०। शक्रस्य सेनापतौ कार्त्तिकेये तत्कथा। कार्त्तिकेन पराजितेनेन्द्रेण कार्त्तिकाय इन्द्रत्वपदं दातुमीहमानेन स्कन्दस्य तद्भक्तिप्रकाशकमर्पणेन तेन तत्सेन अध्यमणि कलितमेतत् भा०व०२२८अ० दर्शितं यथा "शक्रउवाच भवस्वेन्द्रो महाबाहो! सर्वेषां नः सुखावह! अभिषिच्यस्व चैवाद्य प्राप्तकालोऽसि सत्तम!। त्वमेव त्वमेव लोक्यमस्यैव विजये रतः। अहन्ते किङ्करः शक्रो नमेन्द्रत्वमीप्सितम्। बलं तवाद्भुतं वीर! त्वं देवानामरीन् जहि। अवज्ञास्यन्ति मां लोका वीर्य्येण तव विस्मिताः। इन्द्रत्वे तु स्थितं वीर! बलहीनं पराजितम्। आवयोश्च मिथोभेदं प्रयतिष्यन्त्यतन्द्रिताः। भेदिते च त्वयि विभो! लोकोद्वैधमुपैष्यति। द्विधाभूतेषु लोकेषु निश्चितेषु बयोस्तदा। विग्रहः संप्रवर्त्तेत भूतभेदान्महाबल!। तत्र त्वं मां रणे तात! यथाश्रद्धं विजेष्यसि। तस्मादिन्द्रो भवानेव भविता मा विचारय। स्कन्द उवाच। त्वमेव राजा भद्रन्ते त्रैलोक्यस्य ममैव च। करोमि किञ्च ते शक्र! शासनं तद्ब्रवीहि मे। इन्द्र उवाच। अहमिन्द्रो भविष्यामि तव वाक्यान्महाबल!। यदि सत्यमिदं वाक्यं निश्चयाद्भाषितं त्वया। यदि वा शासनं स्कन्द! कर्त्तुमिच्छसि मे शृणु। अभिषिच्यस्व देवानां सेनापत्ये महाबल!। स्कन्द उवाच। दानवानां विनाशाय सेनापत्येऽभिषिञ्च माम्"। भा०व०२२८अ०। शक्रसेनापतिशक्रसेनाधिपादयोऽप्यत्र। "शक्रसेनापतिः स्कन्दः" ह०।

**इन्द्रस्तुत्** पु० इन्द्रः स्तूयते ऽत्र इन्द्रस्तुत्यधिकरणे उक्थ्ययज्ञे द्वितीयाहे "इन्द्रस्तुदुक्थ्यो द्वितीयमहर्भवति। इन्द्रो वै सर्वे देवाः सर्वेषां देवानामाप्त्यै तस्मैन्द्राग्यहा भवन्त्यैन्द्राः पुरोरुच सर्वमैन्द्रमसदिति" शत०,१२,७,१,४, अयमुक्थ्यसाध्यः तदुपक्रमएव कात्या०२२,१,४। "तत्र उक्थ्या स्वर्जिदिन्द्रस्तुत् सूर्य्यस्तुत" इत्यभिधानात्

**इन्द्रस्तोम** पु० अतिरात्राङ्गे यागभेदे स च कात्या०२४,४,६। अतिरात्रोपक्रमेण "इन्द्रस्तोमो विश्वजिता" विश्वजितः स्थाने इन्द्रस्तोमः कार्य्यः" कर्क०। पूर्वोक्तसुपक्रम्य तत्प्रकारादि तत्र दर्शितम्। अयञ्चराज्ञा कार्य्यः "इन्द्रस्तोमो राजयज्ञ" "सहस्रं दक्षिणा" कात्या०२२,१,१५,१६, स च उक्थ्यसाध्यः "उक्थ्यः" कात्या०१२,११,१७ सूत्रे।

**इन्द्रहू** स्त्री इन्द्रः ह्वयतेऽनया ह्वे-क्विप् ६त०। यक्षाङ्गाम साधने ऋग्भेदे। कर्त्तरि क्विप्। २तदाह्वानकर्त्तरि त्रिभेदे च। ततो गर्गा० अपत्ये यञ्। ऐन्द्रहव्यस्तदपत्ये पुंस्त्री।

**इन्द्रा** स्त्री इदि-रन्। १फणिजभ्भकवृक्षे (काठागाछ) नैर्दृति। (राखालसमा) २इन्द्रवारुण्याम्! राजनि० ३यवन्याम् शब्दर०।

**इन्द्राग्नि** पु० द्वि०ब०। इन्द्रश्चाग्निश्च देवताद्व०। यक्राम्नादिनानातयोर्देवयोः। "इन्द्राग्नी यत्र कुरुते" म०त० स्मृतिः 'पुरोहितकामस्येन्द्राग्न्योः स्तोमः' कात्या०२२,११,२०,२१ उक्त। तत्र स्तोमे पुरोहितस्य राज्ञो वा यष्टृ यजमानस्य तत्र ब्राह्मणस्य दक्षिणा चतुर्विंशतयो गावः राज्ञः अष्टचत्वारिंशद्गावः" कर्क०। तौ देवते अस्य अण्। ऐन्द्राग्नं तद्देवताके हविषि यज्ञे च। इन्द्रस्य पत्न्य-

स्यग्निः । ... भवे विद्युदग्न्यादौ पु० । २इन्द्राग्निधूमः ।

**इन्द्राग्निधूम** पु० इन्द्राग्नेः पर्जन्याग्नेर्धूम इव । हिमे धूमस्य यथाऽग्निप्रभवत्वम् तथा अस्मयहिमस्य पर्जन्याग्निसम्पर्कादेव जायमानत्वात् तथात्वम् ।

**इन्द्राणी** स्त्री इन्द्रस्य स्त्री—ङीप् आनुक् च । १इन्द्रपत्न्यां शच्याम् "अदित्यै रास्नासीन्द्राण्या उष्णीषः" यजु० ३८.३ "नैवेन्द्राणी न रुद्राणी न मनायी न रोहिणी" भट्टि. "यथेन्द्राणी हरिहये स्वाहा चैव विभावसौ" भा० आ० ... अ० । "आजगाम सहेन्द्राण्या शक्रः सुरगणो...रः" भा० व० ४१अ० । इन्द्र परमैश्वर्यमानयति आ+नी—बा०ड गौ०ङीष् ।"ऐश्वर्यं परमं यस्या वशे चैव सुरा...। इति च परमैश्वर्ये इन्द्राणी तेन सा स्मृता" इति देवीपु०उक्तनिरुक्तिः । २दुर्गाशक्तिभेदे ।"ब्रह्माणीन्द्राणि । रुद्राणि । भूतभव्ये । यशस्विनि । त्राहि मां सर्वदुःखेभ्यो नारायणि । नमोऽस्तु ते" हरिवं० १७८अ० "सा च अस्मात् कालगता ऐन्द्रीयपरपर्य्याया तस्याश्च इन्द्रकृ...लक्षणादिरत्यादेपि तथात्वम् । इन्द्रइव आनयति जीवयति रोगोपशमनेन आ+नी—णिच्—अच् पूर्वपदा०णत्वम् । ३स्थूलैलायां राजनि० । ४स्त्रीणां करणे ५नीलसिन्दुवारवृक्षे (सोम्भाल) मेदि० । (निसिन्दा) ६इत्वे अमरः, स्वार्थे कन् । इन्द्राणिकाप्युक्तार्थेषु ।

**इन्द्राह्व** पु० । इन्द्रस्येवाह्वानमस्य आ+ह्वा—टक् ६त० । इन्द्रगोपे कीटे ततः ताला० विकारे अञ् । ऐन्द्राह्व। तद्विकारे त्रि० ।

**इन्द्रानुज** पु० ६त० । १वामने स हि अदित्यामिन्द्रजन्मोत्तरं कश्यपेनोत्पादित. तदनन्तरयुक्ते २ नारायणे च "इन्द्रानुजानुचरभूपतया...ध्यवान..." माघः । इन्द्रावरजादयोऽप्यत्र ।

**इन्द्राभ** पु०कुरुवंश्यधृतराष्ट्रस्य पुत्रभेदे अयञ्च धृतराष्ट्रः आम्बिकेयादन्यः तथा हि "ततः संवरणात् सौरी सुषुवे तनयं कुरुम्" इत्युपक्रम्य तस्य "अविक्षितमभिष्वन्तमित्यादिना" अष्टौ अविक्षितादीन् सुतानुक्त्वा "अविक्षित. परिक्षित्" इत्यादिना तत्रापि परिक्षितादीनष्टौ सुतानुक्त्वा "जनमेजयस्य तनया भवितत्र महाबलाः । धृतराष्ट्रः प्रथमजः पाण्डुर्बाह्लीक एव च । निषधश्च महातेजास्तथा जाम्बूनदो बली" इत्यादिना जनमेजयस्याष्टौ पुत्रानुक्त्वा धृतराष्ट्रोऽथ राजासीत् तस्य पुत्रोऽथ कुण्डिकः" इत्यो वितर्कः क्राथश्च कुण्डिनश्चापि पञ्चमः । हविःश्रवास्तथेन्द्राभः

सुमन्युश्चापराजितः" इति भा० आ० ९४अ०उक्तः ।

**इन्द्रायुध** न०६त० । १शक्रशरासे वज्रे "सनादं मेघनादश्च धनुरैन्द्रायुधप्रभम्" रघुः । इन्द्रे तदधिष्ठितमेघे आयुधमिव । सूर्यकिरणसंपर्कात् मेघे जायमाने २धनुराकारे पदार्थभेदे तल्लक्षणाद्युक्तं वृ०स० "सूर्यस्य विविधवर्णाः पवनेन विघट्टिताः कराः साभ्रे । वियति धनुःसंस्थाना ये दृश्यन्ते तदिन्द्रधनुः । केचिदनन्तकुलोरगनिःश्वासोद्भूतमाहुराचार्याः । तद्यायिनां नृपाणामभिमुखमजयावहं भवति । अच्छिन्नमवनिगाढं द्युतिमत् स्निग्धं घनं विविधवर्णम् । द्विरुदितमनुलोमं च प्रशस्तमम्भः प्रयच्छति च । विदिगुद्भूतं दिक्स्वामिनाशनं व्यभ्रजं मरककारि । पाटलपीतकनीले शस्त्राग्निक्षुत्कृता दोषाः । जलमध्येऽनावृष्टिर्भुवि सस्यवधस्तरौ स्थिते व्याधिः । वल्मीके शस्त्रभयं निशि सचिववधाय धनुरैन्द्रम् । वृष्टिं करोत्यवृष्ट्यां वृष्टिं वृष्ट्यां निवारयत्यैन्द्राम् । पश्चात् सदैव वृष्टिं कुलिशभृतश्चापमावष्टे । चापं मघोनः कुरुते निशायाम् आखण्डलायां दिशि भूपपीडाम् । याम्यापरोदक्प्रभवं निहन्यात् सेनापतिं नायकमन्त्रिणौ च । निशि सुरचापं सितवर्णाभं जनयति पीडां द्विजप्रमुखानाम् । भवति च यस्यां दिशि तद्देश्यं नरपतिमुख्यं न चिराद्धन्यात्" । "न दिवेन्द्रायुधं दृष्ट्वा कस्यचिद्दर्शयेद्बुध" मनुः "इन्द्रायुधद्योतिततोरणाङ्कम्" रघुः । ततः तालादि० विकारे अञ् । ऐन्द्रायुधस्तद्विकारे त्रि० ।

**इन्द्रारि** पु० ६त० । असुरे ।

**इन्द्रालिश** पु० इन्द्रमिन्द्रधनुरालिशति लिश—तीक्ष्णे—क । इन्द्रगोपे कीटभेदे तस्य विकारः ताला० अञ् । ऐन्द्रालिशस्तद्विकारे त्रि० ।

**इन्द्रावसान** पु० इन्द्रस्य पर्जन्यस्यावसानमत्र । मरुदेशे । ततः उत्सादि० भवार्थे अञ् । ऐन्द्रावसान. मरुभवे त्रि०

**इन्द्राशन** पु०इन्द्राय ऐश्वर्याय अश्यते भुज्यते अश—कर्मणि ल्युट् । (सिद्धि) १भङ्गायाम् शब्दर० । तत्सेवने हि राज्यमपि तुच्छं भवतीति तस्यास्तथात्वम् । इन्द्रः इन्द्रधनुरिव अश्नुते अङ्कुरकवर्णफलत्वात् । (कु... गुञ्जावृक्षे हारा० ।

**इन्द्रासन** पु० इन्द्र आत्मा आस्यते विशिष्यतेऽनेन अस—क्षेपे करणे ल्युट् । (सिद्धि) १संविदावृक्षे तत्सेवने हि आत्मनोविशिष्टत्वात्तस्य तथात्वम् । पञ्चमात्रिकस्य प्रस्तारे आदि लघुके शेषगुरुद्वयात्मके २ प्रथमे भेदे न० ।

**इन्द्रिय** न० इन्द्रस्य आत्मनो लिङ्गं इन्द्र+घ । घ...

क्रियासाधने १ चक्षुरादौ २ हस्तादौ च। "इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा" पा० तस्यानेकविधार्थकता दर्शिता इतिशब्दः प्रकारार्थे इन्द्रेण दुर्जयमिन्द्रियमित्यपि" सि० कौ०। अत्र सूत्रे इन्द्रेण परमात्मना दृष्टमित्युक्तिरपि इन्द्रियस्य चक्षुरादीनां प्रत्यक्षागोचरतां निरस्यति। यद्वा इन्द्रेणात्मना दृष्टत्वात्तत्त्वेनाभिमतं काणोऽहं बधिरोऽहमित्याद्यभिमतम्। "एतस्माज्जायते प्राणोमनः सर्व्वेन्द्रियाणि चेति" श्रुतेः इन्द्रियस्य ईश्वरसृष्टत्वम्। इन्द्रदत्तमिति इन्द्र ऐश्वर्य्यं दत्तोऽस्मै स्वस्वकार्य्ये हि तेषामैश्वर्य्यमीश्वरेण दत्तम् अतएव तानि बलादिव गृहीत्वा विषयेषु प्राणिनं स्वस्वविषयग्रहणाय प्रवर्त्तयन्ति। असति ह्यैश्वर्य्ये न तद् सम्भवति। चक्षुरादीनामात्मानुमापकत्वञ्चेत्थम्। करणव्यापारः सकर्त्तृकः करणव्यापारत्वात् छिदिक्रियायां वास्यादिव्यापारवदिति करणव्यापारेण कर्त्तुरनुमानगम्यत्वे तत्साजात्यात् ज्ञानक्रियाकरणमपि सकर्त्तृकं करणत्वादिति चक्षुरादिना ज्ञानसाधनेनात्मनोऽनुमानम्। तथा इन्द्रियस्याप्रत्यक्षत्वेऽपि ज्ञानक्रिया सकरणिका क्रियात्वात् छिदिक्रियावत् इत्यनुमानम् तत्सत्त्वे प्रमाणम्। तत्तन्मतभेदेन इन्द्रियस्य भौतिकत्वाभौतिकत्वसर्वगतत्वासर्वगतत्वप्राप्यकारित्वाप्राप्यकारित्वादिकम् आत्मशब्दे ६६५ पृष्ठे प्रपञ्चेन परीक्षितम्। इन्द्रियञ्च द्विविधं ज्ञानकर्म्मेन्द्रियभेदात् तत्र श्रोत्रादीनि ज्ञानेन्द्रियाणि हस्तादीनि कर्मेन्द्रियाणि। "श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी। पायूपस्थं हस्तपादं वाक् चैव दशमी स्मृता" मनुः। "नासिकालोचने जिह्वा त्वक् श्रोत्रं चेन्द्रियाणि च। हस्तौ पायुरुपस्थश्च वाक्पादौ च दशैव तु" शारदा०। "बुद्धीन्द्रियाणि श्रोत्रघ्राणरसनत्वगाख्यानि। वाक्पाणिपादपायूपस्थानि कर्म्मेन्द्रियाण्याहुः" सां० का०। एतानि च बाह्येन्द्रियाणि। "उभयात्मकमत्र मनः संकल्पकमिन्द्रियञ्च साधर्म्म्यात्" सां०का० मनस्तूभयविधकरणोपकारित्वात् करणम्। तच्च ज्ञानकर्म्मव्यापारसामान्ये कारणमपि न तत्र करणम् असाधारणकारणस्यैव करणत्वात् रूपादिज्ञाने चक्षुरादीनामिव तस्य असाधारणबाह्यग्राह्यविशेषाभावात् किन्तु सुखाद्युपलब्धौ असाधारण्यात् तत्रैवास्य करणत्वमिति नैयायिकादयः। वेदान्तिनस्तु मनसोनेन्द्रियत्वमङ्गीकुर्व्वन्ति तच्च आत्मशब्दे दर्शितम्। अतएव "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनमिति" मनोबुद्ध्योरिन्द्रियात् पृथग्निर्द्देशः। सांख्यमते "सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात्। भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम्" सां०का० रजोगुणोपष्टब्धसात्त्विकादेवाहङ्कारात् एकादशेन्द्रियोत्पत्तिरुक्ता तेनाहङ्कारिकाणीन्द्रियाणि। "घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः" गौ०सू० भौतिकानीति नैयायिकाः। "एतस्माज्जायते प्राणः मनः सर्वेन्द्रियाणि चेति" श्रुतेः आत्मोपादानानीति वेदान्तिनः। अत्र इन्द्रियेभ्यः मनसः पृथग्निर्देशादपि मनसोनेन्द्रियत्वम् अतएव कठोपनिषदि गीतायाञ्च "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः" "इन्द्रियाणि हयानाहुर्मनः प्रग्रहमेव चेति" च इन्द्रियमनसोर्भेदनिर्देशः"। यथा च तदुत्पत्तिः तथा पञ्चदश्यां दर्शितम् यथा। "तमःप्रधानप्रकृतेस्तद्भोगायेश्वरेच्छया। वियत्पवनतेजोऽम्बुभुवो भूतानि जज्ञिरे। सत्त्वांशैः पञ्चभिस्तेषां क्रमाद्धीन्द्रियपञ्चकम्। श्रोत्रत्वगक्षिरसनघ्राणाख्यमुपजायते। तैरन्तःकरणं सर्वैर्वृत्तिभेदेन तद्द्विधा। मनोविमर्शरूपं स्याद्बुद्धिः स्यान्निश्चयात्मिका। रजोंशैः पञ्चभिस्तेषां क्रमात् कर्म्मेन्द्रियाणि तु। वाक्पाणिपादपायूपस्थाभिधानानि जज्ञिरे" १दीपे। तेषां स्थानकार्य्यादिकमुक्तं तत्रैव २दीपे "श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं चेन्द्रियपञ्चकम्। कर्णादिगोलकस्थं तत्प्राप्य धावेत् बहिर्मुखम्। कदाचित् पिहिते कर्णे श्रूयते शब्द आन्तरः। प्राणवायौ जाठराग्नौ जलपानेऽन्नभक्षणे। व्यज्यन्ते ह्यान्तराः स्पर्शा मीलने चान्तरं तमः। उद्गारे रसगन्धौ चेत्यक्षाणामान्तरग्रहः। पञ्चोक्त्यादानगमनविसर्गानन्दकाः क्रियाः। कृषिवाणिज्यसेवाद्याः पञ्चस्वन्तर्भवन्ति हि। वाक्पाणिपादपायूपस्थं कर्मेन्द्रियपञ्चकम्। मनो दशेन्द्रियाध्यक्षं हृत्पद्मगोलकस्थितम्। तच्चान्तःकरणं बाह्येष्वस्वतन्त्रं विनेन्द्रियैः। अक्षेष्वर्पितेष्वेव गुणदोषविचारकम्। सत्त्वं रजस्तमश्चास्य गुणा, विक्रियते हि तैः। वैराग्यं क्षान्तिरौदार्य्यमित्याद्याः सत्त्वसम्भवाः। कामक्रोधौ लोभमोहावित्याद्या रजउत्थिताः। आलस्यभ्रान्तितन्द्राद्या विकारास्तमउत्थिताः। सात्त्विकैः पुण्यनिष्पत्तिः पापोत्पत्तिश्च राजसैः। तामसे नोभयं किन्तु वृथायुःक्षपणं भवेत्"। तत्रेन्द्रियाणां कार्य्यभेदा अपि सां०का०दर्शिताः यथा "शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः। वचनादानविहरणोत्

स्पर्शानन्दाश्च पञ्चानाम्”। आदिपदात् स्पर्शरूपरसगन्धानां ग्रहणम् तथा च श्रोत्रस्य शब्दग्रहणम्, त्वचः स्पर्शग्रहणम्, चक्षुषो रूपग्रहणम्। जिह्वाया रसग्रहणम्। घ्राणस्य गन्धग्रहणमसाधारणं कार्य्यं भवति। एवं वागादीनां वचनादिकर्म्माण्यूह्यानि। “अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम्। साम्प्रतकालं बाह्यं, त्रिकालमाभ्यन्तरं करणम्” सां० का०। “अन्तःकरणं त्रिविधं बुद्धिरहङ्कारो मन इति। शरीराभ्यन्तरवर्त्तित्वादन्तःकरणम्। दशधा बाह्यमिन्द्रियं त्रयस्यान्तःकरणस्य विषयाख्यं विषयमाख्याति विषयसंकल्पाभिमानाध्यवसायेषु कर्त्तव्येषु द्वारीभवति। तत्र बुद्धीन्द्रियाण्यालोचनेन, कर्म्मेन्द्रियाणि तु यथास्वं व्यापारेण” सां० कौ०। “विषयाणां ग्रहीतॄणि शनैः पञ्चेन्द्रियाणि च” मनुः। “शौचमिन्द्रियनिग्रहः” मनुः। “इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ” “इन्द्रियाणि प्रमाथीनि” गीता०। पञ्च बाह्यानि ज्ञानेन्द्रियाणीति मनुष्याद्यभिप्रायम् क्वचित् जीवे अदृष्टवशात् ततो न्यूनताऽपि। यथा वृक्षाणाम् स्पर्शसाधनत्वगिन्द्रियमात्रम् शङ्खशुक्त्यादीनाम् त्वग्जिह्वे द्वे इन्द्रिये मक्षीलतादीनां त्रीणीन्द्रियाणि। सर्पादीनां चत्वारीन्द्रियाणि तेषां श्रोत्राभावात् कुम्भीरस्य च चत्वारि तस्य जिह्वाभावात् इत्यवधेयम्। एतेषाञ्च जीवानां लिङ्गशरीरसत्त्वेऽपि तत्तद्गोलकस्थानशून्यत्वात्र तत्तत्कार्य्यार्थं वृत्तिः। बौद्धमते गोलकान्येवेन्द्रियाणि। तन्मतं विवरणोपन्यासे दूषितं तच्च ६६६पृ० दर्शितम्। २रेतसि ३ वीर्य्ये च। “इन्द्रियकामस्य” श्रुतिः “समावर्दिन्द्रिया भवन्ति” ताण्ड्य० “समानसामर्थ्याः” भा०

**इन्द्रियगोचर** पु० इन्द्रियस्य गोचरः विषयः। शब्दादिषु विषयेषु ते हि प्रतिनियतमेकैकस्येन्द्रियस्य ग्राह्या यथा श्रोत्रस्य ग्राह्यः शब्दः, त्वगिन्द्रियस्य स्पर्शस्तद्विशिष्टद्रव्यञ्च, चक्षुषो रूपं तदाश्रयद्रव्यञ्च, रसनायाः रसः, घ्राणस्य गन्ध इत्यादि। एवमन्यान्यपि न्यायादिमते तत्तदिन्द्रियग्राह्याण्यूह्यानि यथा “घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः। तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः”। आदिपदात् सुरभिदुर्गन्धत्वयोर्ग्रहणम्। तथा रसत्वमधुरत्वादिसहितः। एवं शब्दत्वतारत्वमन्दत्वादिसहितः “उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये। विभागसंयोगपरापरत्वस्नेहद्रवत्वं परिमाणयुक्तम्। क्रियां जातिं योग्यवृत्तिं समवायं च तादृशम्। गृह्णाति चक्षुः, सम्बन्धादालोकोद्भूतरूपयोः। उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः। रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कारणम्” भाषा० सोऽपि उद्भूतस्पर्शोऽपि चकारात् तद्वृत्तिस्पर्शत्वमृदुत्वकाठिनत्वादि ग्राह्यम्। एते च बाह्येन्द्रियाणां विषयाः। तेषां मते मनस इन्द्रियत्वात् तद्ग्राह्यास्तत्रैवोक्ता यथा “मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः” एवं सुखत्वदुःखत्वादिकमपि

**इन्द्रियग्राम** पु० ६त०। इन्द्रियसमुदाये “बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति” मनुः। इन्द्रियवर्गादयोऽप्यत्र। “निर्ज्जवार मधुनीन्द्रियवर्गः” माघः।

**इन्द्रियज** त्रि० इन्द्रियाज्जायते जन—ड ५त०। इन्द्रियसन्निकर्षजाते प्रत्यक्षे। “तदिन्द्रियजतद्धर्म्मबोधसामग्र्यपेक्षते” भाषा०। इन्द्रियजातादयोऽप्यत्र इन्द्रियाणि च विषयसन्निकर्षद्वारा ज्ञाने करणानि विषयसन्निकर्षस्य तत्र व्यापारः व्यापारेणैव तेषां जनकत्वात् ज्ञानानां तज्जन्यत्वम्।

**इन्द्रियज्ञान** न० इन्द्रियेण जनितं ज्ञानम्। प्रत्यक्षे ज्ञाने।

**इन्द्रियनिग्रह** पु० इन्द्रियाणां निग्रहः यथेष्टं प्रवृत्तानां स्वस्वविषयेभ्यः निवर्त्तनेन निरोधः। इन्द्रियाणां यथेष्टं प्रवृत्तानां स्वस्वविषयेषु १प्रसङ्गनिवारणे। स च सर्ववर्णसाधारणधर्म्मः “धृतिः क्षमा दयाऽस्तेयं शौचमिन्द्रियनिग्रहः। धीर्विद्या सत्यमक्रोधो दशकं धर्म्मलक्षणम्” मनुः। इन्द्रियनिग्रहः अप्रतिषिद्धेऽपि विषयेऽनतिप्रसङ्गः” एका० त० रघु०। २योगसाधनाङ्गे श्रोत्रादीनां ज्ञानेन्द्रियाणां वागादीनां च कर्म्मेन्द्रियाणां स्वस्वव्यापारेषु अनियोजनरूपे रोधने च। सर्वेषामनिरोधे योगसिद्ध्यभावो भङ्ग्या गीतायामुक्तः” “इन्द्रियाणान्तु सर्व्वेषां यद्येकं क्षरतीन्द्रियम्। तदस्य हरति प्रज्ञां दृतेः पात्रादिवोदकम्” मनसोनिग्रहादेवान्येषां निग्रहो भवति नान्यथा “इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते। तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि” गीतायां तथोक्तेः। मनोनिग्रहोपायश्च “असंशयं महाबाहो! मनोदुर्निग्रहं चलम्। अभ्यासेन तु कौन्तेय! वैराग्येण च गृह्यते” गीतोक्तेः अभ्यासवैराग्यरूपः। यथेच्छमिन्द्रियप्रसङ्गे पापमप्युक्तम् “विहितस्याननुष्ठानात् निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति” या० स्मृ०। इन्द्रियजयोऽप्यत्र इन्द्रियजये च शौचमेव हेतुः। यथाह पात० सूत्रभाष्ययोः “शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः” “सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शना

च” सू० “शुचेः सत्त्वशुद्धिस्ततः सौमनस्यं तत ऐकाग्र्यं तत इन्द्रियजयस्ततश्चात्मदर्शनयोग्यत्वम् बुद्धिसत्त्वस्य भवतीति” भा० एष च बाह्य उपायः। आभ्यन्तर उपायस्तत्रैवोक्तः। “ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः” पा० सू० ‘सामान्यविशेषात्मा शब्दादिर्ग्राह्यः तेष्विन्द्रियाणां वृत्तिर्ग्रहणं (१रूपम्) न च तत्सामान्यमात्रग्रहणाकारम् कथमनालोचितः सविषयविशेष इन्द्रियेण मनसानुव्यवसीयेतेति। स्वरूपं पुनः प्रकाशात्मनो बुद्धिसत्त्वस्य सामान्यविशेषयोरयुतसिद्धावयवभेदानुगतः समूहो द्रव्यमिन्द्रियम्। (२रूपम्) तेषां तृतीयं रूपम्। अस्मितालक्षणोऽहङ्कारः तस्य सामान्यस्येन्द्रियाणि विशेषाः। चतुर्थं रूपं व्यवसायात्मकाः प्रकाशक्रियास्थितिशीला गुणाः, येषामिन्द्रियाणि साहङ्काराणि परिणामः। पञ्चमं रूपं गुणेषु यदनुगतं पुरुषार्थवत्त्वमिति पञ्चस्वेतेषु इन्द्रियरूपेषु यथाक्रमं संयमः तत्र तत्र जयं कृत्वा पञ्चरूपजयादिन्द्रियजयः प्रादुर्भवति योगिनः” भाष्यम् तत्फलमपि तत्रोक्तम्। “ततो मनोजवित्वं विकरणभावः प्रधानजयश्च” पा० सू० ‘कायस्य मनोवदनुत्तमगतिलाभो मनोजवित्वम्। विदेहानाम् (देहानपेक्षाणाम्) इन्द्रियाणामभिप्रेतदेशकालविषयापेक्षो वृत्तिलाभः अतीतानागतदूरस्थबाह्यार्थविषयश्च वृत्तिलाभो विकरणभावः। सर्वप्रकृतिविकारवशित्वं प्रधानजयः इत्येतास्तिस्रः सिद्धयो मधुप्रतीका उच्यन्ते एताश्च करणपञ्चकरूपजयादधिगम्यन्ते” भा० एतासाञ्च बाह्यसिद्धीनां पारम्पर्येण सत्त्वपुरुषान्यताख्यातिरेव तु मुख्यं फलमिति तत्रैव प्रसिद्धम्।

**इन्द्रियवध** पु० इन्द्रियाणां बधः स्वस्वकार्य्येषु शक्तिविघातः। इन्द्रियबाधा स्वस्वकार्य्यानुकूलशक्तिप्रतिघाते ते च एकादशधा यथाह सां० का० कौमुद्योः ‘एकादशेन्द्रियबधाः सह बुद्धिबधैरशक्तिरुद्दिष्टा” का० एकादशेन्द्रियबधाः स्वस्वकार्य्यवैकल्यरूपाः तच्च “बाधिर्य्यमित्यादि कौ० वाक्यम् अशक्तिशब्दे ४७२ पृष्ठे उदाहृतम्

**इन्द्रियबोधन** त्रि० इन्द्रियं बोधयति स्वपानसाध्यवैकल्यं बुध+णिच्+ल्यु। स्वपानसाध्यवैकल्यबोधके मद्ये मद्यपाने हि इन्द्रियमात्रस्य स्वस्वकार्य्यव्यापारापाटवकरणात् आत्मवीर्य्यं तानि बोधयतीति तस्य तथात्वम्। “सर्वं पित्तकर मद्यम्”इत्युपक्रम्य ‘पाके लघु विदाह्युष्णं तीक्ष्णमिन्द्रियबोधनम्”। “कषायमधुरं मद्यं सुगन्धीन्द्रियबोधनम्”। “वातघ्नो मधुरप्रायोहृद्य इन्द्रियबोधनः” सुश्रु०।

**इन्द्रियवत्** त्रि० इन्द्रियं वश्यतया प्राशस्त्येन वास्त्यस्य मतुप् मस्य वः। १वश्येन्द्रिये २प्रशस्तेन्द्रिये च स्त्रियां ङीप्। इन्द्रियेण तुल्यम् इन्द्रियस्येव इन्द्रिये इव वा वति। इन्द्रियतुल्ये अव्य० इन्द्रियं वीर्य्यमस्त्यस्य मतुप् मस्य वः वेदे पूर्व्वपद नि० दीर्घः। वीर्य्यान्विते। “तेजः पशूनां हविरिन्द्रियावत्” वाज०। “हविष्य इन्द्रियवान् मदिन्तमः” वाज०। क्वचित् वेदे दीर्घेण। मत्र्त “सुतमिन्द्रियवत्” यजु०१४,२,

**इन्द्रियवृत्ति** स्त्री ६त०। “शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः। वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्” सांख्योक्ते श्रोत्रादीनां शब्दादिषु प्रकाशनार्थे १व्यापारे कर्म्मेन्द्रियाणां २वचनादानादिव्यापारे च। तत्र बुद्धीन्द्रिय वृत्तिश्च इन्द्रियजन्या बुद्धेस्तत्तदाकारेण परिणाम साच निर्विकल्पकस्थानीया इति सा० कौ० समर्थितं तच्च ८२६पृ० आलोचनशब्दे दर्शितम् कर्म्मेन्द्रियवृत्तिश्च वचनादानादिरूपो व्यापारः। मनोरूपेन्द्रियवृत्तिस्तु संकल्पविकल्पाध्यवसायरूपा मनोबुद्ध्योः परिणामभेदः।

**इन्द्रियसंप्रयोग** पु० इन्द्रियाणां संप्रयोगः स्वस्वविषयेषु प्रयोगःव्यापारणम्। विषयैरिन्द्रियसम्बन्धे असतख्यातिशब्दे ५२३पृष्ठे उदा०।

**इन्द्रियसन्निकर्ष** पु० इन्द्रियस्य स्वस्वविषयैः सह सन्निकर्षः सम्बन्धभेदः। प्रत्यक्षसाधने इन्द्रियस्य स्वस्वविषयैः सम्बन्धभेदरूपे प्रत्यक्षजनकव्यापारे। स च न्यायमते षोढा यथा “विषयेन्द्रियसंबन्धोव्यापारः सोऽपि षड्विधः। द्रव्यग्रहस्तु संयोगात् संयुक्तसमवायतः द्रव्येषु समवेतानां, तथा तत्समवायतः तत्रापि समवेतानां, शब्दस्य समवायतः। तद्वृत्तीनां समवेतसमवायेन तु ग्रहः। विशेषणतया तद्वदभावानां ग्रहो भवेत्” भाषा०। तथा च द्रव्यस्य प्रत्यक्षे इन्द्रियसंयोगः कारणम् द्रव्यसमवेतगुणकर्म्मजातीनां प्रत्यक्षे इन्द्रियसंयुक्तसमवायः। द्रव्यसमवेतसमवेतानां गुणत्वकर्म्मत्वादीनां प्रत्यक्षे इन्द्रियसंयुक्तसमवेतसमवायः। शब्दस्य प्रत्यक्षे श्रोत्रसमवाय शब्दवृत्तिशब्दत्वादेः, श्रोत्रसमवेतसमवायः कारणम्। “अभावप्रत्यक्षे समवायप्रत्यक्षे च इन्द्रियसंयुक्तस्वरूपसम्बन्धविशेषणता हेतुः। वैशेषिकमते तु समवायस्य न प्रत्यक्षम्। अत्र यद्यपि विशेषणता नानाविधा तथा हि भूतलादौ घटाभावः संयुक्तविशेषणतया गृह्यते संख्यादौ रूपाद्यभावः संयुक्तसमवेतविशेषणतया, संख्यात्वादौ रूपाद्यभावः संयुक्तसम-

केवलसमवेतविशेषणतया। शब्दाभावः केवलश्रोत्रावच्छिन्न-विशेषणतया। रूपादौ रूपत्वाद्यभावः श्रोत्रावच्छिन्नसमवेत-विशेषणतया। एवं रूपत्वावच्छिन्नाभावे रूपत्वाभावादिकं विशेषणविशेषणतया। एवं घटाभावादौ घटाद्यभावः संयुक्तविशेषणविशेषणतया। एवमन्यदप्यूह्यम् तथापि विशेषणतात्वरूपेणैकैव सा गण्यते अन्यथा षोढा सन्निकर्ष इति प्राचां प्रवादो व्याहन्यतेति” मुक्ता०। इन्द्रिय सयोगादयोऽप्यत्र

**इन्द्रियस्वाप** पु० इन्द्रियाणां स्वस्वविषयेषु स्वाप इव अप्रवृत्तिरत्र। १सुषुप्त्यवस्थायाम् तत्र हि मनःसहितसर्वे-न्द्रियाणामुपरमः श्रुत्यादावुक्तः “सुषुप्तिकाले सकले प्रलीने” इति श्रुत्या “यत्र सुप्तो न कञ्चन पश्यतीति” श्रुत्या इन्द्रियमात्रलयश्रवणात्। इन्द्रियैःस्वस्य स्वकारणभावस्वापः प्राप्तिर्यत्र। इन्द्रियाणां स्वरूपतः स्वकारणलयकाले प्रलये। मरणे तु न स्वरूपतस्तेषां लयः। “तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वेऽनूत्क्रामन्तीत्यादि” श्रुतेः “पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्” मिति स्मृतेश्च प्राणा-नामाप्रलयस्थायित्वावगतेः। तत्र गोलकाभावेन वृत्तिमात्रं न भवति पुनर्देहान्तरे गोलकोदये वृत्तिलाभ इति भेदः “तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः” इति शां० सू० भाष्ययोर्निर्णीतम्। एवं सांख्यमतेऽपि किन्तु तन्मते लिङ्गदेहे प्राणपञ्चकं विहाय पञ्चभूतानां प्रवेश इत्येतावन्मात्रभेदः।

**इन्द्रियात्मन्** पु० इन्द्रियमेवात्मा। १इन्द्रियस्वरूपे कर्मधा०। २इन्द्रियेषु।

**इन्द्रियादि** पु० ६त०। सांख्यमतसिद्धे इन्द्रियकारणे अहङ्कारे “सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात्” सां०का०

**इन्द्रियाधिष्ठातृ** ६त०। इन्द्रियाणामचेतनानां स्वस्वकार्य्येषु व्यापारसम्पादनाय ईश्वरनियोजिते देवभेदे। ते च देवाः “दिग्वातार्कप्रचेतोऽग्निवह्नीन्द्रोपेन्द्रमित्रकाः”। शारदा० दर्शिताः पदार्थादर्शे एतद्व्या० “एते इन्द्रियाधिष्ठातृदेवाः। यदाहुः वैकारिकादिगाद्याश्च चन्द्रोऽन्तकादय स्मृताः। इन्द्रियाणामधिष्ठातृदेवास्ते सात्त्विका मता” इति तथा च श्रोत्रस्याधिष्ठातृदेवता दिक्। त्वचः वायुः, चक्षुषः अर्कः। रसनायाः प्रचेताः, घ्राणस्याश्विनौ। वाचः अग्निः पाणेः शक्रः, पादस्य उपेन्द्रः (विष्णुः), पायोः मित्रः उपस्थस्य कः ब्रह्मा। मनसः चन्द्रमाः।

**इन्द्रियायतन** ६त०। श्रोत्राद्याधारे देहे तस्य इन्द्रियाधा-रत्वस्वाभावात्। स च सूक्ष्म एव देहः। यथाह सां०का० “पूर्व्वोत्पन्नम् (म) सक्तं नियतं महदादिसूक्ष्मपर्य्यन्तम्। संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्”। “प्रधाने-नादिसर्गे प्रतिपुरुषमेकैकमुत्पादितम् आ चादिसर्गात् आ च महाप्रलयादवतिष्ठते महदादिसूक्ष्मपर्य्यन्तं महदहङ्का-रैकादशेन्द्रियपञ्चतन्मात्रपर्य्यन्तम् एषां समुदायः सूक्ष्मश-रीरं शान्तघोरमूढैरिन्द्रियैरन्वितत्वाद्विशेषः। नन्वस्त्वेत-देव शरीरं भोगायतनं पुरुषस्य, कृतं दृश्यमानेन षाट्कौषि-केन शरीरेणेत्यत आह संसरतीति उपात्तमुपात्तं च शरीरं जहाति हायंहायं चोपादत्ते, कस्मात्? निरुपभोगं यतः, षाट्कौषिकं शरीरं विना सूक्ष्मं निरुपभोगं, तस्मात्संस-रति। ननु धर्म्माधर्म्मनिमित्तः संसारः न च सूक्ष्मशरीर-स्यास्ति तद्योगः, तत्कथं संसरतीत्यत आह भावैरधिवा-सितं धर्म्माधर्म्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्य्यानैश्वर्य्याणि भा-वास्तदन्विता बुद्धिः तदन्वितञ्च सूक्ष्मशरीरमिति तदपि भावैरधिवासितं यथा सुरभिचम्पककुसुमसम्पर्कात् वस्त्रं तदामो-दवासितं भवति तस्माद्भावैरधिवासितत्वात् संसरति। कस्मात्पुनः प्रधानमिव महाप्रलयेऽपि तच्छरीरं न तिष्ठ-तीत्यत आह लिङ्गम् लयं गच्छतीति लिङ्गं हेतुमत्त्वेन चास्य लिङ्गत्वमिति” भावः। सां०कौ०। “पञ्चप्राणमनोबुद्धिदशे-न्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसा-धनम्” स्मृतिः। पञ्चद० इदमेव वाक्यमुपन्यस्तम्। न्यायादिमते स्थूलदेह एव इन्द्रियायतनं तैः सूक्ष्मदेहा-नङ्गीकारात् इति भेदः जीवाहष्टवशादेवापूर्व्वदेहे एव तत्तदिन्द्रियाण्यपि तत्तद्देहे उत्पद्यन्ते मनांसि तु अन-न्तानि तानि च नित्यानि तेषाञ्च अदृष्टवशात् एकैक-स्मिन् देहे एकैकस्य प्रवेश इति हि तेषां सम्मतम्। २ आत्मनि च “आत्मेन्द्रियाद्यधिष्ठाता” लिङ्गशरीरशब्दे एतेषां युक्तायुक्तत्वपरीक्षणम् करिष्यते।

**इन्द्रियाराम** त्रि० इन्द्रियेषु आरमति आ+रम–घञ्। इ-न्द्रियार्थभोगप्रसक्ते “अघायुरिन्द्रियारामो मोघं पार्थ स जीवति” गीता०।

**इन्द्रियार्थ** पु० ६त०। इन्द्रियगोचरपदार्थे शब्दादौ “इ-न्द्रियार्थेषु सर्वेषु न प्रसज्येत कामतः” मनुः। इन्द्र इ-न्द्रियं तस्यार्थे च हि०व०। “इन्द्रियार्थसन्निकर्षोत्पन्-नम्” गो०सू०। इन्द्रियेणार्थं प्रसमीक्ष्य इत्यत्र तत्र विग्रहस्तु न्याय्यः।

**इन्द्रियावित्** त्रि० इन्द्रिय ग्राह्यतया प्राप्तव्ये न याज्यस्य सा०

त्रिमि वेदे पूर्व्वपददीर्घ । १वाह्येन्द्रिये २प्रधानेन्द्रिये च ।
"सएवाक्षिरिन्द्रियं द्विधा तन्द्रियाण्येव भवति" श्रुतिः ।

इन्द्रियेश पु० ६त० । १जीवे तदधिष्ठानेनैव तेषां इस्व-त्वत्तेस्तथात्वम् २इन्द्रियाधिष्ठातृदिगादिदेवादिषु च ।

इन्द्रेज्य पु० ६त०। इहस्पतौ शक्रेज्य इन्द्रपूज्यादयोऽप्यत्र

इन्द्रेश्वर पु० इन्द्रेण स्थापित ईश्वर ईश्वरलिङ्गम् । महे-न्द्रपर्व्वतस्थे इत्रासुरवधजनितब्रह्महत्याविघातार्थं शक्रेण स्थापिते शिवलिङ्गभेदे तत्कथा प्रा० वि० काशि० पुरा-णम् । "इत्थं कृत्वा ततः शक्रोमाहेन्द्रे स्थाप्य शङ्करम् । लिङ्गं विमुक्तः पापौघैस्ततः स त्रिदिवं गतः । तद्यापी-न्द्रेश्वरं दृष्ट्वा तथा रामेश्वरं प्रभुम् । मुच्यते ब्रह्महत्या-या नरो वै नात्र संशयः"।

इन्ध दीप्तौ रुधा० आ०अक० सेट् निशायामनिट् । वर्त्त-मानेवाऽतोनिशा । इन्धे, इन्धाते, इन्धते, "यं त्वां जनास इन्धते" ऋ०८,४,१ इन्धीत, इन्धाम् । इन्त स इन्धम् । ऐन्ध ऐन्धिष्ट इन्धाम्—बभूव । आस चक्रे इन्धिष्यते ऐन्धि-ष्यत । इन्धितव्यम् । इन्धिता इन्धनम् । इद्धोवर्त्तते । क्विप् समित् इन्धानः "अग्निमिन्धानो मनसा धियम् सचेत मर्त्यः" ऋ० । भावे इध्यते ऐन्धि । "यरो यदिध्यते दिवि का०उ०त पदगणव्याख्यासः ।

इन्ध पु०इन्ध+करणे—घञ् । १काष्ठे इन्ध—अच् । २दीप्तियुते । ३तन्नामके ऋषिभेदे पु० ततः गोत्रे नडा०फक् । ऐन्धा-यनस्तद्गोत्रापत्ये पुंस्त्री। दीप्तियुक्तं दक्षिणनेत्रे विशेषेण स्थिते ४परमात्मनि पु० । तत्र तद्व्युत्पत्त्या समर्थितम् बृ०उ०भा० । "इन्धोह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषस्तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेणैव, परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः" "इन्धोह वै नाम इन्ध इत्येवं नामायं 'चक्षुर्वै ब्रह्मेति' आदि-त्यान्तर्गतःपुरुष एवः, योऽयं दक्षिणेऽक्षन् अक्षिणि विशे-षेण व्यवस्थितः । स च सत्यनामा तं वा एतं पुरुषं दीप्तिगुणत्वात् प्रत्यक्षं नामास्य इन्ध इति तमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेण, यस्मात् परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः प्रत्यक्षनामग्रहणं द्विषन्ति" भा० "इन्धयति दीपयति इन्ध—णिच्-अच् । ५दीपके त्रि०। एतस्मात् पूर्वस्थयो ! आग्नाग्नेयाः समासे सुम् । अग्न-इमिन्धः अग्निमिन्धः । "होताध्वर्युरावया अग्निमिन्धो ग्रावग्राभ" यजु० २५,२८, अग्निमिन्धस्य आग्नीत् नाम ऋत्विक्।

इन्धन न०इध्यतेऽनेन इन्ध+करणे—ल्युट् । १काष्ठे "इन्धनौघ धगप्यग्निस्त्विषा नात्येति पूषणम्" माघः । "कामिनीव विवाहेषु मता भक्ष्येषु तथेन्धने" मनुः । इन्धने इन्धना-पहारे इत्यर्थः "इन्धनार्थमशुष्काणाम्" प्रा०वि० स्मृतिः । इन्धयति इन्ध—णिच्-ल्यु । २दीपककर्त्तरि त्रि०। भावे ल्युट् । ३प्रज्वालने न० ।

इन्धन्वन् त्रि० इन्धन+मत्वर्थीयः । वेदे वनिप् नि० वर्णा-लोपः । इन्धनयुक्ते । "इन्धन्वभिर्धेनुभीरप्सुदूधभिः" ऋ० २,३४,५ "इन्धन्वभिः समिन्धनवद्भिः" भा०।

इन्व गतौ भ्वा० सक०। इनधातौ ८२८ पृष्ठे विवृतिः ।

इन्वका स्त्री इन्वति इन्व—अक् स इव कायति कै—क । मृग-शिरोमस्तकोपरिस्थे इल्वलाख्यताराम्रु अमरटीका ।

इभ पु० इण्—भ किच्च। १हस्तिनि "वन्येभदानानिलगन्ध-दुर्द्धराः" माघः २तत्संख्यानुल्यसंख्याके अष्टसंख्यान्विते च । गजाहि अष्टसु दिक्षु स्थिता ऐरावतादयोऽष्टौ वर्त्तन्ते इति तेषामष्टत्वम् । ते च "ऐरावतः पुण्डरीकः वामनः कुमुदोऽञ्जनः । पुष्पदन्तः सार्व्वभौमः सुप्रतीकश्च दिग्गजाः" अमरोक्तक्रमेण पूर्व्वादीशानान्तदिक्षु स्थिताः। अस्य च उत्तरपदस्थत्वे श्रेष्ठार्थद्योतकता व्याघ्रादेराकृति गणत्वात् उपमितसमासः । स्त्रियां ङीप् । जातित्वात् पोटायुवतिश्च समासेऽस्य पूर्वनिपातः पुंवद्भावश्च इभपोटा

इभलक्षणविभागादि इह०सं० "मध्वाभदन्ताः सुविभ-क्तदेहा न चोपदिग्धाश्च कृशाः क्षमाश्च । गात्रैः समैश्चाप-समानवंशा वराहतुल्यैर्जघनैश्च भद्राः॥ वक्षोऽथ कक्षावलयः श्लथाश्च लम्बोदरं त्वग्बृहती गलश्च । स्थूला च कुक्षिः सह पेचकेन सैंही च दृङ्मन्दमतङ्गजस्य ॥ मृगास्तु ह्रस्वाधरवालमेढ्रास्तन्वङ्घ्रिकण्ठद्विजहस्तकर्णाः। स्थूलेक्ष-णाश्चेति यथोक्तचिह्नैः सङ्कीर्णनागा व्यतिमिश्र चिह्नाः ॥ पञ्चोन्नतिः सप्त मृगस्य दैर्घ्यमष्टौ च हस्ताः परिणाहमानम् । एकद्विवृद्धावथ मन्दभद्रौ सङ्कीर्णनागो ऽनियतप्रमाणः ॥ भद्रस्य वर्णो हरितो मदस्य मन्दस्य हारिद्रकसन्निकाशः । कृष्णो मदश्चाभिहितो मृगस्य सङ्कीर्णनागस्य मदो विमिश्रः ॥ ताम्रौष्ठताल्व-दनाः कलविङ्कनेत्राः, स्निग्धोन्नताग्रदशनाः पृथुलाय-तास्याः। चापोन्नतायतनिगूढनिमग्नवंशास्तन्वेकरोमचित-कूर्म्मसमानकुम्भाः । विस्तीर्णकर्णहनुनाभिललाटगुह्याः कूर्म्मोन्नतैर्द्विनवविंशतिभिर्नखैश्च । रेखात्रयोपचितवृत्तकराः सुवालाः धन्याः सुगन्धिमदपुष्करमारुताश्च । दीर्घाङ्गु-

स्निग्धपुष्करा: सजलाम्भोदनिनादबृंहिताः। दृढदायत-
हस्तकन्धरा धन्या भूमिपतेर्मतङ्गजाः। निर्मदाभ्यधिक-
हीननखाङ्गान् कुब्जवामनकमेषविषाणान्। दृश्यकोषफल-
पुष्करहीनान् श्यावनीलशबलासिततालून्। स्वल्पवक्त्र-
रुहमत्कुणषण्ढान् हस्तिनीं च गजलक्षणयुक्ताम्। ग-
र्भिणीं च नृपतिः परदेशं प्रापयेदतिविरूपफलांस्तान्"।
हेमा०परि०ख०लक्षणसमुच्चये विष्णुध०। "नागाः प्रशस्ता
धर्मज्ञ! प्रमाणादधिकाश्च ये। दीर्घहस्ता महोच्छ्राया-
ऽवामनाश्च विशेषतः। निगूढवंशामध्यश्च व्यूढा व्यूढोरु
मस्तकाः"(व्यूढा विपुलाः)"विंशत्यष्टादशनखाः। शीतका-
लमदाश्च ये। ते प्रशस्तामहानागाः ये तथा सम्प्रलक्षिताः।
दन्तच्छेदेषु दृश्येत येषां स्वस्तिकलक्षणम्। भृङ्गारवालव्य-
जना वर्द्धमानाङ्कुशास्तथा। धार्य्या नैते तथा धार्य्या वामना
ये च मत्कुणाः। हस्तिन्योयाश्च गर्भिण्यो ये च मूढा मत
ङ्गजाः। अपाकलाश्च कुब्जाश्च सदन्ताश्च भार्गव!।
कुदन्ताश्च तथा वर्ज्या वामकूटाश्च यत्नतः। अम्बु-
स्पृशश्च कूटाश्च ये महान्तो विकटाश्च ये"। राम उवाच
वामनाद्याश्च ये नागाः प्रोक्तानिन्दितलक्षणाः। तेषां तु
श्रोतुमिच्छामि लक्षणं वरुणात्मज!। पुष्कर उवाच।
आनाहायामसंपूर्णोयोऽधिकस्त्वो भवेद्गजः। वामनः स
समाख्यातोमत्कुणोदन्तवर्जितः।(आनाहःस्थूलता) (आ-
यामो दैर्घ्यम्)दशां चतुर्थी संप्राप्य वर्द्धते यस्य न द्विजौ।
स्थूलावनायतौ स्यातां स मूढो हि गजोऽधमः। अपा-
कलो विषाणेन दन्तेनैकेन वारणः। संक्षिप्तपश्चाज्ज
घन: पृष्ठमध्यसमुन्नतः। प्रमाणहीननाभिश्च स कुब्जोवा-
रणाधमः। अनुन्नताभ्यां सदन्तः कुदन्तःस्यात्ततो बहिः।
( बहिर्दन्तसीमनि )। वामदन्तोन्नतो नागो वामकू-
टश्च कथ्यते। दन्तावम्बुस्पृशौ यस्य सोऽम्बुस्पृगिति की-
र्तितः। एकदन्तस्तथा नागः कूट इत्यभिधीयते। पादयोः
सन्निकर्षः स्यात् यस्य नागस्य गच्छतः। स षण्ढोऽध्वनि युद्धे
च लक्षणज्ञैर्न पूजितः। अरत्न्यभ्यधिकं यस्य विस्तरेण
स्तनान्तरम्। विकटः सविनिर्दिष्टो दुर्गतिनिन्दितोगजः।
राम उवाच। श्रोतुमिच्छाम्यहम् देव! कुञ्जरं सम्प्रलक्षितम्।
यं प्राप्य किल राजानोजयन्ति वसुधां नृपाः। पुष्कर
उवाच। वर्णः सत्त्वबलं रूपकान्तिःसंहननं जवः। सप्तैतानि
यदा यस्य स गजः सम्प्रलक्षितः। ये वामदक्षिणपार्श्व-
भागेनाप्नात्तकाया:पिटकोत्थयापि। ते नागमुख्या विजयाय
युद्धे भवन्ति राज्ञां न हि संशयोऽत्र" तत्रैव पराशर-

संहिता। "हस्तिनां जातिदेशवर्णाकृतिप्रमाणचेष्टादि-
लक्षणमनुव्याख्यास्यामः। तत्र जातयश्चतस्रो भवन्ति।
भद्रा मन्दा मृगा मिश्राश्चेति तत्परिमाणमाकृतिचेष्टा-
दिभिरुपदिश्यते। तत्र भद्रजातिर्वा दृढश्चायतवृत्तोन्नतो-
न्नमस्तकः उदग्रसत्त्वोऽनुवृत्तकरः श्रोता दीर्घपुष्क-
राङ्गुलिमालधिः महानम्भोरोमशग्रीवः। स्थूलमेढ्रोदर-
ताम्रताल्वजिह्वौष्ठः सुपार्श्वः स्निग्धः सवर्णमृदुरोमा
कूर्मपादः लम्बस्थितिचितांसः पृथ्वासनः सूक्ष्मबिन्दु-
चित्रोबहुतनुरोमोपचितश्रोत्रः सुनखो धनुःपृष्ठवंशो मधु-
वर्णतालुर्यूथाभिरक्षिता सहिष्णुरन्वर्थवेदी बलवान् कामा-
तुरोहत्यावमर्दी मृदुनोपायेन साध्य आत्मपदे यत्याक्षी च
भवति"। (उदग्रो उच्चः अनुवृत्तकरः अनुक्रमेण वृत्तकरः
पुष्करः कराग्रं मध्या धमनी अन्वर्थवेदी अर्थे वक्ष्यते)।
मन्दजातिः संवेताभिन्नः सुहनु महोदरकरश्रोताः
स्थूलदन्तनतपृष्ठवंशः स्थूलहस्तजिह्वाशग्रीवः, पृथुक-
स्तमस्तकः सुविभक्तोरःशिराःसुमृदुवृत्तश्रोत्रः स्थूलास्थि-
करकवापीविलपादः सूक्ष्मनाभितनुताम्रत्वक्कटः
दीर्घोन्नमेढ्राङ्गुलिवालधिर्मुष्करस्थकवरणोपदिग्धोद्ध-
र्यः सुवत्तजघनः सहस्तोरस्तोगम्भीरवेदी मन्दजातिः
जातयद्गोहठमन्मथत्तोचाससाध्योयूथानुगामी यद्दृच्छगतोपि
नारिभयमाविशति। (गम्भीरवेदो वक्ष्यते उपदिग्धो लिप्तः)
मृगजातीयः पुनर्हस्वपुष्करोत्तरहनुहस्तवास्यमेढ्रनखद-
न्तनखपृथुवंशग्रीवास्योदरमेढ्रतनुविषाणनेत्रकथाहत्ततनु-
श्रोत्रः कुण्ठोष्ठो घनायताप्रकायः संक्षिप्तकराखो
व्यक्तमस्तकोदीर्घजिह्वोविषाणोपगोतः शोघ्रोबहुशनोभार-
क्रान्तो मनस्वी दुर्दमः स्वयूथपश्चान्तानुचारी भिन्नपुरीषोऽ-
तिक्रमणवेदी कुयास्त्रक्रन्दनश्चेति। मिश्रास्तु तेषां
परस्परसंयोगजाः सर्वसंकरलक्षणा इति। भद्रा श्रेष्ठा भव-
न्त्यासां मन्दा मध्या कनीयसी। मृगा मिश्राऽधिकैर्वा
गुणदोषैः समासतः। अथ वनभेदेन गजभेदाः। अथैषां
प्राच्यकारूषदशार्णमार्गचेदककालिङ्गकापरान्तिकसौराष्ट्र
पञ्चनदाख्यान्यष्टौ वनानि वासस्थानानि तेषां पृथक्
पृथक् कर्म लक्षणमुपदेक्ष्यामः। तत्र हिमवद्गङ्गा-
प्रयागलौहित्यान्तरे प्राच्यवनमत्रोत्पन्नाः कपिलाः अल्पाः
कृशपार्श्वा यो वारणाश्च पृथुपेचकवंशपिलकाः पृथुहस्ता-
मन्दवेगाकृत्याश्च प्रकाकृतयो भवन्ति। ( पेचकः पुच्छमू-
लम् ) मेकलो मत्स्यो गङ्गावतारश्चेति कारूषाख्यवन-
मत्रोत्पन्नाः श्यामाश्चण्डाः उत्तरपार्श्वस्थानात्या-

श्रिताः शोभोदयाश्चहस्तिशालैर्हस्तिनो भवन्ति। महागिरिदशार्णत्रिपुराटवीरावतीनां मध्ये दशार्णं वनमभिख्यातमत्र दीर्घाङ्गुलिपुष्कराः पाण्डुराः श्यामा वा दुर्द्धर्षाः सुवृत्तजघनाग्राः सितसूक्ष्मबिन्दुचित्रा-श्चूतफलतुल्यमद गन्धिनो विशालोत्सङ्गदन्ताः स्थूलह-स्ताश्च शिराग्रीवा मध्यगाः स्वासनाः सत्ववन्तश्च। पारि-यात्रवैदिशमध्यावर्त्तनानामन्तर्गणेयकं वनमत्रोदग्राः शोभदीर्घक्रमेणोपदिग्धाङ्गाः बलवन्तोऽभिजाताः सुप्र-माणाः मध्वाभामृदुत्वचः कषायिनप्राया अल्पमेच-काश्चरिष्यावाबलच्छवाः सुहृष्टाः स्निग्धरोमाणः स्थिराः सुशरीराः करेणूनामधिपतयः स्वल्पतापाश्च। त्रिपुरसह्यदशार्णयोत्कलानां मध्ये कालिङ्गकं वन-मत्र कलविङ्काभाः सर्व्वश्वेताः स्थिरपदाः शोभाः मृदुसूक्ष्मरोमाणस्तनुत्वगुदरादीर्घकेशबालधयो दीर्घ-क्रमाः बलवन्तोऽल्पमेचकाः पद्मप्रभा यातुरुदग्रा धनुः-पृष्ठवंशारक्तताल्वजिह्वौष्ठाः सुप्रयोगपञ्चसुखाः वराङ्गज-घनाः नीचहस्तनखाः स्थिरचरणाः आयुसुवेदिनोमधद-शभाः पीतसुस्रवशिरोधराः महोरगहस्तकराः मृदु-दीर्घहस्ताश्च हस्तिनो भवन्ति। नर्म्मदोदधिसेवदेशान्तो-पहारवामन्तरतोऽपरान्तिकं वनमत्र मानिनो धीराः श्यामाः सम्प्रतिष्ठिताः हस्वजघनशिरोधरा पीनायतविषा-णाः स्नायुका मृदुत्वच उदपादीर्घरक्तताल्वोष्ठजिह्वा-महोत्सङ्गाः पद्मसदगन्धिनो धनुःपृष्ठवंशाविष्टत्वास्ता-भाग्यवनविचारिणः। द्वारकार्बुदावन्तिनर्म्मदान्तरतः सौ-राष्ट्रकं वनमत्राल्पायुषस्वल्पाः पिङ्गायताक्षाः मध्या-यताङ्गश्चाल्पमेचका मृदुविभक्तमात्राप्रतिलोमशोमशचर-रणस्तनुत्वक्कर्णनखाः स्निग्धदन्ताः शिवात्मज इति। हिमवत्सिन्धुकुरुजाङ्गलकानामभ्यन्तरे यनं पञ्चनदाख्यं तत्र स्फुटितकृष्णश्वेतांशुदन्तास्तनुबिन्दूपचितकराः सुगन्धयोऽहदवोमहापेचकदेशाङ्गप्रमाणाः सूक्ष्मदृढत्वचोदु-र्विनेयाध्यानशीलाः कलहप्रियो भवन्त्यपि। वनेषु तेषु जायन्ते प्रधानामध्यमोत्तमाः। प्रशस्ता निन्दिताश्चापि तेषां वक्ष्यामि लक्षणम्। नखजतुकावसक्ताग्रं सुरसमल्पाङ्गु-ष्ठपुष्करं दुर्गन्धं कर्कशत्वग्रोमाणमाततस्तब्धस्थूलविरलप-र्वाणं हस्तिनो प्रशस्तमध्यन्यविघातधन्यं पीतं मृदुरोमा-णमनुपूर्व्वपतितं चाङ्गदीर्घाङ्गुलिपीनं पृथुपुष्करं मृदुवलि-तम्। सुगन्धिवृत्तं पद्मदलाकारं हिरक्तं हस्तत्क्षोतापो-दकाग च। कच्छस्फुटिताग्रसमविनविषमवक्रबलक-

मूलाग्रदन्तावपूजितौ पूजितौ च स्निग्धसूक्ष्मपद्मशोभ-ताम्रविलमसमाहितौ मधुवर्णौ सुकुञ्चिताग्राबाबाधमन्वा-यातावष्टादशाङ्गुलपरिणाहौ। अथ विरूपविषमे वराह-नकुलध्वाङ्क्षवानराभे कृष्णविच्छिन्ने शुष्के सन्निमीलिते लोचने न पूजिते पूजिते च कलविङ्काभसूक्ष्ममणि-पिङ्गलवर्णे सतुपहिते च। प्रशस्तं समाहितमायतपृथु-वाहित्यमवस्थितरक्तताल्वजिह्वौष्ठचारुसूक्ष्मारुणबिन्दूप-चितं सर्व्वसंपूर्णम्। मृदुमृदुनिर्याणपीडितपुष्करं विषममासनात् सङ्कुलावागबन्धनाभावेन नतकुम्भल-म्बनेनातिरिक्तं प्रमाणं सटाघनपिङ्ग कृष्णास्थूलहन्द रोमोपचितमपूजितं शिरोवारणानां पूजितं मध्यो-दयस्थानसुपचितसमूलमनिम्नस्वरनिर्याणं पृथुपुष्करं स्नि-ग्धमृदुसूक्ष्मयुग्मरोमसुविभक्तोर्णाभविताना वपाङ्गं वा सुखोत्क्रष्टोपक्रष्टौ हस्तौ लक्ष्मौ तनुविषमशिराततौ पीडितान्तावतिहस्वप्रमाणौ संहतच्छिद्रौ सान्द्रमृदुल-प्रमाणशिराजालपाठितपुटसंत्रिपुलमूलिकौ, पृष्ठच्छिद्रौ दुन्दुभिस्वनौ वा। लोपावहाच्छिद्रातिदीर्घानुपचिन-पीड़िका सुसुहतौ पृष्ठावम्यनात्युन्नतायतास्थानावपीडिता ग्रीवा वारणस्याप्रशस्ता शस्ता तु प्रष्ठोपरि पिण्डिका दृढारणो लि बलिः सान्द्रारत्निपरीणाहा द्वादशाङ्गुलायता सर्व्वसम्पूर्णा वा। विषममवाप्य संक्षिप्तलम्बं संपुटमा-नसं निर्गहितं स्थिरं च विनतमत्युन्नतं वक्षं पृष्ठवंशम-शोभनम्। शोभनमुपचितसूक्ष्मं धनुःप्रमाणमेवं संस्थानं विद्यात्। अथ पूर्व्वगात्रच्छिद्रोन्नतांस विकसितहस्तयो-र्हसं शिराबन्धनं स्तब्धव्याधिहृन्वोहनिर्लग्नं विषमक-पाबलम् प्रमाणहीनमनिष्टम् इष्टमनुपूर्व्वोपचितं स्थिरविभक्ताजिनसत्कोटमनुपविष्टसुसमच्छिद्ररन्ध्रोपचितम-योरक्तं वा। अथ जघनं घनमुच्छ्रितास्थि निर्मांसमेचकं कलाहीनातिरिक्तप्रमाणं बालध्यनुशायि शमनर्थकरम्। अर्थकरमत्यमेचकं पक्षोपचितमहच्छशुष्कस्पष्टचतुरस्त्रमाव-ताग्नं चारुबालधिपरिपूर्णाण्डकोषायततया नाशिरा-लपल्लवाकारमेहनमजघनञ्चयनं च श्यावाल्पहृस्वस्फुटित-नखश्लिष्टसन्धि, परुषाशारतलसहा न पूजिताः पादाः अन्ये भवन्त्यपि च। विंशत्यष्टादशनखाः स्थिराः कूर्मस-माहिताः। गजानां पूजिताः पादा ये च स्वर्विकचाविताः। पादाः कचाविला स्वर्णविवर्णाः परुषाः लघाः। वार-णानान्न शस्ताः स्युर्ये वा स्निग्धतनूरुहाः। सूक्ष्मबिन्दु-चितां स्निग्धां त्वचं शंसन्ति दन्तिनाम्। आसन्न यो

विशालस्य विषाणौ पार्श्वे उन्नतौ । उपाहृतो विशालेन दन्तकेन वारणः । अनुन्नताभ्यां संपन्नः कुदन्तः स्यान्तावधिः । जर्द्धं वक्षान्तराद्यस्य प्रतिमानसमौ द्विजौ । इत्युस्थूलातिदीर्घेण दन्तेनैकेन वा गुणाः । वर्ज्यास्ते शुभकामेन सर्व्व एवातिगर्हिताः । अवद्दये नदीजानां पञ्चमेऽब्दे वनौकसाम् । दन्तमूलपरीणाहान् द्विगुणान् कल्पयेत्परे । शरयष्टिधनुश्चक्रस्थूलपट्टिसलक्षणाः । दन्ताग्रराजयो यस्य स रूपं वोढुमर्हति । रोमणां तु संश्रयो यस्य पिटक स उदाहृतः । स ज्येष्ठः सप्तभागोनोमध्यमोऽसौ मतङ्गजः । अन्यः षड्भागहीनः स्यात्ततोऽन्योऽपि न पूजितः । सुखाय मेचके दैर्घ्यं पृष्ठपार्श्वोदरान्तरम् । आनाहउच्छ्रय पादाद्विगुणो यावदासनम्”। वनविशेषेण गजलक्षणं तत्रैव वार्हस्पत्यसंहिता । “वनानां मध्ये प्राच्यं कारुकमापरान्तिकं च त्रीणि वनान्यतिशोभनानि । तथापि प्राच्यं वनं मध्यवनमपरेषामिव शोभनम् । तत्रैरावतकुलप्रसूतिसम्भवाः प्रायेण मृगमिश्रभद्रलक्षणाः महाकायाः करिणो भवन्ति । विनयसत्वशक्तिसम्पन्नाः पूगफलप्रभास्ताम्रत्विषः प्रविरलमदा गजा युद्धे चापसर्पणोपसर्पणनीरसा भवन्ति नातिक्रोधना: समुद्दीपिताः सत्वं दर्शयन्ति । ते च दृप्तैः कवलैः कायोपचयातिशयेन मदाभिमुखाः कर्त्तव्याः । कालिङ्गके वाऽपरान्तिके च त्रेतायुगोत्पन्नाः मन्द्रा महागजान्वयजा मन्द्राभिधानाः प्रायशो मृगावयवाः सङ्कीर्णा गजाः समुत्पद्यन्ते । नात्युद्रपा जलदप्रभा नातिस्थिरा मन्द्रा युद्धप्रियाश्च गजा भवन्ति । तथा कारूषदाशार्णमार्गणेयकाभिधानेषु मध्यमा गजाः समुत्पद्यन्ते मृगमन्द्रजातय ते च चार्वयवाः मध्यमबलामध्यमप्रमाणाः स्थूलरोमाविलशरीराश्चतुरदा मन्द्रगतयः । तथा सौराष्ट्रे पाञ्चनदाभिधाने द्वापरयुगोत्पन्ना मृगमतङ्गजान्वया मृगप्राया गजाभवन्ति भीरवः कृशिताङ्गाः नातचण्डादुर्मदाः दुष्टत्ताश्च एवंविधा गजाः समुत्पद्यन्ते वनाच्च वनान्तरे गतेषु दुर्वृत्तेषु गजेषु धेनुकासम्पर्केण गुप्तवनेऽपि कालिङ्गकेऽपि । त्रासशीलश्च भीरुश्च ह्रस्ववामनमस्तकः । हीनाग्रभोगो दुःशीलस्त्वसंहतशरीरभृत् । सर्वाच्छ्रितस्त्वनायामो परीणाहविवर्जितः । मृगस्वरूपोदीनश्च मृगजातिर्गजाधमः । अतः परं प्रवक्ष्यामि संकीर्णस्य च लक्षणम् । पशुत्वाद्वारणानाञ्च गच्छतां च वियोनिषु । धेनुकासु भवन्त्येते गजा सं-

कीर्णलक्षणाः । भद्रोमन्द्रोमृगोवाथ शुद्धजातिः प्रजायते । तस्मान्मिश्राणि रूपाणि गदतोमे निबोधत । आनन्त्यान्मिश्रजातानां निश्चयोनोपपद्यते । तथापि किञ्चिदुद्देशान्मिश्रलक्षणमुच्यते । भद्रमन्द्रो भद्रमृगो भद्रमन्द्रमृगस्तथा । इह भेदत्रयं मन्द्रमृगयोरपि जायते । भद्रादीनां च सर्वेषां रूपं संकीर्णसंश्रितम् । जर्द्धाधःकार्य्यभेदेन तज्जानि भिद्यते द्विधा । त्रिधा च भिद्यतेभूय एकैकन्तु यथाक्रमम् । एवमष्टादशविधं कीर्त्तितं मिश्रलक्षणम् । शुभाशुभं विभागेन साम्प्रतम् निगदाम्यहम् । भद्रमन्द्रोभवेदिष्टोमृगमन्द्रस्तथाधमः । भद्रमन्द्रमृगश्चैव मध्यमः परिकीर्त्तितः । भद्रजातिर्महाकायोगजोमध्ये तु दन्तिनाम् । मन्द्रोऽवयवलेशेन स युक्तो भवति द्विपः । मृगस्यापि हि रूपेण किञ्चिच्चानुगतेन वै । अशुभत्वं न भद्रस्य जायते शोभनो हि सः । लोचनानां प्रधानत्वं यस्माच्छास्त्रेषु कीर्त्तितम् । तस्मान्मृगाक्षिसंयुक्तोभद्रोऽपि हि न शस्यते । भाद्रेणो परिकायेन मान्द्रेनाधोगतेन वा । उन्नतोहि गजानान्तु भद्रमन्द्रोभवेद्गजः । अनेनैव हि रूपेण विपर्य्यासेन यो गजः । सोऽपि शोभन एव स्यान्मन्द्रभद्र इति स्मृतः । एवं विधात् मृगे चापि लक्षणान्मिश्रलक्षणम् । महावयवबाहुल्यात् मृगरूपस्य लेशतः । भद्रावयवनिर्मुक्तोमध्यमोऽसौ गजो भवेत्” कायेन यो भवेद्भद्रो मन्द्रोवापि मतङ्गजः । मृगगात्रोऽपरश्चैव स भवेद्वेगवान् गजः । मृगरूपाधिकत्वं च दृश्यते यस्य दन्तिनः । अधमस्तु स विज्ञेयः सत्वशक्तिविवर्जितः । करदन्ताक्षिकुम्भैश्च यो मृगोजायते गजः । शेषावयवभद्रोऽपि हीन एव भवेदसौ । एवमुद्देशमात्रेण मिश्रभेदा मयोदिताः । नोदिता येऽपि तेऽत्रापि मिश्रा ज्ञेया मनीषिभिः । मिश्रलक्षणसंयोग उत्कृष्टं यस्य दृश्यते । रूपन्नामधेयोऽसौ जायते हि मतङ्गजः । अतः परम्प्रवक्ष्यामि लक्षणं गिरिचारिणाम् । तथा नदी चराणां च तथैवोभयचारिणाम् । महाबला महाकायाश्चितांसा गिरिचारिणः । सुपार्श्वास्तारुदिग्धाङ्गाद्दढपादागतक्लमाः । उदग्रानिर्भयाश्चैव सल्लकीकवलप्रियाः । तटाघातविधौ भुग्नदन्तदारितभूतलाः । शार्दूलादिमहासत्वसंस्फोटातङ्कवर्जिताः । मदस्रावजलोत्साहादुर्दमावारिभीरवः । पांशुक्रीडारता नित्यं द्रुमोन्मूलनतत्पराः । विषाणवेष्टनाशीलाः स्वेच्छसन्तापनीरकाः । कराग्रस्फोटनिरता सीत्कारकरणप्रियाः । अनुदग्राघनश्यामाः सीकरोद्गिरणप्रियाः । तोयकर्म्मणि निःशङ्कामतङ्गाश्च नदीचराः । उभयेषुचर-

स्येते मद्दोपवर्णितास्तु। ये गजाश्छटमनसस्ते भवन्त्यतिशोभनाः। सर्वेषामेव नागानां छायालक्षणमुत्तमम्। यच्छाया जायते यस्य तस्यैवाभिधीयते। सत्वांशकत्वाद्भद्रस्य पाटला भवति प्रभा। नवपल्लवच्छाया स्निग्धा तनुतनूरुहा। तथा तमोंऽशकत्वाच्च कृष्णा मन्दस्य जायते। तद्वदाम्बुदसंकाशा स्थूलरूक्षत्वचान्विता। रजोंऽशकत्वाच्च तथा मृगस्यापि हि धूसरा। मलिनाम्बुदसंकाशा रूक्षा तनुतनूरुहाः। एवं छायाविशेषाः स्युर्भद्रादीनामयोदिताः। छाया संमिश्रभावाच्च मिश्रा भवति दन्तिनाम्। वनजातिगुणैर्भद्रः गजश्रेष्ठो नरोत्तम!। तमोंऽशकत्वं मन्दस्य यदुक्तं निबोध मे। दुर्मनस्त्वं तथाऽऽलस्यं निद्रालुत्वं च मूढता। गम्भीरवेदिता चेति मन्दस्य तम उत्थिते:। एवं रजोगुणो राजन् मृगस्तेन रजोंऽशकः। धैर्य्यं स्थैर्य्यं पटुत्वं च विनीतत्वं सुकर्मता। अन्वयवेदिता चैव भयस्थानेषु मूढता। सुभगत्वं च धीमत्त्वं सत्वस्यैते गुणाः स्मृताः। अतः सत्वांशको राजन् भद्रजातिरुदाहृतः। चिलत्वं बाहुशिरसोरन्तर्मणिगतं तथा। दन्तयोर्मधुवर्णत्वं नेत्रयोर्मधुपिङ्गता। आननस्य पृथुत्वञ्च पूर्णता कुक्षिपार्श्वयोः। पृथुत्वं पृष्ठभागस्य नतत्वं समवस्थिता। स्निग्धच्छाया त्वथायामःपरिणाहोच्छ्रयौ तथा। सम्भोक्तत्वं गुरुत्वं च कायस्यैते गुणाः स्मृताः। सर्वलक्षणसंपूर्णो दृश्यते न मतङ्गजः। प्रधानावयवे लोके यत्नः कार्यो मनीषिभिः। हीनं कृष्णं च कल्माषं पुष्करं न प्रशस्यते। संपूर्णं मांसलं रक्तं सुकुमारं शुभं स्मृतम्। ताम्रकुलम्भवेद्धीनं हि मन्यतिविनाशनम्। कृष्णं भर्तुर्विघाताय कल्माषं भर्तृरोगदम्। संपूर्णं सिद्धिदं भर्तुः पुष्करं चतुरङ्गुलम्॥ सौभाग्यदं मांसलन्तु सुकुमारं तथार्थदम्। रक्तपद्मदलच्छायं तथा मिष्टान्नपानदम्। अतः परं शुभेस्ते श्रोतसी पाटलोदरे। पञ्चाङ्गुलप्रमाणेन वर्तुलत्वेन चार्थदे। अवाक्षं च ताम्रं च वर्णतालं सुखप्रदम्। ह्रस्वा स्थूला च विपुला चिलिखी श्यामलोहिता। कुञ्चिता च तथा दृष्टिः सप्रधा दन्तिनां मता। तासां तु ताम्रकुलायामा या ह्रस्वेत्यभिसंज्ञिता। ह्रस्वा करोति नृपतेर्विनाशं शीघ्रमेव हि। स्थूला दुर्भिक्षकरणी श्यामला नृपदुःखदा। करोति चिलिखी नित्यं तस्यैव तु बहुव्ययम्। भुग्ना दृष्टिर्विनाशाय राज्ञो धनविनाशिनी। कुञ्चिताहीनयोश्चैव युद्धकाले रिपोर्जयम्। अतः परं प्रवक्ष्यामि क्रमेण करलक्षणम्। न करं दीर्घमिच्छन्ति बालधेः शास्त्रपण्डिताः। न बाल-

धिसमं ह्रस्वं नातिदीर्घं क्रमायतम्। न तनुं नातिकायं च न रूक्षं न क्षतव्रणम्। नाक्रमेण क्षतोत्सेधं न हीनं दशनान्तरम्। न ह्रस्वाङ्गुलिसंयुक्तं नातिसंकटपुष्करम्। एतल्लक्षणसंयुक्तं करं शंसन्ति कोविदाः। बालधेः सुसमो हीनः समो वा दन्तिदुःखदः। अतिदीर्घो भवेद्भर्तुरायुषः क्षयकारकः। तनुर्व्याधिकरो यात्युरतिकायोऽर्थनाशनः। रूक्षो व्याधिप्रणाशं कुर्याद्वातव्रणक्षतां व्यथाम्। प्रतिलोमेन च स्थूलोगजस्य सुखनाशनः। असमग्रस्तु हीनश्च असमञ्जसवर्द्धकः। दुःखशोकभयायासकर्त्ता भवति नित्यशः। दशनान्तरहीनश्च जायते दन्तिरोगकृत्। कथितं पूर्वमेवेषु पुष्कराङ्गुलिलक्षणम्। अतो मया न कथितं साम्प्रतं करलक्षणे। निर्बलोकोटीर्घरोमा क्रमवृत्तत्वसंयुतः। अणुबिन्दुर्विचित्रश्च दैर्घ्येण च शताङ्गुलः। बालधेः पुष्करं यावदायामो ज्ञाप्यते यया। अरत्निवयाऽऽनाहश्च हीनहीनतरक्रमात्। युक्तस्थनेन मानेन करः पूज्यतमो भवेत्॥ निर्मलोके च सौभाग्यन्दीर्घरोमार्थदः स्मृतः। क्रमवृत्तोजयं कुर्य्यादणुबिन्दुशुतोधनम्। सुप्रमाणं भवेद्राज्ञः करस्य परिवर्त्तनः। समाह्वयांश्च सततं राज्यस्फीतिकरो भवेत्। करस्य कीर्त्तितं ह्येतल्लक्षणं शुभसंज्ञितम्। अतःपरं प्रवक्ष्यामि लक्षणं दन्तवेष्टयोः। कफहीनावतिस्थूलौ विषमौ शिथिलौ तथा। दन्तवेष्टौ सदा भर्तुः प्रमाणाभ्यासमौख्यदौ। दन्तमूले सुसम्बद्धौ सकलौ किञ्चिदुन्नतौ। दृष्टौ सदा तथा भर्त्तुर्वृद्धिदौ परिकीर्त्तितौ। अतःपरं प्रवक्ष्यामि लक्षणन्तु विषाणयोः। व्यस्तता सङ्कटत्वं च प्रांशुता भङ्गशुभ्रता। वक्रत्वं ह्रस्वता चैव धूसरत्वं च रूक्षता। अद्रुताऽधोगतित्वञ्च हीनता मूलमध्ययोः। प्रान्तयोः स्थूलता चैव दीर्घता चातिमात्रता। सर्पच्छत्रककान्तित्वं दोषाह्येते चतुर्दश। दन्तयोस्तु समाख्याताः फलं तेषान्निबोध मे। व्यस्तौ च सङ्कटौ दन्तौ मदहानिकरौ तु तौ। दन्तिनस्तनुतायुक्तौ व्याधिदौ परिकीर्त्तितौ। भङ्गशुभ्रौ तथा भर्त्तुर्मह्रा क्लेशकरौ मतौ। वक्रौ चार्थविनाशाय ह्रस्वौ च परिकीर्त्तितौ। धूसरौ रूक्षतायुक्तौ गजस्यायुर्विनाशनौ। मृदुत्वयुक्तौ नागस्य शल्यव्रणकरौ मतौ। स्थूलाग्राधोगतित्वे च भर्तुर्यातुश्च दुःखदे। अशुभं लक्षणं ह्येतद्दन्तयोः कथितं मया। शुभं च साम्प्रतन्वक्ष्ये यथावदनुपूर्वशः। स्निग्धौ समौ सुनिष्क्रान्तौ संपूर्णौ व्रणवर्जितौ। मुकुलाग्रौ दृढौ वापि ताम्रचूडौ हलोदभौ। दक्षिणाग्रयुतौ किञ्चित् मृणालकुमुदप्रभौ। मधुकुन्ददलच्छायौ हेमचम्पक-

पिङ्गरौ। मधुपिङ्गौ घृतच्छायौ पीयूषसदृशप्रभौ। केतकीकुसुमाभौ च मृगाङ्ककिरणप्रभौ। अध्यर्द्धारत्निमानौ च तद्द्विनाहसंयुतौ। अमीभिर्लक्षणैर्युक्तौ दन्तौ नागस्य सम्मतौ। स्निग्धौ धनप्रदौ भर्त्तुरायुषश्च करौ मतौ। अरिघ्नौ तु सुनिष्क्रान्तौ संपूर्णौ राज्यदौ मतौ। निम्नगौ राज्यलाभाय मुकुटाग्रौ जयप्रदौ। दृढौ रोगविनाशाय ताम्रवर्णौ हलोपमौ। अरिसंघविनाशाय कीर्त्तितौ शास्त्रपण्डितैः। दक्षिणाभ्युन्नतौ भर्त्तुः कीर्त्तितौ भाग्यकारकौ। मृणालकुमुदच्छायौ सुभिक्षारोग्यकारकौ। हेमचम्पकसङ्काशौ वस्त्राभरणदौ स्मृतौ। कुन्दतौ मधुपिङ्गौ च निःसपत्नं महीतले। पशुलाभकरौ ज्ञेयौ घृतपीयूषसन्निभौ। केतकीकुसुमाभौ च भर्त्तुर्वंशविवर्द्धनौ। अध्यर्द्धारत्निकौ दन्तौ सुतभृत्यजयप्रदौ। आनाहमानसंयुक्तौ सदा कीर्त्तिकरौ मतौ। इदं शुभकरं राजन्! दन्तयोर्लक्षणं मतम्। अतःपरं प्रवक्ष्यामि नेत्रयोरपि लक्षणम्। मार्ज्जारनकुलक्रौञ्चशाखामृगनिभेक्षणान्। सर्व्वदोषकरान् राजन्! गजान् दूरेण वर्जयेत्। स्निग्धे मधुनिभे दीप्ते कलविङ्काक्षिसन्निभे। रक्तपद्मदलच्छाये पद्मरागमणिप्रभे। निर्धूमाग्निशिखाकारे इन्द्रनीलसमप्रभे; सौम्यदृष्टिसमायुक्ते त्र्यङ्गुले लोचने शुभे। स्निग्धे वृद्धिकरे भर्त्तुर्मधुपिङ्गे जयप्रदे। दीप्ते दीप्तिकरे चैव प्रतापायतने तथा। कलविङ्काक्षिरूपे च धनधान्यविवर्द्धने। चामीकरकरे नित्यं रक्तपद्मदलप्रभे। पद्मरागनिभे चैव रत्नालङ्कारकारके। निर्धूमाग्निशिखाकारे प्रतिपक्षभयङ्करे। मानयुक्ते च सौम्ये च लोचने बलवर्द्धने। अक्षिकूटकटोद्देशनिम्नौ राज्यविनाशनौ। संपूर्णौ च बलोत्साहमदवृद्धिकरौ मतौ। दन्ताश्रयं भवेन्नित्यं तालुकं षोडशाङ्गुलम्। षडङ्गुलं पृथुत्वेन वंशमध्यगतं भवेत्। तथा शुभाशुभं चैव लक्षणैः प्रकीर्त्तितम्। कर्कशम्परिदग्धञ्च कृष्णं कल्माषमेव वा। चतुर्विधमनिष्टं स्याद्यथावदभिधीयते। कृष्णं मसीसमं ज्ञेयं कल्माषं कृष्णलोहितम्। मांसलं धूम्रवर्णं च परिदग्धं प्रकीर्त्तितम्। कर्कशञ्च तिलच्छायं कथितं शास्त्रवेदिभिः। गर्भस्थस्य यदा पित्तं चीयते तालुकं भृशम्। कृष्णतालुस्तदा नागो जायते पापलक्षणः। व्याधिभिः पीड्यते नित्यं वातपित्तकफोद्भवैः। तृतीयां वा चतुर्थीं वा दशां प्राप्य विनश्यति। संग्रामे वा पलायेत बहुशस्त्रक्षतव्रणः। शस्त्रसङ्घातपूर्णाङ्गः कृतान्तभवनं व्रजेत्। वातपित्तकफा यस्य कुर्व्वन्ति तालुके गदम्। गर्भस्थस्यैव कल्माषतालुकं तस्य जायते कृष्णतालुनि ये दोषा रक्ते चैव गुणाः स्मृताः। कल्माषतालुनस्ते तु भवन्ति च द्वयोरपि। रक्तच्छायं यदा वंशे पार्श्वयोरसितं भवेत्। तदा मध्यफलं ज्ञेयं गुणदोषसमाश्रयात्। यदा वंशे च कृष्णं स्यात्पार्श्वयोस्ताम्रता भवेत्। भर्त्तुरुद्वेगजनकं कल्माषं तालुकं तदा। किञ्चिद्धीनं तु यत्तालु परिदग्धं तदा भवेत्। नागस्याधोरणस्यापि बलक्षयकरं हि तत्। कर्कशं च भवेत् तालु पित्तकोपसमुद्भवम्। महामात्रविनाशाय वारणस्योपजायते। (महामात्रो हस्तिपकः) कृष्णतालोरपि यदा दक्षिणावर्त्तनं भवेत्। दृश्यते नित्यमेवं हि तदासौ दोषवर्जितः। यथा गृह्णाति नो दोषान् सुलोकः सुसमाहितः। गुणान् करोति हृदये न तथा कथितामपि। दोषघ्नं लक्षणं यस्तं यदाचार्य्यैरुदाहृतम्। तत्तथैवावगन्तव्यं नान्यथात्रापि भाषितम्। एवं जिह्वापि मन्तव्या तालुनः समलक्षणा। अरत्निमात्रा दैर्घ्येण विस्तारेऽष्टाङ्गुला मता। अशुभं लक्षणं ह्येतत्तालुकस्य मयोदितम्। शुभं च साम्प्रतं वक्ष्ये लक्षणं शृणु चानघ!। रक्तं श्वेतं कषायं च तालुकं स्यात् शुभप्रदम्। रक्तं वृद्धिकरं भर्त्तुस्तथा चायुर्विवर्द्धनम्। दन्तिनोऽशोकपुष्पाभं रिपुक्षयकरम्मतम्। श्वेतं पुष्टिकरं चापि वारणस्योपजायते। चम्पकाभं तथा भर्त्तुरारोग्यस्य विवर्द्धनम्। कषायं सर्व्वदा ख्यात प्रयातुः सौख्यवर्द्धनम्। एवं जिह्वापि रक्ताभा सर्व्वसौख्यप्रदा मता। अतःपरं प्रवक्ष्यामि सृक्कण्योश्चैव लक्षणम्। दन्तिनो मानहीने च सृक्कणी मानवर्जिते। (सृक्कणी ओष्ठसन्धी) मुखरोगकरे नित्यं पण्डितैः परिकीर्त्तिते। सर्व्वसौख्यप्रदे तस्य संपूर्णे द्वादशाङ्गुले। अतःपरं च प्रवक्ष्यामि लक्षणं चिवुकोष्ठयोः। अरोमशश्चलोयुक्तमाताम्रं च तथा लघु। गजस्यौष्ठं न शंसन्ति मुनयो दन्तरोगदम्। दीर्घरोमा सुसंपूर्ण ओष्ठः पद्मदलप्रभः। षोड़शाङ्गुलमानाहश्च हस्तार्द्धं वायतः शुभः। भर्त्तुरायुःकरो दीर्घो दीर्घरोमा च कीर्त्तितः। पूर्णः पूरयते कोशं रक्तः सौभाग्यदो भवेत्। अरोमशं तथा हीनं चिवुकं न प्रशस्यते। तद्धि वारणनाशस्य मुखरोगकरन्मतम्। चतुरङ्गुलमानन्तु स्थूलं रोमान्वितं यत्। तत्प्रशस्तं गजेन्द्राणां सुखालङ्कारकारकम्। निम्ने च विषमे चैव हीने चैवाशुभे मते। मदहानिकरे नित्यं सगदे कर्णरोगदे। शम्बलिनादयुक्ते च समे चैव सुखप्रदे। मानं च कर्णपाल्यास्तु मूलादारभ्य मस्तके। नाड्यावधि कुब्जं च हीनं निम्नं च गर्हितम्। मुखरोगकरं नित्य

बलहानिकरं च तत् । पूर्णं चैवोन्नतं चार्द्धहस्तमात्रायतं भवेत् । तद्धि वारणनाशस्य सुखरोगकरं मतम् । चतुरङ्गुलमानं तु स्थूलम् रोमाविलञ्च यत् । तत् प्रशस्तं गजेन्द्राणां सुखाह्लादकारकम् । अरत्निपरिणाहञ्च करिणां सत्त्वशक्तिदम् । वामनं हस्तहीनञ्च परिणाहविवर्जितम् । अव्यक्तञ्च न शंसन्ति शातकुम्भं विपत्करम् । द्वादशाङ्गुलविस्तारन्दैर्घ्येणाष्टादशाङ्गुलम् । व्यक्तं शुक्तिपुटाकारं तद्भर्त्तुर्लाभकारकम् । गर्त्ताकारे च निर्मांसे कठिने चातिकुञ्चिते। शिरश्चोरोगजनने गजस्यारोहकस्य च। संपूर्णे सुकुमारे च सुप्रशस्ते प्रकीर्त्तिते। राज्यवृद्धिकरे नित्यं भर्त्तुर्विजयकारके । इदमेव हि विज्ञेयं लक्षणं कटपार्श्वयोः। अतःपरं प्रवक्ष्यामि लक्षणं कुम्भयोरपि । विषमत्वमरोमत्वं देहच्छायाविवर्णता । समता कण्ठपृष्ठाभ्यां समाधिक्यमपूर्णता । व्यक्तता वामनत्वं च परिणाहविहीनता । तनुभावः शिखरयोः कुम्भदोषा दश स्मृताः । भर्त्तुश्चापत्करौ ज्ञेयौ विषमौ रोमवर्जितौ । देहच्छायाविवर्णौ तु शत्रुलोकविवर्द्धनौ ; कण्ठपृष्ठसमौ चैव प्रयातुः प्रविनाशनौ। मानाधिकौ च हीनौ च भर्त्तुरुच्छेदकारकौ। व्याप्तौ च वामनौ चैव भर्त्तुः कीर्त्तिविनाशनौ । परिणाहविहीनौ च कोशक्षयकरौ मतौ । शिखरस्य तनुत्वेन युक्तौ कुम्भौ तु रोगदौ । अशुभं लक्षणं ह्येतत्स्यात्तच्च शुभं शृणु । समौ दीर्घकचाक्रान्तौ विस्तीर्णशिखरौ तथा । कर्णमूलात्समारभ्य हस्तार्द्धजमितोच्छ्रयौ । सुसंहतौ च पीनौ च कामिनीकुचसन्निभौ । समाक्रान्तललाटौ च देहच्छायासमप्रभौ । आरोहकशरीरार्द्धदशनावरणक्षमौ । सश्रीकौ च सुवृत्तौ च शुभौ कुम्भौ प्रकीर्त्तितौ । समौ च दीर्घरोमाढ्यौ भर्त्तुः श्रीसौख्यकारकौ । समानौ रिपुनाशाय तथैव च समुन्नतौ । सुसंहतौ च पीनौ च वरस्त्रीलाभकारकौ । शत्रुनाशकरौ ज्ञेयौ कामिनीकुचसन्निभौ । समाक्रान्तललाटौ च सुखदौ रोगनाशनौ। आरोहिस्थगितार्द्धौ च सश्रीकौ च जयप्रदौ । वृत्तौ च हस्तिनां कुम्भौ सुखाह्लादकारकौ । अतःपरं प्रवक्ष्यामि कर्णयोरपि लक्षणम् । निर्लोमशौ स्नसाकीर्णौ तनुच्छिद्रौ तनुत्वचौ । (स्नसा शिरा) सङ्कटौ विषमौ ह्रस्वौ त्रुटिताग्रौ च निष्ठुरौ । लम्बौ च वर्त्तुलौ चैव कर्णौ नागस्य निन्दितौ । फलञ्च साम्प्रतं वक्ष्ये यथावदनुपूर्व्वशः। निर्लोमशौ स्नसाकीर्णौ गजस्य कर्णरोगदौ । निष्ठुरौ त्रुटिताग्रौ च यातुःकोपहरौ मतौ । लम्बौ च वर्त्तुलौ चैव गजस्यायुर्विनाशनौ । अतःपरं प्रवक्ष्यामि शुभकर्णविनिश्चयम् । द्विरत्निमानसंयुक्तौ शिराजालविवर्जितौ । समत्वचौ महाच्छिद्रौ स्निग्धौ दुन्दुभिनिस्वनौ । कपोलमण्डलाच्छादाततशब्दौ मुहुर्मुहुः । कर्णौ चामरसंकाशौ मृदुरोमलतार्च्चनौ । अजर्जरमृदुप्रान्तावीषद्गुप्तावचूलिकौ । मयूरतालवृन्ताभौ सुविस्तीर्णसमौ शुभौ। द्विरत्निमानसंयुक्तौ भर्त्तुरायुःकरौ मतौ । स्नसाजालविनिर्मुक्तौ शिरोरोगविनाशकौ । समत्वचौ महाच्छिद्रौ गजलाभकरौ मतौ । स्निग्धौ कान्तिकरौ नित्यं जयदौ दुन्दुभिस्वनौ । शत्रुनाशकरौ प्रोक्तौ मृदुरोमोल्लतार्च्चनौ । अजर्जरमृदुप्रान्तौ प्रयातुः सौख्यकारकौ । गजस्योपचयायैव ईषद्गुप्तावचूलिकौ । मयूरतालवृन्ताभौ तुरङ्गबलवर्द्धनौ । सुविस्तीर्णौ समौ भर्त्तुर्भूमिलाभकरौ मतौ । कर्णयोस्तु समाख्यातं मयैतत् शुभलक्षणम् । कण्ठस्य साम्प्रतं वक्ष्ये यथावदनुपूर्व्वशः । अवक्रोऽहीनो दीर्घश्च कण्ठश्च शुभदो भवेत् । आरोहकप्रभूणाञ्च क्रमशः कुञ्जरस्य च । अवक्रः परिणाहेन सप्तषष्ट्यधिकं शतम् । अङ्गुलानां तथायामे द्वादशैवाङ्गुलानि तु । सम्पूर्णपिण्डितोदग्रशान्तमणिविभूषितः । कण्ठो वारणनाथस्य एवं भूतः सुपूजितः । ऋजुः प्रमोदजननः सम्पूर्णः कार्य्यसिद्धिदः । अह्रस्वोजयलद्भर्त्तुः कीर्त्तितः पूर्णपिण्डकः । उदग्रो वंशवृद्धिं च प्रतापं कुरुते तथा । अन्तर्मणिसमायुक्तो मणिरत्नप्रदो भवेत् । करालश्चातिनिम्नं च आसनं न प्रशस्यते । करालं यातुरशुभं निम्नं च व्रणकारकम् । दैर्घ्येण हस्तमात्रं तु विस्तीर्णञ्च शुभं स्मृतम् । विस्तीर्णं विस्तृतं राज्यं सम्पूर्णं कुरुते जयम् । वंशस्याथ प्रवक्ष्यामि लक्षणं तु शुभाशुभम् । अत्युच्छ्रितो निम्नपारः ह्रस्वो वंशो न शस्यते । राज्ञां च पादरोगाणां कर्त्ता च स भवेत्तदा । सप्तत्यङ्गुलायाममासनात्पश्चिमासनम् । यावत् प्रपूर्य्यते पार्श्वं वंशोऽश्वफलकाकृतिः । शुभो ज्ञेयो गजेन्द्राणामायामः कुरुते सुखम् । पूर्णपार्श्वस्तु लाभाय धनुःपृष्ठः श्रियं नयेत् । अरत्निद्वयमानं तु पेचकात्पश्चिमासनम् । घनास्थि विषमं निम्नकुञ्चितं पुच्छरोगदम् । मांसोपचयपूर्णं च विस्तीर्णञ्च शुभं मतम् । जघनोपरि रोगाणां तद्धि नाशकरं मतम् ।(पेचकात् पुच्छमूलात्)। पुच्छो गजस्य नो शस्तो बहुदीर्घोऽतिलम्बितः । करोति महतीं पीडां दासस्याधोरणस्य च । दशाङ्गुलस्तु पृथुत्वेन दैर्घ्येणाष्टादशाङ्गुलः । संपूर्णः पेचको ज्ञेयो गजभर्त्तुः सुखप्रदः ।

वक्रं स्थूलञ्च ह्रस्वं च पुच्छं कचविवर्जितम् । यस्मानाहं च नागस्य सर्व्वदोषकरं भवेत् । अवक्र ऋजुदीर्घश्च पश्चिच्छीनः सुपेचकः । गोपुच्छबालप्रतिमकचव्रातविभूषितः । भूमिं तु न स्पृशेत् यस्तु चतुर्भिरङ्गुलैः सदा । स शुभो बालधिर्ज्ञेयो गजभर्त्तुः सुखप्रदः । अतिप्रमाणं ह्रस्वं च कर्व्वुरं विगतप्रभम् । शिरालं चाशुभं मेढ्रं राजहस्तिपदुःखदम् । प्रशस्तं अष्टाङ्गुलायामं नाहतः षोडशाङ्गुलम् । शिराजालविनिर्मुक्तमाम्रपल्लवसप्रभम् । द्व्यङ्गुलं स्रोतसा युक्तं बिन्दुजालविवर्जितम् । मेढ्रं प्रशस्तं विज्ञेयं भर्त्तुर्जीवितवर्द्धनम् । अतःपरं प्रवक्ष्यामि लक्षणं गात्रयोरपि । हीने तनू च दीर्घे च सममांसोच्छ्रये तथा । विषमे च कचाक्रान्ते गात्रे नागस्य निन्दिते । हीने तनू च कुरुतः प्रयातुर्विनिपातनम् । सममांसोच्छ्रये यातुर्विषमे च विपत्करे । कचाचिते गजस्यैव गात्ररोगकरे तथा । अतःपरं प्रवक्ष्यामि गात्रयोः शुभलक्षणम् । सार्द्धद्विरत्निस्त्रिरत्निः शताङ्गुलसमानता । एवंमिते स्मृते गात्रे भर्त्तुरारोग्यसौख्यदे । समे च कचहीने च गजलाभकरे तथा । गजस्य पुष्टिदे नित्यं मांसले च घने स्मृते । गात्रे वारणनाथस्य एवंभूते शुभे मते । चिपिटे वा सफलके गात्ररोगकरे सदा । संपूर्णे राज्यदे भर्त्तुर्गजस्य बहुसुप्रदे । तथैव रोमनिह्निते गजस्य गलोरगदे । अतःपरं प्रवक्ष्यामि नखानाञ्च शुभाशुभम् । हीनाः कृष्णाश्च खण्डाश्च रूक्षाश्च न नखाः शुभाः । सदा च रोगदा हीनाः कृष्णा भर्त्तुर्विनाशनाः । खण्डा रूक्षा गजस्यैव पादव्याधिविवर्द्धनाः । स्निग्धाश्चन्द्रार्द्धसच्छाया मानेनैव पुरोनखाः । अष्टादिपञ्चसंख्यानि अङ्गुलानि क्रमेण हि । एवंविधा नखाः यस्य भर्त्तुरारोग्यकारकाः । अतःपरं प्रवक्ष्यामि पादयोरपि लक्षणम् । हीनौ स्फुटतलौ रूक्षौ चरणौ दन्तिदुःखदौ । हस्तप्रमाणौ दैर्घ्येण कूर्म्माकारौ सुखप्रदौ । अतःपरं प्रवक्ष्यामि लक्षणञ्चापरान्वितम् । अत्युच्छ्रिते च हीने च निन्दिते चापरे तनू । सम्पूर्णे च शुभे ज्ञेये त्र्यरत्न्यायामसंयुते । निन्दिते रोगदे ज्ञेये पूजिते प्रभुसौख्यदे । द्वादशाङ्गुल हीनं तु चासनात्पश्चिमासनम् । अपरपादयोश्चापि आयामोऽरत्निमात्रकः । नखानां च तथा मानं षडादिचतुरङ्गुलम् । प्रधानावयवानान्तु लक्षणं कथितं यथा । उत्सेधायामनाहानां साम्प्रतं कथयाम्यहम् । समतन्तुसमायुक्तं तन्तुना वर्त्तितेन च । सुप्रशस्ते दिने नित्यं मानं कुर्व्वीत मानवित् । सप्तारत्नि गजेन्द्राणां प्रमाणं वनजन्मनाम् ।

आसनं यावदुत्सेधस्तावत्सम्मितः कीर्त्तितः । पेचकात्पतिमानन्तु आयामोऽरत्नयो नव । मध्यदेशे तदानाहो दशरत्निः प्रकीर्त्तितः । मानमेतद्धि भद्रस्य मुनिभिः परिकीर्त्तितम् । सप्तमेन तु भागेन हीनं मन्द्रस्य जायते । मन्द्राद्धीनं मृगाख्यस्य षड्भागेन प्रकीर्त्तितम् । एवं क्रमेण वक्तव्यं मानं मानविशारदैः । किञ्चिन्मानाधिके वापि न दोषः संप्रपद्यते । दोषाणां च गुणानाञ्च वृद्धिरेव फलप्रदा । सत्त्वं हि वारणेन्द्राणां नित्यं तन्त्वेषु संस्थितम् । स्निग्धे मधुनिभे दीप्ते कलविङ्काक्षिसन्निभे । रक्तपङ्कजच्छाये पद्मरागमणिप्रभे । नीलच्छाये अतीक्ष्णे च गजे सत्त्वं प्रतिष्ठितम् । मार्जारवानरादीनां सदृशे नोबलं गजे । हीनसत्त्वाश्च जायन्ते गिरिकूटोपमा अपि । अधिकं पुष्करं यस्य मांसलत्वेन जायते । प्रभयाच कषायं स्यान्मानेनाङ्गुलपञ्चकम् । किञ्चिदूने च विज्ञेये स्रोतसी चतुरङ्गुले । स्थूलपञ्चाङ्गुलायामा त्र्यङ्गुला नाहमानता । हस्तोऽपि पूर्वमानस्य स्थूलत्वेनाधिको भवेत् । रोमशोनातिह्रस्वश्च पृथुकः षड्भिरङ्गुलैः । आयामेनैव हीनः स्यात् पूर्वमानात् षडङ्गुलैः । नातिगोपुच्छसंस्थानः कृष्णबिन्दुविभूषितः । आनाहे रत्निमानौ तु सार्द्धहस्तद्वयायतौ । पीयूषकुसुमच्छायौ किञ्चिच्छ्यामकपिङ्गलौ । स्निग्धौ मुग्धतमावेव दन्तौ नागस्य कीर्त्तितौ । दन्तावेतावतिस्थूलौ कचाक्रान्तौ सुनिष्ठुरौ । पञ्चाङ्गुलौ कटौ ज्ञेयौ मांसोपचयपूरितौ । ज्ञेये कटोपरि तथा स्रोतसी द्व्यङ्गुलान्तरे । एकाशीत्यङ्गुलानाहे द्वाविंशत्यङ्गुलायते । किञ्चिन्नतं कचाक्रान्तं वाहित्थं परिकीर्त्तितम् । पतिमानं तु विज्ञेयं हस्तः सचतुरङ्गुलः । अध्यर्द्धरत्निमानं च प्रमाणान्तरभेदतः । आयामतस्तु विज्ञेयश्चाधरस्तु दशाङ्गुलः । विंशत्यङ्गुलनाहस्तु परिणाहोऽभिधीयते । पञ्चाङ्गुलं तु चिबुकं स्वक्किणी तु नवाङ्गुले । षड्विंशदङ्गुलायामे सङ्कृते परिकीर्त्तिते । अध्यर्द्धरत्निकौ कर्णौ विस्तारेण कचाचितौ । कषायपक्ष्मौ स्थूलौ कृष्णबिन्दुविचित्रितौ । सपक्ष्मा मकराकारावचूकौ कचाचितौ । पञ्चाङ्गुलान्तरौ पीनावुभावोष्ठौ दशाङ्गुलौ । कर्णात् कर्णान्तरं यावत् सप्तत्यङ्गुलं शिरः । वातकुम्भं तथा ज्ञेयं स्थूलं सप्तदशाङ्गुलम् । अङ्गुलानां शतं सार्द्धमानाहि द्व्यङ्गुलाधिकम् । आयतत्वं च मस्तकस्य दशाङ्गुलमिति स्मृतम् । भद्रस्यैवासनं ज्ञेयं तद्दैर्घ्यं सप्तरत्निकम् । षडङ्गुलोच्छ्रितं स्थूलं तुल्यं वाङ्कूलं नरः । हस्तमूलाद्विहस्तन्तु जायते पश्चिमासनम् । उच्चैश्च

तु हीनं स्यादासनं षड्भिरङ्गुलैः । मेढकस्याङ्गुला-यामो लम्बत्वे नाङ्गुलत्रयम् । विंशत्यङ्गुलमानाहे भवेत् पुच्छोयथागमम् । मान्नपादक्रमेणैव तथायामेऽङ्गुलत्रयम् । दैर्घ्येण तु स विज्ञेयो भूमेरष्टाङ्गुलोच्छ्रितः । इदं बालधिमानं तु मन्दस्य परिकीर्त्तितम् । सार्द्धद्व्यरत्निके मूले अपरे स प्रकीर्त्तिते । उदरे चातिमात्रं स्यान्मेढ्रं हस्तद्वयायतम् । त्रिंशत्यङ्गुलमानाहे कृष्णच्छायं सदा भवेत् । पञ्च चत्वारि च त्रीणि अङ्गुलानि नखाः क्रमात् । आपाण्डुविवराः कुन्दाभासाश्चापरपादयोः । अनेनैव तु मानेन गात्रपादसमाश्रयाः । नखा मन्दस्य विज्ञेयाश्चरणाश्च कथाबिलाः । अतिस्थूलः पृथुत्वेन सार्द्धहस्ताधिकः करः । अरत्निकं वा, दैर्घ्येण प्रमाणं गात्रयोरपि । उरोमणि तथा श्रेयोरत्निमात्रोऽतिमांसलः । विंशत्यङ्गुलमानस्तु अन्तर्गलमणिर्भवेत् । अनेनैव हि मानेन वातकुम्भः प्रकीर्त्तितः । एते प्रशस्ता मन्दस्य मृगाय ! कथितास्तव । नोक्ता ये तेऽपि भद्रस्य विज्ञेयाः समलक्षणाः । मृगस्य साम्प्रतं वच्मि प्रदेशान् लक्षणान्वितान् । त्र्यङ्गुलं पुष्करं तस्य त्र्यङ्गुले श्रोतसी तथा । अङ्गुलानि च चत्वारि कीर्त्तितास्तस्य चाङ्गुलाः । तनुः करः त्र्यरत्निःस्यादानाहे सार्द्धरत्निकः । बाहित्यात् पुष्करं याव मानं सङ्क्षिप्तदाहृतम् । तथा तनुतरौ दन्तौ दैर्घ्ये सार्द्धद्व्यरत्निकौ । शुक्लौ च मस्तकौ स्यातान्तयोः सप्तदशाङ्गुलौ । प्रतिमानं तथा ज्ञेयं निम्नं पञ्चदशाङ्गुलम् । द्व्यङ्गुलं चिबुकं तस्मादधरस्तु षडङ्गुलः । अष्टादशाङ्गुलानाहे स्तकणौ तु षडङ्गुले । स्याताम ङ्गुलविंशत्यौ कपोलौ निम्नमध्यगौ । कटौ द्व्यङ्गुमानौ तु नियोंचे चतुरङ्गुले । नेत्रे चापि तथा स्यातान्निष्प्रभे स्थूलतारके । नातिव्यक्तं समांसं स्याद्वातकुम्भं दशाङ्गुलम् । गर्त्ताकारञ्च निम्नं च कटकुम्भं तथैव तु । अष्टाङ्गुलान्तरं कुम्भ आयामे षोडशाङ्गुलः । विंशत्यङ्गुलकौ कर्णौ लम्बौ ह्रस्वौ च वर्त्तुलौ । सप्तवत्यङ्गुलानाहा आयामे षोडशाङ्गुला । ग्रीवा मृगस्य विज्ञेया करालमासनं भवेत् । सार्द्धद्व्यरत्निकायामः कृशतनुरोऽतिमात्रया । वंशो मृगस्य विज्ञेयो निम्नतल्पनिभप्रभः । स्थूलास्थि विषमं निम्नं पुच्छमध्यञ्च रत्निकम् । आसनेन समं चैव मृगस्य पश्चिमासनम् । पञ्चाङ्गुलस्तु विज्ञेयः पेचकोगुदसंवृतः । कचाप्यन्वितसमाकीर्णः स्थूलोऽल्पस्तु बालधिः । अपरापादपार्ष्णिभ्यां हस्तमात्रसमुच्छ्रयः । दीर्घतनुहस्तकोशश्चतुरस्त्रयङ्गुलायतः । तत्प्रमाणे तथा गात्रे चिपिटे चापि निष्प्रभे । चरणाश्च गतच्छायैस्तन्तुस्निग्धाङ्गुलैर्नखैः । संयुक्ताःस्फुटिता भिन्ना मानेनाष्टादशाङ्गुलाः । एतदुद्देशमात्रेण कथितं मृगलक्षणम् ।

अतःपरं प्रवक्ष्यामि तेषां बलपरीक्षणम् । गजा न बलहीनेन सुरूपेणापि शोभनाः गुणेष्वपि बलं श्रेष्ठं तत् परीक्षेत पण्डितः । शरीरान्तर्गतः प्राणो बलशब्देन कीर्त्त्यते । क्रियते वारणस्याथ तस्योपायैः परीक्षणम् । जाम्बूनदस्य ताम्रस्य पलानां रजतस्य वा । अष्टादशसहस्राणि युक्त्या संगृह्य वेगवान् । दशयोजनमध्वानं गच्छति श्रमवर्जितः । यो गजो गजमध्ये तु स उत्तमबलः स्मृतः । यश्चतुर्दशसाहस्रभारमादाय गच्छति । सप्तयोजनमध्वानं स मध्यमबलो मतः । दशसाहस्रिकं भारं गृहीत्वा पञ्चयोजनम् । अध्वानं योहि संयाति स हीनबल उच्यते । सन्निभागद्विहस्तेन परिणाहेन संयुतम् । चतुर्हस्तनिखातं तु योभिनत्युत्तमोहि सः । अथ वोत्पाटयेद्वापि बलेन महता युतः । सार्द्धत्रिहस्तखातन्तु सप्तहस्तोच्छ्रितं तथा । पञ्चाशदङ्गुलीनेन परिणाहेन संयुतम् । भिनत्ति योगजः शीघ्रं क्षिपत्युद्धृत्य वा पुनः । स गजानान्तु सर्वेषां मध्ये मध्यबलो मतः । हस्तत्रयनिखातन्तु षड्हस्तोच्छ्रयमेव वा । युक्तं स्थूलतया चैव पूर्वसंख्यार्द्धमात्रया । भिनत्ति हेलया यस्तु उत्खातं वा करोति वा । स्तम्भं कुञ्जरमध्ये तु स हीनबल उच्यते । गुरुत्वं च यतः श्रेष्ठं गुरुत्वादधिकं बलम् । बलादप्यधिकं सत्वं तस्मात्सत्वं निरूपयेत् । शुद्धस्फटिकसङ्काशं सत्वं स्फुटि शरीरिणाम् । दुर्लक्ष्यं विद्यते सम्यगुपायैस्तद्धि लक्षयेत् । सुप्रशस्ते दिने लग्ने गजोगैरिकमण्डितः । कक्ष्यैश्चामरशङ्खादिसज्जाभरणभूषितः । पादान्दोलनसंजातघण्टारवनिभस्वनः । आरोहककरास्फालकृतोत्साहोन्नतानन: । अत्यन्तं ढौकयेच्छीघ्रं पार्श्वकोलाहलाकुलः । वेगोत्थानकृतास्फोटदन्तसंघट्टमर्दनैः । कृतां वाणैरपि न हस्तस्य वेदनां यो न मन्यते । यो हि मर्दैःकृतास्फालैः स्वकटं भर्त्तुमिच्छति । नापसर्पति भीत्यानोप्रतियातं रणात् क्वचित् । कण्ठगर्जितनादेन परिपूरितदिङ्मुखः । निवर्त्त्यते च दुःखेन स भवेत् सत्त्ववान् गजः । प्रत्यग्रसमूहं वा गजमालातिभीषणम् । रागोत्थानध्वमुद्धृतगम्भीरकलकलाकुलम् । उत्थाय समरे गच्छेद्रोपरञ्जितलोचनः । दन्तदारणरागेण प्रतिनागकृतेक्षणः । प्रसारितैरतिस्तब्धैर्निःशङ्कं कर्णपल्लवैः । यो गच्छत्यतिवेगेन स भवेत् सत्त्ववान्-

गजः । शार्दूलाकृतिसत्त्वाभी-त्रासवर्जितमानसः। कनकं च तथा नागं योऽभिनन्त्युत्तमो हि सः । दावानलशिखिश्रेणीशब्दसंत्रासवर्जितः । वनेषु विचरत्येव स सत्त्वसहितो गजः । कृतशङ्कावशाद्यस्तु न वारीं हि प्रणीयते । सङ्कुचन् मस्तकं दीनो मन्दान्मन्दतरो भवेत् । आलोकयति पार्श्वानि चीत्कारकरणप्रियः । आलोकयति शोभाभ्यां लोचनाभ्यामतिद्विपम् । पदात्यश्वसमूहं वा ज्वलन्तमिव मन्यते । अधमस्तु सुविज्ञेयो गज सः श्रमवर्जितः। यस्तु संघटते मन्दं चटितश्चापसर्पति । तथापसर्प्य वेगेन दन्ताघातं प्रयोजयेत् । किञ्चित्तिर्य्यङ्मुखोभूत्वा कृतचीत्कारनिस्वनः । कुरुते दन्तसंघातम् स विज्ञेयोऽधमोगजः" ।

प्रथमादिपञ्चदशासु मदविकारभेदमुक्त्वाह तत्रैव ।

"तटतरुभवनोन्मूलनरतस्तु पञ्चाङ्कजो भवति । करवदनाक्षिकटस्थल गलन्मदसलिलसिक्तभूमितलः । संग्रामे रिपुभरकरविमुक्तशरनिकरशल्यसहः । करवीरपुष्पलोहितलोचनः स चारुदारुणाकारः । प्रतिनागसंघदारणप्रकृतिरंगलस्तु सप्तम्याम् । न शृणोति नैव पश्यति च न भयञ्जानाति सर्वसत्त्वकृतम् । यस्य घनास्फालितं मुखरितं चाननं पतति कारयन् । न सहन्ते तस्य गन्धं सङ्कोचितगात्रकुञ्जकरकटाः करिणः । मर्द्दितनिजबला विमुक्तनादाः प्रणश्यन्ति । न तथा शङ्खाभरणैर्न चामरैर्नीलमालाभिः । भवति यथा मदसारैर्मुखस्य शोभा गजेन्द्राणाम् । क्रमविरहिता भवति हि षष्ठी या पञ्चमी चतुर्थी वा । दीनावस्था करिणां सत्त्वयतां मदविशेषेण । अतिदृढमदविकारे त्यजन्ति शिशुमदेऽपि मातङ्गाः । सत्त्वातिरेकयुक्ताबलस्य शोभां परां प्राप्ताः" । स्थलभेदे न मदोद्गमफलं तत्रैवाह ।'कुरुते नरपतितुष्टिं दक्षिणगण्डस्थलोद्गतन्दानम् । रोमोद्गतं च यातुर्विशेषसुखदं सदा भवति । उभयकटस्थलसमभिर्गतं च विषयस्य वृद्धिकरम् । शिशिरसुगन्धिपरिमलं सुखप्रदं जायते भर्त्तुः । माङ्गल्यं भोजननं सौभाग्यकरं सत्त्वजननं च । माद्यन्ति यत्र देशे दशाविपाकेन बलकृतानन्दाः । करिणस्तस्मिन् राजा वर्द्धितवंशः सुखं वसति । कनकबकुलैलापरिमलश्च सुखदोमदो भवति । मूत्रपुरीषस्वेदास्तकफरसोमादितीव्रगन्धधरः । अशुभकरोऽसौ नरपतियातृणाञ्जायते मदः । जायन्ते ये भावा राजन् ! मदखण्डमण्डितमुखस्य । नागस्य मदविशेषास्तांस्तान् प्रवक्ष्यामि । चालयति दुर्गन्धमिवाघ्राय पुष्करं क्षिपति प्रेरयति । लेढिजिह्वाग्रेण सृक्कणी विघटितोष्ठपुटः । संपीड्य पुष्कराग्रेण चाङ्गुलिं निःश्वसन्नाधोवदनः । तिर्यक्प्रेक्षी भवति मीलिताक्षः क्षणं स्थित्वा। तिर्यक् चालितवदनमङ्गुल्या पुष्करप्रकम्पेन । किञ्चित्समुन्नताक्षः कर्णकण्डूयनं कुरुते । किञ्चिच्च दर्शयित्वा मेढ्रं नाशयति कोपकम्पनम् । हृष्टः क्रीडति परिवर्त्तितानगो बन्धनस्तम्भं कृतमत्सरः । प्रधावति संवेष्ट्य करं विषाणमुद्यम्य गर्जति सलिलपूरितजलधरगम्भीरनादेन । उन्नामितायहस्तः स्वच्छन्दकृष्टतिकापि । गुरुमक्षिकश्च भवति वनतरुगहनोन्मूलनानुरतः। वागङ्कुशमुखजातं बाधनं न सहते ह्यभिन्नसत्त्वोयः । तिर्य्यग्विकलत्वाच्च तथा सगजो गुरुमक्षिकोऽशेयः । रमते च पांशुविकरणकर्दमावगाहाद्यैः । एवंविधस्वभावो मदभेदवशाद्गजो भवति । यो यस्मिन्नेव ऋतौ गृह्णाति मदमतङ्गजः सुखदम् । स च तस्मिन्नेव पुनः प्रभिद्यते दानयुक्तश्च । इति मदवृद्धिविशेषाः कथितास्तव भूतलेश ! तत्त्वेन । परिवर्त्तते मदोयैर्हेतुभिरशुभैस्तान्वक्ष्ये । प्रतिवारणाभियानाद्दूराध्वगमनात्क्षुभोजनाच्चापि । बन्धनदोषाच्च तथा तृष्णाक्षुत्पीड़नाच्चापि । शार्दूलादिव्याघ्राद्दावानलोल्काशनिप्रपतनाच्च । (अशनिः वज्र विद्युत्)। नश्यति मदोगजानां शीघ्रं वर्ष्मविभ्रतश्च तथा । मातापितृजैर्दोषैर्मन्दमदानन्दवर्जिताश्च तथा । जायन्ते द्विरदा यैर्यथा तथा साम्प्रतं वक्ष्यामि । मन्दमदेन हि करिणा जातः किञ्चिन्मदोगजो भवति । मदविरहितेन तथा जनितोमदविवर्जितोऽप्येव । समदेन तु यो जातो गजो गजेन्द्रेण भवति तस्य मदः । एवं मदप्रकारा मातङ्गानां समुद्दिष्टाः । शृणु साम्प्रतं नरेश्वर ! मदापसरणोद्भवानि चिह्नानि । यानि भवन्ति गजानां मन्दमृदुमदविगलितसमुद्यानाम् । रूक्षच्छायायुक्तोनिश्शोषितगण्डस्थलगतश्रीः। कुप्यति येभ्यः शङ्काङ्करोति तेभ्योऽपि सत्त्वस्थः। गण्डस्थलेन जिघ्रति करेणुकां स्पृशति नैव हस्तेन । मूत्रपुरीषाणि च नो जिघ्रति वारणकृतानि यातुर्वा धर्मैर्गच्छति। सततं परिमृष्टदानराजिपरीकीर्णकटोष्ठेनातीव सङ्कर्षणं कुरुते । मुहुरभिनन्दति निद्रामलसो मनसा न तुष्टिमुपयाति । लिङ्गान्येतानि करिणो मदेन मुच्यमानस्य जायन्ते । प्रतिकुञ्जरयुद्धकृतो बलहर्षदशावयोभ्यस्त्वशुभः । भवति मदोनागानां तापादिसमुद्भवश्च शुभः"। "रूपवान्मदसम्पन्नोविन्ध्यशैलसमप्रभः। जायते सत्त्वहीनस्तु कुञ्जरः केन हेतुना। केन वा रूपहीनोऽपि मदोच्छ्रयविवर्जितः। सत्त्ववान्

जायते नागो एतदाख्यातुमर्हसि" इति नकुलपृष्टो बृहस्पतिरुवाच । "यथा जातकयोगेन जन्तूनां च शुभाशुभम् । तथा बन्धनकालोत्थकुञ्जानामपि जायते । सुलग्नावस्थितैः सौम्यपक्षैः पीड़ाविवर्जितैः । बन्धनं यस्य जायेत स भवेत् सत्ववान् गजः । क्षीणचन्द्रेषु गृह्यन्ते ये गजाः क्रूरदृष्टिभिः । ये चालोकितनक्षत्रास्ते भवन्ति भयाकुलाः" । उक्तञ्च शम्भुना "मृगजातयोऽपि हि क्रूरा भवन्ति मधुपिङ्गललोचनाः स्निग्धाः । वृषसिंहमीनवृश्चिकलग्नेषु स्वीकृताः करिणः" । पुनर्नकुलप्रश्ने गुरोः प्रत्युक्तिस्तत्रैव । "राजन् पञ्चविधं चैव गजानां विदितं मतम् । अत्यर्थं प्रथमं ज्ञेयं प्रत्यर्थं च तथापरम् । अन्वर्थं चैव गम्भीरमुत्तानं पञ्चमं भवेत् । प्रतोदाङ्कुशदण्डाद्यैर्विद्यादुद्वेजितानि यः । तीव्रसङ्कुचितस्पृष्टः स स्यादत्यर्थवेदिता । स्तोकं बहु बहु स्तोकं क्षतं मन्येत यो गजः । वागङ्कुशादिभिर्नित्यं स हि प्रत्यर्थवेदिता । जानात्यङ्कुशतोत्राद्यैर्यथा तत्तथैव हि । शतङ्कायभयैस्त्यक्तोऽन्वर्थज्ञः स गजो भवेत् । अङ्कुशादिव्रणान् राजन् ! यश्चिरेणावगच्छति । तीव्रानपि स गम्भीरवेदी भवति वारणः । रोमणामपि तृणेनापि स्पृष्टं वेत्ति तु यो गजः । उत्तानवेदिनं तन्तु गजं विद्धि महाभुज ! सर्वाणि वेदितव्यानि भद्रादीनां भवन्ति वै । प्रकृतिस्थस्य सततं भद्रस्यान्वर्थवेदिता । गम्भीरवेदिता चापि मन्दस्यैव प्रकीर्त्तिता । उत्तानवेदिता नित्यं मृगस्यैव भवेन्नृप ! । वेदित्वं गजजातीनां तिसृणामपि जायते । साम्प्रतञ्च यथाशास्त्रं कथ्यते वेगलक्षणम् । तिसृणामपि जातीना मुत्तमाधममध्यमम् । न चाल्पं न च दृढं द्विपञ्चपदसंस्थितम् । गजोत्थानसहोत्थानं नरं प्राप्नोति येन तु । रयाविष्टेन मनसा स वेग उत्तमो मतः । (द्विपञ्चपदसंस्थितं दशपदस्थितं गजोत्थानसहोत्थानं गजधावनसमसमयधाविनम् ) येन वेगेन गृह्णाति नरं सप्तपदान्तरम् । पदानां शतमात्रन्तु स मध्यमजवो भवेत् । येन पञ्चपदस्थं हि नरं गृह्णाति नोदितः । पदानान्तु शतं सार्द्धं स हीनोजव उच्यते । शतद्वयं वा धनुषां गच्छेदुन्नमिताननः । द्वात्रिंशता च मात्राभिः स उत्तमजवो भवेत् । पञ्चाशता च मात्राभिः याबाद्यस्तु शतद्वयम् । स मध्यमोऽधमो ज्ञेयो मात्राणाञ्च शतद्वयात् । एवं परीक्ष्यते राजन् ! वेगो वीथिषु दन्तिनाम् । अतःपरं प्रवक्ष्यामि गजस्य गुणलक्षणम्" ।

तत्र कल्याणशीलः "भाराहितोवा क्षुधितः क्षीणः श्रान्तो बुभुक्षितः । रात्रौ वा दिवसे वापि निर्विकारस्तु यो भवेत् । कल्याणशीलः स ज्ञेयो समस्तगजलक्षणैः । विकारं कुरुते यस्तु पीड्यमानः क्षुधादिभिः । तमकल्याणिनं राजन् गजेन्द्रं प्रकल्पयेत् । कोपोऽपि द्विविधो ज्ञेयः शिशुश्चैवाशिशुस्तथा । द्विविधस्यापि राजेन्द्र ! यथावच्छृणु लक्षणम् । उद्वेजितोऽपि कालेन कोपं बध्नाति निर्भरम् । क्षिप्रं गृह्णाति च क्रोधं दुर्निवारं मुहुः सहम् । शिशुक्रोधः स विज्ञेयो गजलक्षणकोविदैः । वार्य्यमाणोऽपि यत्नेन न शमं याति मुह्यति । स ज्ञेयस्त्वशिशुक्रोधो राजन् ! स हि रणप्रियः । साम्प्रतं चैव वक्ष्येऽहमायुर्लक्षणमुत्तमम् । आभ्यन्तरं च बाह्यञ्च लक्षणं द्विविधं स्मृतम् । आभ्यन्तरं योगसाध्यं बाह्यं किञ्चिच्च लक्ष्यते । तेनान्तरं परित्यज्य बाह्यं लक्षणमुत्तमम् । क्षेत्रसत्वसमायोगा । भवन्ति द्वादशैव हि । एकं हस्तगतं क्षेत्रं द्वितीयं वदनाश्रितम् । तृतीयञ्च विषाणस्थञ्चतुर्थं शिरसि स्थितम् । पञ्चमं नयनस्थं च षष्ठं कर्णाश्रितं भवेत् । कण्ठस्थं सप्तमञ्चैव अष्टमङ्गात्रसंस्थितम् । नवमं चरणे ज्ञेयं शेषाङ्गस्थं द्विपञ्चमम् । एकादशञ्च कान्तिस्थं द्वादशं सत्वसंस्थितम् । एवं द्वादश क्षेत्राणि मातङ्गानां भवन्ति हि । द्वादशैव दशा ज्ञेयाः शेषाङ्गेष्वभिलक्षिताः । त्रिंशोत्तरं वर्षशतम्भद्रस्यायुः प्रकीर्त्तितम् । अष्टाभ्यशीतिर्मन्दस्य चत्वारिंशत् मृगस्य च । मिश्रस्य चायुषः संख्या जातिभावेन जायते । प्रदेशस्थानतस्तज्ज्ञोजातिं समुपलक्षयेत् । सर्व्वक्षेत्रैः सुसंपूर्णैः संपूर्णायुर्गजो भवेत् । हीनैश्च हीयते चायुर्यथावदभिधीयते । दशाब्दानां क्षयं कुर्य्याद्धस्तलक्षणवर्जितः । विंशत्यब्दविनाशश्च हीने क्षेत्रद्वये भवेत् । क्षेत्रत्रयावहीने च त्रिंशदब्दपरिक्षयः । चत्वारिंशत्समाहानिर्हीने क्षेत्रचतुष्टये । (समा संवत्सरः) । पञ्चाशदब्दाहीयन्ते हीने तु क्षेत्रपञ्चके । षट्क्षेत्रहीनतायान्तु षष्टिवर्षविनाशनम् । सप्तत्यब्दविनाशाय सप्तक्षेत्रविहीनता ॥ अशीतिरष्टभिर्हीने वर्षाणाञ्च विनश्यति । नवतिर्नवभिर्हीनैः क्षेत्रैर्नाशं हि प्रयाति । दशभिश्च तथा हीनैर्नश्यत्यब्दशतं ध्रुवम् । दशोत्तरं चाब्दशतं हीना छाया विनाशयेत् । विंशोत्तरं चाब्दशतं हीने सत्वे विनश्यति । एवं दशाब्दनाशं च क्षेत्रं कुर्यादलक्षणम् । एवमायुःक्षयं विद्यात् गजस्य गजकोविदः । सामान्यलक्षणं ह्येतत् जीवितस्य परीक्षणे । विशेषलक्षणं यावद् षड्लक्षणजातितः । एवमुद्देशमात्रेण गजायुर्लक्षणं तव । कथितं साम्प्रतं राजन् ! दोषञ्च विविधं लक्षणम् । पादानां लक्षणं सम्यक् दन्तदोषं प्रथा-

-येत् । दन्तयोर्लक्षणं हन्ति दोषान् वाहित्थसंश्रितान् । वाहित्थलक्षणैः सम्यक् नेत्रदोषक्षयो भवेत् । नेत्रयोर्लक्षणं हन्ति दोषांस्तालुसमाश्रितान् । सृक्कदोषविनाशश्च क्रियते तालुलक्षणैः । सृक्काणां लक्षणं कुर्य्यात्सगद्दोषनाशनम् । कपोलकटदोषघ्नाः सगदस्याशुगुणा नृप ! । निर्य्याणानकुम्भाभान्दोषघ्नः करयोर्गुणः । कुम्भदोषविनाशाय तयोरेव गुणो भवेत् । कर्णदोषविनाशस्तु क्रियते कुम्भलक्षणैः । कण्ठदोषविनाशाय कर्णलक्षणमेव हि । आसनस्य हि ये दोषास्तान् हरेत्कर्णजोगुणः । स्कंधदोषक्षयकर आसनस्य गुणो भवेत् । गुणाघ्नन्ति हि वंशस्य दोषान् तत्स्थलसंश्रितान् । पश्चिमासनदोषघ्नं लक्षणं तत्स्थलाश्रितम् । कुक्षिपेचकदोषघ्नं पश्चिमासनलक्षणम् । गुणाः पेचककुक्षिस्थाः पुच्छदोषविनाशनाः । मेढ्रदोषक्षयं कुर्य्यात् पुच्छलक्षणमेव हि । मेहनस्य गुणा हन्ति दोषांश्चापराश्रितान् । अण्डकोषगतं दोषमपरालक्षणं हरेत् । नाभिदोषक्षयं कुर्य्यादण्डकोषस्य लक्षणम् । नाभेर्गुणैश्च हन्यन्ते दोषास्तनसमाश्रिताः । उरोमणिगतान् दोषान् नाशयेत् स्तनलक्षणम् । चिबुकस्य हरेद्दोषान् उरोमणिगतोगुणः । यथा दोषक्षयो राजन् ! लक्षणैः क्रियते शुभैः । दोषातिरेकोऽपि तथा प्रदेशगुणनाशकः । प्रदेशोऽनन्तरस्यैव प्रदेशस्य गुणान्वितः । कुरुते दोषनाशं हि स दोषोगुणनाशनः । करकुम्भविषाणाक्षिकर्णलक्षणसंयुतः । सर्व्वैरेवाशुभैरन्यैर्लक्षणैश्चाशुभोगजः । मूलं चन्द्रांशुशुभ्रं स्यादग्रं च ज्वलनप्रभम् । वर्त्तं काञ्चनसङ्काशङ्कालदन्तः सुपिङ्गलः । एतेषां च समायोगाद्दन्तानां मधुपिङ्गता । यतो गजविषाणानामतो मधुनिभाः शुभाः । भद्रजातेर्गजस्यैतन्मन्दस्य च मृगस्य च । घृतपीयूषकुन्देन्दुश्वेतकोच्छविपञ्चकम् । एवं जातित्रयस्यापि सामान्यं शोभनं मतम् । कपोतधूम्रभस्मास्थिसर्पच्छत्रकसन्निभाः दन्तयोस्त्वशुभा राजन् ! छाया पञ्चविधा अपि । अध्यर्द्धारत्निकं राजन् प्रमाणं दन्तयोः शुभम् ।

अत ऊर्द्ध्वं प्रवक्ष्यामि गजानां वर्णलक्षणम् । आहारस्य विशेषेण वातपित्तकफैस्तथा । देशलग्नगुणैश्चैव बीजयोनिवशेन । ग्रहालोकनलग्नराशिवशेन च । पूर्व्वकर्म्मवशाच्चापि धातूनाञ्च विपर्य्ययात् । भवन्ति कारणैरेभिर्वर्णा नानाविधा नृप ! । दिव्यसत्त्वाः शुभैर्भेदैर्विविधास्ते भवन्ति हि । सिन्दूरगन्धर्पवैदूर्य्यविद्युज्जाम्बूनदप्रभाः । इन्द्रनीलसमानाभा भवन्ति शुभकान्तयः । अतिश्वेताश्च रक्ताश्च शुकबर्हिणसप्रभाः । एते देवगजाः सर्व्वे भूतले न भवन्ति हि । अतिश्वेताश्च रक्ताश्च शुकबर्हिणसप्रभाः । दैवयोगाद्वने प्राच्ये कश्चिदेव भवन्ति हि । चन्द्रनीयश्च पूज्योऽसौ नासौ प्राप्यो नराधिपैः । म्लेच्छाराङ्गारभस्मास्थिपङ्कमाञ्जिष्ठसन्निभाः । म्लानपुष्पसवर्णाश्च गजास्त्वेतेऽतिनिन्दिताः । एवं वर्णविशेषास्तु कथितास्तव सुव्रत ! । गजमेकादशगुणं यथाक्रमाणं निबोध मे । मधुसन्निभदन्तश्च श्यामोमधुनिभेक्षणः । उदरेपाण्डुवर्णश्च वक्त्रे च कमलप्रभः । द्विरेफसमवालश्च कुन्देन्दुसदृशैर्नखैः । स्थूलतारोमयुक्तश्च शेषेष्वङ्गेषु पीतकः । विचित्रञ्च मुखं यस्य रक्तैःश्वेतैश्च विन्दुभिः । स नागोगजयूथानां मध्ये राजाऽत्र जायते । तं प्राप्य नृपतिर्भुङ्क्ते सागरान्तं महीतलम् । नीलसवर्णसंस्थानः स गजोयूथनायकः । मुखे मदे च हस्ते च कर्णोदरशिरस्सु यः । केशैः शुभैश्च वलिभिर्विन्दुभिः परिमण्डलैः । सवर्णोयो भवेद्दन्ती कैलासः सोऽभिधीयते । अतःपरं प्रवक्ष्यामि निःश्वासस्य तु लक्षणम् । निःश्वासोद्विविधोज्ञेयः शुभश्चैवाशुभस्तथा । शुभः सुरभिगन्धः स्यात् पूतिगन्धोऽशुभोमतः । विशेषेण तयोश्चैव लक्षणं भूप ! कीर्त्त्यते । ह्रस्वता दीर्घता चैव समता च सुगन्धिता । सौकुमार्य्यं मृदुत्वं च निश्वासस्य तु षड्गुणाः । स्थूलता सूक्ष्मता चैव दुर्गन्धत्वं तथोष्णता । पारुष्यं विषमत्वञ्च दोषाश्चापि भवन्ति षट् । दशारत्निप्रमाणं च रेणुकं पित्तलक्षणम् । यो निश्वसिति दीर्घं च स दीर्घायुर्गजो मतः । अतःपरं प्रवक्ष्यामि गजालोकितलक्षणम् । स्निग्धं स्थिरं च सौम्यं च वारिजोत्फुल्लतारकम् । सलज्जं प्रतिभागं तु प्रेक्षितं शुभकारणम् । उद्विग्नस्रस्तरुक्षं दीनमविकाशिततारकम् । ऊर्द्ध्वाधः पार्श्वं दृष्टञ्च निर्लज्जं निन्दितं भवेत् । कचानां साम्प्रतं भेदान् यथाक्रमाणान्निबोध मे । नेत्रयोः पुटपार्श्वस्थाः कचाः शुभफलाः स्मृताः । संख्या तस्यैव मानन्तु रोम्णां चैव प्रकीर्त्तितम् । देहच्छायासवर्णत्वं मृदुत्वं च तथा परम् । घनाविरलत्वं घनता नम्रा च स्फुटितास्यता । अंशुमत्ता च सूक्ष्मत्वं रोम्णां सप्त गुणाः स्मृताः । दोषाश्च सप्तसंख्याः स्युर्गुणानां च विपर्य्ययात् । शुभानि शुभकर्त्तॄणि दुःखदान्यशुभानि च । अतःपरं प्रवक्ष्यामि लक्षणं पुष्करसंश्रयम् । बाह्यान्तराणि ह्रस्वाणि दीर्घाण्यायतनानि च । मृदूनि पिङ्गवर्णानि पक्ष्माणि करिणः सदा । स्निग्धच्छायानि तन्वानि समानि च दृढानि च । अवनानि सच्छिद्राणि पक्ष्माण्यतिशुभानि च । गजानां स्वामिनः

सौख्यं कुर्व्वन्ति रमणीयताम् । दन्ताः स्निग्धाः प्रलम्बाश्च मुदन्ताश्च चन्द्रप्रभाः । तालवृन्तसमाकारा बाला भर्त्तुर्जयप्रदाः । पुनःपुष्पसमा रूक्षाः कपिलाः स्फुटितास्तथा । वक्रत्वातिशयोपेताः सुदन्तास्वतिनिन्दिताः । भर्त्तुरारोहिणजानान्तु नित्योद्वेगकरास्तु ते । अतःपरं प्रवक्ष्यामि केशानामपि लक्षणम् । अभिन्ना ऋजवः स्निग्धा घना मधुकरप्रभाः । केशा वारणनाथस्य क्षेमवृद्धिकरा मताः । रूक्षास्तु निष्ठुराः पिङ्गाः स्फुटिताश्च जुगुप्सिताः । कुर्व्वन्ति दन्तिनां नित्यं स्वस्य नाथस्य चाशुभम् । पक्ष्मनासकेशरोमणां लक्षणं कथितं मया । फणिमार्जारमण्डूकशृगालैश्च समप्रभम् । वानरस्य समं चैव मुखं नागस्य निन्दितम् । स्निग्धान्यापूर्णगण्डानि गिरिकूटनिभानि च । आपूर्णमेघरूपाणि पूजितानि मुखानि च । मदहीनं क्रशं मुखं बाहिरयनिःप्रभं तथा । वराहलोचनाक्रान्तमदृष्टचिबुकं तथा । ललाटतटपर्य्यन्तगर्त्तासततिभिरन्वितम् । सगदं हीनतायुक्तं मुखं नागस्य निन्दितम् । मुखस्य लक्षणं सम्यक् कथितं तव सुव्रत ! । अतःपरं प्रवक्ष्यामि मातङ्गगतिलक्षणम् । समा च लघुपादा च वेगेऽप्यतिशुभा मता । दीर्घक्रमा सुखोत्क्षिप्ता गात्रसंवरहारिणी । शुभलक्षणसंयुक्ता पुरुषस्य वकस्य च । मातङ्गवृषसिंहानां गतिस्तुल्या शुभा मता । क्रोशचालितगात्रा या विषमा सुलघुक्रमा । वेगेऽपि मन्दसञ्चाराविशेषान्दोलितासमा । मृगस्य शशकस्य जम्बूकस्य खरस्य च । गमनेन समा या, सा शुभा नो दन्तिनाकृतिः । कथितं तव राजेन्द्र ! गजानां गतिलक्षणम् । स्थितानाञ्च यथायोगं साम्प्रतं लक्षणं शृणु । पञ्चस्थितसप्तस्थित नवस्थित द्वादशस्थिताश्चैव । पुण्यवतां जायन्ते राज्ञां गिरिसन्निभाः करिणः । लक्षणसहितैः स्निग्धैः करकरविषाणकर्णनयनैश्च । संयुक्तो भवति गजो भद्रः पञ्चस्थितो नागः । (भद्रः भद्रः) परिणाहायामोच्छ्रयबलविक्रमधैर्य्यकान्तिसम्पन्नः । भर्त्तुः प्रतापजननो ज्ञेयः सप्तस्थितो हस्ती । उत्साहवेगशाहसमदसत्वगुरुत्वदक्षतायुक्तः । करदन्तकर्मसु कुशलो नवस्थितः करी भवति । बुद्धिर्मेधा सत्वं यतःकुम्भौ तथाऽक्षिणी हृदयम् । रोमाणि चत्वारि पादाः तथासनं पृष्ठवंशश्च । द्वादश चैतानि सदा स्थितानि दृश्यन्ते यस्य नागस्य । स द्वादशस्थितोऽयं भवति गजः सर्व्वसौख्यकरः । सञ्चारस्थितभेदाः कथिता गुणसंश्रया गजेन्द्राणाम् । दिव्यादिकसत्वानां लक्षणमिह साम्प्रतं वक्ष्ये । निहतद्विपदचतुष्पदकुणपान् स्पृशति च न यो जिघ्रति । न च जिघ्रति मूत्रादीन् स वारणो दिव्यसत्वस्तु । दत्तञ्च योऽत्ति मांससत्वानां सर्वं तु लोभेन । जिघ्रति मूत्रपुरीषाणि पिशाचसत्वः स विज्ञेयः । एवं सत्वपरीक्षा क्रियते नरनाथ ! वारणेन्द्राणाम् । स्वरलक्षणमिदानीमशुभं शुभञ्च वक्ष्यामि । स्थानान्यष्टौ नृपते ! भवन्ति शब्दस्य वारणेन्द्राणाम् । ताल्वोष्ठशिरउरःकरजिह्वामूलं गलकपोलौ च । गम्भीरसौम्यहृष्टास्तथाप्रमोदितास्तथा स्निग्धाः । नादाः शुभा नराधिप ! षडेव कथिता गजेन्द्राणाम् । चत्वारस्त्वशुभा रौद्रभयशोकसङ्क्षोभोत्पन्नाः । एवं शुभाशुभाश्च दशप्रकाराः स्वरा ज्ञेयाः । अन्येऽपि गलवक्त्रनासिकास्फालनोद्भवा बहवः । शब्दा भवन्ति करिणां शुभाशुभं न तैर्भवति । निम्नोचितचिबुकायितविरचितकूजितस्वरोष्णनादनिभाः । वायसजम्बूककपिकाष्ठभङ्गसदृशारवास्त्वशुभाः । ज्ञेयानि शुभानि सदा मृदङ्गजीमूतदुन्दुभिनिभानि । पातायितगर्जितहसितानि बृंहितानि नागानाम् । पातायितञ्च ताल्वोष्ठसम्भवं गर्जितकं चैव । जिह्वासमुद्भवं च फेनायितमित्यभिख्यातम् । हसितं कपोलजनित पुष्करविवरोद्भवञ्च नागानाम् । भवति धनधान्यवाहनभूलाभकरं नरेन्द्रस्य । हस्तेन मृदङ्गरवं तु कर्णाभ्यां दुन्दुभिस्वनञ्चैव । दर्दुररवं तु मेचकेन करोति योऽसौ जयकरः । सर्वस्थानसमुत्था शब्दा नरनाथ ! वारणेन्द्राणाम् । आचार्य्यैः सर्वैर्बृंहितसंज्ञाश्च रवाः शुभा ज्ञेयाः । एते च जयपराजयकथनसमर्था भवन्ति भूपानाम् । गर्हितशुभप्रदेशस्थानाङ्कपरिवर्ज्जिता नादाः । शुष्कतृणकाष्ठकण्टकवल्मीकास्थिश्मशानदुष्टाश्च । पाषाणाङ्गारादिषु भूमिषु यदि संस्थिताः करिणः । बृंहन्ति हीनलक्षणमेतद्भर्त्तुस्तदाऽसुखं भवति । प्रभूतमृदङ्गरवं तु यदि बृंहन्त्यानन्दपूरिताः करिणः । प्रस्थानं भवति तदा नराधिपस्य विजयस्तदा राजन् । ! सभामध्ये च यदा बृंहन्ति शार्दूलवत् गजा हृष्टाः । भवति ससैन्यस्य तदा विजयः संख्ये नरेन्द्रस्य । (संख्यं संग्रामः) कलहंसनादमधुरं किञ्चिदिगोत्क्षिप्तपुष्करस्तु यदा । बृंहति सदा च हस्ती तदापि जयो भवेद्भर्त्तुः । सुखविवरकपोलगतं बृंहत्यसकृत् गजो यदा हृष्टः । मधुरकूजहसितञ्च जयप्रदं भवति भूपानाम् । त्रीन् वारान् क्रौञ्चरवं हंसरवं बृंहितं यदा कुरुते । एतदपि नागहसितञ्जयप्रदम्भवति भूपानाम् । गर्जति घनवत् सततं यदि वारणः प्रहृष्टमनाः सुखरन्ध्रनिविष्टकरस्तदाऽरिविजयो भवेद्भर्त्तुः । घनरव

स्फीतघनविमं सघोत्कारं बृंहितं यदा कुरुते । भवति तदा वारणनाथस्य भवति शत्रुनाशः खल्वेव । कथितान्येतानि मया शुभानि गजबृंहितानि नरनाथ । अशुभानि च नागानामतःपरं प्रवक्ष्यामि । मन्दाचालितनयनोवराह घुरितनिःस्वनं कुरुते । तत्प्रतिबलस्य नूनम् तदा जयो भवति । भूपाल ! वेष्टितभूतलहस्तो नदति यदा धर्मप्रकम्पनाद्वमम् । नरपतिराष्ट्रविनाशो भवति तदा शत्रुसैन्यकृतः। मदरहितक्षरतरघट्टं निःस्वनं यदि करी कुरुते । जनयति विजयविनाशात् पुरराष्ट्रपीडनं च तदा । बलिभुग्निस्वनसदृशं यदि वा समुत्फाल्य च हस्तम् । वामान्दोलितचरणोयदा करी बृंहति सनिःश्वासम् । आलानगतः कुरुते तदा बधोयाताचैरिभिःपार्थैः। एवं प्रकृतिस्थायदि मतङ्गजा बृंहितानि कुर्वन्ति । आत्यन्तिकानि राज्ञां चैव भवन्ति नाम्यानि"। "यदि रिपुगजाभिमुखो निवार्य्यमाणोऽपि याति रभसेन। विंशतिपदानि नागस्तत्रापि जयोभवत्येव । क्षमदोत्कटाति मदं दुर्गन्धमदस्य सुरभिमदम् । दुष्टगजानां प्रथमन्तु लक्षणमेवं सकलम् । ह्रस्वतनुर्महावदनो हि महाशिरालम्बकर्णयुगलश्च । नातिस्थूलोऽसितवर्त्म लम्बानि च गात्र वदनरोमाणि । व्यालः स भवति हस्ती दुष्टात्मा दुष्टशीलश्च । स्थूलाधिपायुहस्तो दीर्घविषाणोनामितमुखश्रीः । पृथुपादःश्यावनखो यक्रोहनुपुटदण्डेन। विस्तृतकुक्षि श्वोदरश्च कृष्णोवराहनयनश्च । सर्वोषकोलनामा ख्यातोऽयं सर्वदोषकरः । अतिह्रस्वापरगात्रो ह्रस्वमुखः काककृष्णनयनश्च । स्थूलतराधोमुखदन्तदीनमुखलस्फुटित वह्निर्नखपादः । स्थूलनखःस्थूलपुष्करकरश्च वामन संज्ञो गजाधमो दुष्टशीलश्च । विषाणे चातिहठे ह्रस्वे परिमण्डलौ तथा कर्णौ । वदनस्य मांसलं स्यादधोगतस्थूलनयनस्य । समयांसलत्वयुक्तो ह्रस्वो ह्रस्वाङ्गुलिः करो यस्य । नाम्ना च विम्बरूपमुख इति ख्यातो दुष्टमातङ्गः । करकर्णशिरोबालधिविषाणगात्राणि यस्य हीनानि। आदग्धभोऽतिवामनाङ्गः पापात्मा स स्वामिनाशकरः । शयनादुत्थाय बलादुद्धावदि पादौ कर्षति कष्टेण। प्रत्यूषसि गच्छति पुनः क्वापि समुपस्थापितमुखस्य । अभिनतगात्रश्लिष्टेद्विचलति तस्याननं च कर्णाभ्याम् । स ज्ञेयो वातकरः पापात्मा सर्वपापकरः । यस्य च किञ्चाल्पं मेढ्रं ह्रस्वं ह्रस्वाङ्गुलिस्तनुर्हस्ता । अतिनिम्नस्य बाहित्यं कर्णौ च तनुत्वचौ ह्रस्वौ । गात्रापरस्य दीर्घं नखाच अमितान्तराश्च । वर्णाणि च काकाभपक्षरोमाणि च विदग्धानि।

उदरश्चाकृष्णः स्यात् ग्रीवा तन्वायता च वक्रा च । वंशिकनामा मतोऽसौ दुष्टगजोवर्जनीयश्च । यस्य करालौ दशनौ स्थूलौ नात्रान्तरन्तथा ह्रस्वम् । मलिनष्कशुक्लवर्णःकपिञ्जलकलोचनोऽतिविकृततनुः । पापात्मायं हस्ती राज्ञा हेयः प्रयत्नेन । दिवसमपि यत्र तिष्ठति तं देशं दहति यावकप्रख्यः । राज्ञा विन्ध्यावने वा परराष्ट्रे वा स मोक्तव्यः। अतिखरपरिचततनुर्नकुलच्छायकनखैर्दशनैः । यो हस्ती पातारं स पातयित्वा विनाशयति । भस्माभश्च सुखोयः कर्णं कषायस्य कर्कशा हस्ताः। कृष्णाहस्तान्धोऽसौ भर्तुर्विपदेव मातङ्गः। रोमभिरधोमुखनतैः काकाभो दीर्घवक्त्रश्च । शिरःसुस्कर्णयुगलः स राज्ञोहस्ती रूपेण । तिर्य्यक् प्रेक्षणनिरतोदुर्गन्धः काककृष्णवदनश्च । मूत्रपुरीषघ्राणे सतृष्णको भवति चपलाक्षः। कृष्णौ यस्य विषाणौ विषिप्त स्थूलतारके च नेत्रे । तन्वायतं लिङ्गं स्यात् बालधिबालास्तु बहुरूपाः । रक्तौ मेचककोषौ मेढ्रोपरिसंस्थितोदरस्य महत् । चलपक्षकस्तु हस्ती स भवति नाम्ना महादुष्टः । अङ्गं प्रसार्य्य वदनं विधूय चाधोरणं निपातयति । स जवे स्थले च नागो विवर्जनीयः प्रयत्नेन। ह्रस्वकराङ्गुलिबालतनु दशनचाल्पायामगात्रश्च । मतृकुणजातिः स गजः सुदुष्टशीलश्च दृष्टश्च। कालनखो ह्रस्वर्णोर्ध्वमुखो ह्रस्वबालधिश्चैव । बहुपक्षा दुर्गन्धिवर्णविषविभतालुकेहस्तैः । अतिपिङ्गलकर्णचूलोरोमशहस्तो वराहनयनस्य । तनुनखशिरालकृष्णौ नखान्तरैर्दुष्टचरणैश्च । विकृतरोमाश गजोऽसौ स्वाङ्गैः सर्वत्र कर्कशाङ्गाभ्योः । बहुपापकर्मयुक्तो व्यालानामपशोषायम् । हस्वोबाहित्यभागो विषमौ दन्तौ च यस्य नागस्य । धूमाभस्त्र छाया स निन्दितो वर्जनीयश्च । दन्तौ चातिह्रस्वौ स्थूलौ कृष्णौ च मांसलो हस्तः । पिङ्गलं मांसविशुष्क स्थूलतरे तारके यस्य । स्थूलमुखो दुष्टात्मा नासौ सांग्रामिको भवेद्द्विरदः। अति दुष्टकर्मनिरतो भयालुको वर्जनीयश्च । कृष्णा रूक्षा छाया वायसजङ्घा च दृश्यते यस्य । मूतोदनस्य कुरुते निःशङ्कं यः करायेण । निःशेषं मल्लांश करोति यः बहुलनिश्चेषम्। परिहरणीयो राज्ञायाने रणे स महता प्रयत्नेन । अतीवविरलपक्षा ध्यानपरः मल्लकरणनिरतश्च । द्विगुणीकृत्य करायन्तुदात च मूतवन्त नित्यम् । वामेन च विंशति महोत्साहेन कुञ्जितापेच । जर्जरविरूपकर्णः पापात्मा निन्दितो हस्ती । आनाहाशानोऽप्रबलत्वहस्तो महाशिरावलिकः । ह्रस्वाङ्गुलिबालकरो ह्रस्वापरगात्रकश्च ।

एकोऽपि वामनःस्याद्यद्यपि भवेद्गुणप्रियोऽसौ द्विरदः। राज्ञा तथापि लक्षणविवर्जितो वर्जनीयश्च । स्थूलमुखहस्त-कर्णोविहीनजघनाधरल्लनूच्चः । महता मेढ्रेण युतो-नष्टमदः कोषमहांश्च । मन्दालोकननिरतोमहाशिराः पृथुविषाणनयनश्च । हस्तो नपुंसकोऽसौ विवर्जनीयश्च संग्रामे । अल्पायुषो भवन्ति हि सङ्काशजिह्वोष्ठतालुका-नागाः । नरपतिभिस्ते सततं विवर्जनीयाः प्रयत्नेन ! आयामपरिहीनं समनाहोच्छ्रायसुखेन नमितम् । उ-च्छ्रितवक्त्रं कुब्जं विषमकुम्भं कुक्कुरसमानहीनकक्षं च । एवंभूतं तु गजं राजा दूरेण वर्जयेन्मतिमान् । स्वच्छ-न्दाति मन्दबाह्रियंसस्य कुलक्षयो भवति । सप्तमयुक्तोऽपि गजो हानिं मल्लेकविंशतिनखश्च । एकोनविंशतिनखः सप्तद-शनखश्च यो भवति । षोडश पञ्चदश वा नखान् धत्ते युक्तो वा चतुर्दशभिः । एकादशत्रयोदशनवदशभिर्द्वादशनखै-श्चैव । संयुक्तस्त्वशुभकरः सप्ताष्टाभिश्च पापनखैः । द्विर-दाश्चाष्टादशनखाः विंशतिनखयुक्ताश्च शुभाः । कुरुते स्वामिविनाशं द्वाविंशतिनखोयश्च । एकोनविंशतिनखो युवराजविनाशं कुरुते । सप्तदशनखस्तु गजो नरपतिपात्र विनाशने समर्थः । षोडशनखस्मातङ्गोनायकनाशं ध्रुवं कुरुते । पञ्चदशनखश्च योऽसौ सेनापतिनिधनकृद्गजो भव-ति । कुरुते चतुर्दशनखोव्याधिं पुरवासिनां हस्ती । त्रयो-दशनखो राष्ट्रविस्तविनाशङ्करोति भूपस्य। द्वादशनखस्तु कुरुते पदातिवरमक्षयं संख्ये । एकादशनखयुक्तो गजहानिकरो भवेत् स गजः । सुरदाहं च दशनखः करोति हस्ती दुराशोकम् । चतुरङ्गस्य बलस्य ना-शमन्तु नवनखो गजः कुरुते । अष्टनखश्च पुरोहित वंशस्य समूलनकर्थः । सप्तनखः प्रतिहारं नाशयति च षड्नखोऽमात्यम् । पञ्चनखो भक्तिकरं चतुर्नखो द्वार-पालञ्च । त्रिनखोविषयाद्वेपं द्विनखश्चान्तःपुराद्युबन्धञ्च । एकनखोनखराहितोराष्ट्रविनाशं ध्रुवं कुरुते । एवम्भूत-नखाद्ये नरपतिना न ते गजाप्याह्याः । खञ्जमञ्जिष्ठा-भोऽतिलोमशोहीनवर्णकरवालः । हस्ती विवर्जनीयो हीननखः पूतिलोमा च । व्यञ्जनक्षतं शस्त्रक्षतं दुर्भिक्ष-क्षतं मरुङ्गयं कुरुते । यस्मिन् देशे वसति नाशयति वन स दुष्टात्मा । यस्य न भवतोदन्तौ व्यञ्जनक्षतं दुर्भिक्षक्षतं मरुङ्गय कुरुते । यस्मिन्देशे स वसति नाशयति वनं स दुष्टात्मा । यस्य न भवतो दन्तौ कुलरूपवतोऽपि गर्भ-दोषेण । स गजोमत्कुणनामा न तं रणे योजयेद्राजा ।

कुञ्जरघटागतोऽसौ हरति गजानां बलं च सत्वञ्च । अतएव समरकाले नराधिपैर्वर्जनीयश्च । तनुह्रस्वदीर्घदन्तोऽप्यति-सङ्कटवक्त्रविघटितविषाणः । एकदशनस्तथोन्नतरदनश्च गजः प्रभं त्यजति । रदनविहीनो हस्ती निःशेषलक्षणयु-तोऽपि । भवति न नृपतियोग्योमदजलसंसिक्तग-ण्डोऽपि । दूर्वतविर्वर्जितदीने सत्वरहिते विव-र्णे च । निष्प्रभकुञ्जकुहरे राजा नारोहति सन्नाहर हिते च । एवम्भूतास्त्याज्याः मित्रनाशका रणे करिणः । अविश्यामस्मुजलं निपतति नागस्य यस्य नित्यं हि । नयनव्याधिवियुक्तस्य तस्य भर्त्ता रणे म्रियते । सत्वनयोश्चाथ नखा भर्तुश्चैव संबाधनकराः । जिह्वागलतालुमेढ्र-नयनानि भवन्ति यस्य कृष्णानि । वाजिच्छविच्छिन्न कृष्णः स गजोभर्तुः क्षयं कुरुते । खाद्यांसफलकपीठो राजन् ! लघेन पृष्ठवंशेन । वदनेन च कपिवदनानुका-रिणानिन्दितोहस्ती । कर्णौ दन्तौ च समौ न यतो भवतो यस्य नरनाथ ! । स नराधिपबलविनाशकरः करीजायते समरे । चित्रौ रोमचितौ वा स्थूलौ वातिप्रलम्बितापो वा । कोषौ कोषविनाशं स करोति नागश्च भूपानाम् । सितबि-न्दुभिर्विचित्रं श्वेतं वा यस्य जायते मेढ्रम् । स गजः शाल विनाशङ्करोति भूपस्य संग्रामे । छागस्येव विचित्राणि यस्य देहे भवन्ति रोमाणि । स गजप्रतिगजबलेन विहतो निजबलं दहति । सुप्तोत्थितस्य वदनात् यस्य गजेन्द्रस्य गलति रुधिरजालम् । व्यञ्जनकर्णं सुष्ठुति यवदन्तौ भर्तृनाशकरः । इति कथितं तव नृपते ! दुष्टमातङ्गलक्षणं सम्यक् । पापकरिगणलक्षणमतः परं संप्रवक्ष्यामि । यल्लक्षणं मयोक्तम्भद्रादीनां शुभं च दुष्टं च । तत्करिणीष्वपि योज्यं जातिविभागेन च युक्त्या । शुभलक्षणेन सहितानि करेणुकानामङ्गानि भवन्ति । युवतिसदृशानि पुरुषोचितानि च तथा पीनान्य-ङ्गानि करेणूनाम् । गजसंस्थाना करिणी निर्मलदन्तार सुपीनकाया च । स्थूलायता च सततं प्रभूतदया मता-च करिणीनाम् । प्राच्यवनसमुद्भूताः प्रायेण लक्षणयुता भवन्ति करिण्यः । शुभलक्षणेषु च छाया लक्षणं प्रधानं तच्च पञ्चविधं भवति । पृथिव्यप्तेजोवाय्वाकाशात्मकम् । तत्र पृथिव्यप्तेज आत्मकं प्रशस्तं वाय्वाकाशात्मकमप्र-शस्तम् । क्रमेण छायाभिधीयते बलोपचयपर्येण समुत्पद्यते । तस्यैव देहोद्द्योतजननी, स्थिरा प्रभाऽ-भिधीयते । छायाफलस्य द्विगुणफलसमादनसमर्था प्रभा

भवति । छाया देहसमाश्रिताः स्थिरप्रभावाऽस्थिरा छाया बलोपचयवशेन समुत्पद्यते । नरेन्द्रस्यैवोद्योगकाले शुभकर्म्मफलसूचनार्थं गजस्य प्रभा प्रकटीभवत्येव । एवं छायागतो भेदोऽवगन्तव्यः । साम्प्रतं छायारूपमभिधीयते । स्निग्धा गम्भीररूपा पार्थिवी छाया भवति । स्निग्धाञ्जीभूतसन्निभा च सलिलसम्भूता, स्निग्धा रक्ता च ताम्रा च तैजसी छाया । त्रयं चैतल्लक्षणं शुभमशुभलक्षणानि गजस्य छादयित्वा सुखप्रदं भवति । अथाशुभा कथ्यते निःप्रभा परुषा कृष्णा भस्मनाकुलवर्णा च वायवी । कृष्णा तन्वी लब्ध्यादिविविधवर्णा आकाशात्मिका । इत्थं छायाद्वयमति गर्हितम् गजलक्षणानि तिरस्कृत्याशुभप्रदम्भवत्यनेन प्रकारेण छायालक्षणमुक्तं भवति । विकटस्कन्धबालहस्तकशाकुहीनाङ्गेषु व्याधिपीड़ितविकलाङ्गेषु गजेषु नारोहति राजा भद्रार्थैनैवारोहन्तीति । याद्दशं च समरकाले मातङ्गं राजा समारोहति ताद्दशस्य लक्षणमभिधीयते । बलं कण्ठे स्थितं नित्यं कुञ्जराणां नरेश्वर ! । अतःसंपूर्णकण्ठस्तु शिखिपिङ्गललोचनः । घनमांसचितांसस्तु दिशोऽवधानतत्परः । वराहजघनश्चैव सुविशालोवराननः । सुप्रतिष्ठितपादस्तु यः स्यादगुरुमस्तकः । प्राजापत्योगजोह्येष संग्रामार्हः प्रकीर्त्तितः । मधुपिङ्गलदन्तोग्रः किङ्किरापीतकच्छविः । रोमाणि चैव रूपाणि सूक्ष्म च कनकप्रभम् । रक्तोत्पलदलच्छाये सूक्ष्मे तीक्ष्णे च लोचने । ऐन्द्रोगजस्तु विज्ञेयोरिपुवृन्दविनाशनः । ताम्रतालुकजिह्वोष्ठमुजालनिविड़ापरः । पीनोन्नतशरीरस्तु रक्तकोकनदच्छविः । आयतेन तु दन्तेन वरेण सुशोभिना । पीयूषपिङ्गदन्तो हि गजःकौवेर उच्यते । तद्वाप्युदग्रंकाशोद्धतप्रभविनाशभृत् । संपूर्णकरपादस्तु संपूर्णघनमस्तकः । बृहत्कुम्भनिगम्भारनादपूरितदिङ्मुखः । आयतेन च हस्तेन शीकरोत्किरणप्रियः । वारुणोऽयं गजोराजन् संग्रामेष्वतिपूजितः । कण्ठस्त्रिवलिसंयुक्तः संपूर्णोयस्य दृश्यते । लोचने ताम्रपिङ्गे च दन्तौ श्वेतजलप्रभौ । पादौ च वलिनौ यस्य पीनगात्रसमांसलौ । पृथुलौ विन्दुचित्रौ च कर्णौ वाताग्रपल्लवौ । ऐशानोऽयङ्गजो राजन् ! रणकर्म्मणि युज्यते । तालुन्युरसि वक्त्रे च पक्षयोरुभयोरपि । आताम्रा यस्य दृश्येत छाया स्फुटतनूरुहा । असौ सौम्यस्तु विज्ञेयः कुञ्जरः समरोचितः । अर्च्चिःपिङ्गलरोमा यः केशैश्च श्वेतपिङ्गलः । पिङ्गलाक्षिविनाशश्च रक्तपुष्करतालुकः । आग्नेयः स गजोज्ञेयस्तेजसाग्निसमप्रभः । राज्ञा वह्निमता नित्यं धार्य्यः समरकर्म्मणि । कृष्णवर्णं युतापाङ्गि सुवृत्तोन्नतानि लोचने । निर्धूमाग्निसमच्छाये सूक्ष्मस्य करस्तथा । कायश्च पीनवांस्तःस्याद्वेगे वायुसमः शुभः । राजन् वायव्यमिच्छन्ति तज्ज्ञं शास्त्रकोविदाः । संख्ये नियुक्तश्च गजोनाशयेद्रिपुवाहिनीम् । निरङ्कुशत्वं चपलत्वं तस्य दोषद्वयं भवेत् । निरङ्कुशत्वं शमयेत् प्रयोगाभ्यासनादिभिः । चपलत्वं च तथा नित्यं सुकुमारक्रियादिभिः । रोमाण्यञ्जनरूपाणि नखाः शङ्खसमप्रभाः । निस्त्रिंशविमलच्छायः स भवेन्नैरृतोगजः । स वैरिणं जयेद् राजन् ! रिपुसैन्यविमर्द्दनः । कुम्भवक्त्रः कटौ यस्य निस्त्रिंशघनसंनिभौ । विन्दुभिश्चित्रितं यस्य स विचित्रश्रयो गजः । तेन संग्रामकर्म्माणि कुरुते यो नराधिप ! । नित्यं चारिजयं तेन स राजा फलमश्नुते । सुदन्तो दीर्घहस्तश्च दृढदङ्क्षिपुष्करः । घनमांसशरीरश्च कूर्म्माकारोहि सत्तम ! । सांग्रामिकोमतोह्येष जीवत्यपि समायतम् । संग्रामविजयो नित्यं प्रतापजननक्षमः । महाशिरा महाकायो महामेढ्रो महाकरः । महादन्तोदरश्चैव महाभागोवराकृतः । महानेत्रो महौष्ठश्च महाकर्णोमहामुखः । महामदो महाकण्ठो भवेत्सांग्रामिकोगजः । वक्षप्रलक्षणं पूर्वमुक्तं स्यात् तज्जन्मैव हि । मन्द्रस्यापि हि शस्तं स्यादाद्यावेतौ च महागजौ । संपूर्णलक्षणोपेतो न भवेन्न महीतले । अनयोरेव भेदास्तु नागानां समुदाहृताः । सांग्रामिका द्विपा राजन् ! शुभलक्षणलक्षिताः । कथितास्तव तत्त्वेन राजसौख्यकरागजाः" । आभिषेचनिकगजलक्षणं तत्रैव । "पीनमांसचितांसश्च कूर्म्माकारमस्तका । सम्यक्चितसांसस्तु सुहृत्सु कल्पनापरः । क्षामकुक्षिः सुपार्श्वश्च रोमाभाद्रसमन्वितः । उत्पलोज्ज्वलनेत्रस्तु सुविशालो महाकरः । संपूर्णचिबुकश्चैव क्रमायामोरयान्वितः । बलसत्वसमायुक्तः स्निग्धच्छविमनोरमः । सांग्रामिको भवेद्राज्ञ आभिषेचनिको गजः" ।

तत्रैव पालकाव्ये गजहृदये । "आयुः सर्विंशति शतं मानं स्यात् सामजन्मनाम् । राजपुत्र ! दिशाम्येवमायुष्यादिदशादश । लक्षणानि वदे तेषां चेतावश्यैवं विषाणिनाम् । लक्षणालक्षणं ज्ञेयमायुष्यादिदशाफलम् । चेतानि हस्तोऽस्तुतं दन्तौ शीर्षं च चक्षुषी । कर्णौ ग्रीवा च गात्रञ्च वक्षः कार्य्यञ्च भेदतः । लक्षणं सन्निकटं याहिमकण्ठश्च वङ्क्षवेत् । मर्त्यस्त्वलक्षणोपेतं प्रभूतञ्च मनोषिभिः । तस्ये कुले वने जातौ प्रचारे वसु लक्षणम् । छायायाश्च तदाख्यातं

प्रभूतमिति सूरिभिः। दक्षिणन्दक्षिणाङ्गं च हस्तिनः शुभप्रदं मतम्। तथा वामं च वामाङ्गं हस्तिनीफलदं मतम्। लक्षणं दक्षिणाङ्गोत्थं फलं भूमिभुजां मतम्। मण्डलाङ्गे भवेद्यच्च लक्षणं तन्महाफलम्। यदल्पमप्रकाशञ्च तदल्पफलदं मतम्। मध्यमानफलं मध्यं लक्षणं तु समादिशेत्। शुभाशुभेन मिश्रेण बहुत्वेनादिशेत् फलम्। कदाचित् शुभदं चास्य गजानामप्यलक्षणम्। शुभकर्म्मानुभावाद्धि राजानमथ वा द्विजम्। यथा हि सर्व्वचरितः समुद्रं समुपेत्य हि। स्वरसेन वियुज्यन्ते भवन्ति लवणाम्भसः। एवमासाद्य भर्त्तारं बहुलक्षणलक्षितम्। भवन्ति बाधितानीह दुर्लक्षणफलानि च"। इत्युपक्रम्य गजदेहस्यानयविभागनामभेदस्तत्रैव दर्शितः। यथा "विषाणयोर्यस्तिर्य्यक्स्तादायतान्यो पक्षोऽपि सः। किविदा च पक्षस्याधःकुम्भोपरि च बिम्बकः। अथ पक्षोपरिस्थोऽपि पुरस्करोऽपि भवेत्तथा। तथा पक्षोपरिस्थे च किविद्योपरिभागके। वाहित्थोपरि केशाश्च मस्तकं च तथा मतम्। स्यातां मस्तकपिण्डौ च मस्तकस्याथ बिन्दुकः। तथा बिन्दूपरि स्यातां वितानौ बिन्दुपार्श्वतः। ततोऽन्तरवितानं च पृष्ठं तत्र विनिर्दिशेत्। बिन्दुवितानयोश्चान्तः पुरस्तात् पाकिलौ किल। मोचे मस्तकपिण्डाद्धि वितानबिन्दुपाकलः। निर्य्याणं च वितानोर्द्ध्वं कर्णौ वापि ततः कटौ। कटयोः स्रोतसी वापि कटस्रावस्तयोरधः। पृष्ठतः कटिसन्धी च गण्डौ च कटयोरधः। कटगण्डान्तसद्भागे घाटसन्धी च घाटके। घाटासन्ध्युपरिष्टाच्च कर्णसन्धिसमीपगे। श्रवणे गात्रगण्डाधःकपोलौ च तदन्तरे। रोमकूर्चौ च पादौ च कपोलाधस्तथा मतौ। ततः सगदसन्धी च सगदान्तरमत्र च। आसगदात् हन्वर्धः प्रदेशः शिरशोमतः। अक्षिकूटावुर्द्ध्वस्थावुभावुपरि वै तयोः। गुण्डवाच्याऽधरः स्यात्तु नेत्रस्रावौ तयोरधः। अपाङ्गावक्षिबाह्ये च तत्सन्धी चाक्षिपृष्ठतः। पक्ष्मणोर्मण्डले चाथ तत्सन्धी वर्त्ममण्डलौ। वर्त्ममण्डलसन्धी च ततश्च श्वेतमण्डले। श्वेतमण्डलसन्धी च ततः कृष्णे च मण्डले। तत्सन्धी च ततः कृष्णे सत्सन्धी वर्त्ममण्डले। तयोरपि तथा सन्धी प्राग्भागे चक्षुषोरपि। कनीनिके समाख्याते सन्धी तत्र तथानयोः। इत्यक्षिगतदेशानां समुद्देशो भवेदिह। किल विष्णौ च कर्णौ च कर्णयोश्चूलिका ततः। तदधः कर्णपिप्पल्यौ बालिके द्वे प्रदेशगे। कर्णमस्तकसन्धी च पश्चात् कर्णापवर्त्तयः। तदन्तश्च समस्थानावुद्घातौ परिकीर्त्तितौ। कर्णचूलिकयोरग्रे पिप्पलाख्यौ च भाषितौ। पुरस्तात् कर्णपिप्पल्याः कर्णसंवेशचर्म्मणी। कर्णान्तः कर्णनाड्यौ च कर्णेतां तस्य भागतः। तदावर्त्तिःकरन्ध्रश्च मध्यङ्गमध्यकर्णयोः। कर्णसन्ध्योरधस्ताच्च तथाधःसन्धिसंज्ञितौ। तदधः कर्णपाल्यौ च प्राक् कर्णोपरितस्तयोः। नाड़ीपार्श्वगतौ चात्र मध्यकर्णौ तयोरधः। अधःकर्णौ समाख्यातौ बहिःकर्णापवर्त्तयोः। पार्श्वकर्णौ बहिःकर्णौ कर्णयोश्च क्रमाद् बहिः। अन्तरान्तरकर्णौ च पर्य्यन्तकर्णपाशयोः। अधस्ताच्चेति भागाः स्युः कर्णयोः करिणोऽपि च। ग्रीवायाः प्राग्भवोभागो ग्रीवा सन्धिस्ततस्तथा। ग्रीवापृष्ठं ततःस्याच्च मध्ये तत्र कृकाटिका। ग्रीवापृष्ठे तथाधस्ताद्गलमाण्डर्द्दिपस्य च। अधःकण्ठस्तयोर्योर्द्ध्वं मन्ये ते गलकण्ठयोः। धमन्यौ कण्ठपार्श्वे च तयोश्चामलिपिण्डिका। गलस्य पार्श्वयोरूर्द्ध्वं दर्दुरौ चात्र निर्दिशेत्। शुण्डे सन्ध्योपरिस्थातामुपरिष्टात्तयोस्तथा। किविकौ च तथा घोणौ पश्चादुपरि चैतयोः। पार्ष्णिघातौ च संस्थातौ पार्ष्णिघातान्तरे तथा। उत्सङ्गावुपरि स्यातां स्कन्धादूर्द्ध्वं तथानयोः। तन्मध्ये पणवश्चोर्द्ध्वमिति ग्रीवांशसंग्रहः। (हस्तिपकेन पार्ष्णिभ्यां यौ देशौ हन्येते तौ पार्ष्णिघातौ) गात्रमात्रमायतं च भवेदासनमादितः। तत्पार्श्वयोः प्रतोकाशौ तावंसौ च तयोरधः। तदधःप्रत्यगंसौ च तथैवांसफले तथा। तदधस्तात्ततो बाहू ततो बाहूत्तरं तथा। अवोगत्र गुह्ये तत्र बाहुपृष्ठोद्भवे चापि। अपारे च तदूर्द्ध्वं च तयोश्चङ्गाविकौ तथा। पाल्यस्तथाङ्कादूर्द्ध्वञ्च तयोरायामपृष्ठतः। पाल्यन्ताञ्च पुरस्ताच्च भुजयोरुदितौ यवौ। यवभागोपरि तथा पुरस्तात् फलकोच्छ्रितौ। पिण्डिकाधश्च वेमाख्यौ विशोषौ यवयोरधः। उत्सङ्गौ च विशोषाधः प्रष्ठौ चापि तयोरधः। तत्सन्धी च ततः पर्व्वसन्धानौ तदधोमतौ। तदधः पालिपादौ वै कूर्चौ चानु तयोरधः। तदधोनखकूर्चाश्च ततो नखशिखा दश। पुरःपुरोनखौ नाम्ना समखौ चैव विश्रुतौ। तत्पश्चात्त् नखग्रीवा विशोषाः पार्श्वतोनताः। अन्तःपार्श्वबहिःपार्श्वे स्यातां पार्श्वनखेषु च। कयाश्च राजयवात्र पादनाह्वाविकास्तथा। तलसन्धी ततः स्यातां तले च तदनन्तरम्। तलप्रदेशपुरतस्तत्परा मध्यभूतः। तलकर्षौ ततः पश्चात् तलप्रष्ठौ ततःपरौ। तलयोरन्तरञ्चैव हृदये च करीरके। किंविनोराजयश्चेति तलसङ्गाविका अपि। पश्चद्धस्तौ ततः स्यातामन्तर्बाहू ततोऽन्तरे। बहिर्बाहू बहिर्योर्द्ध्वं गात्र सर्व्वं ततोऽपि च। कक्षौ गात्र

प्रकोष्ठश्च स्तनयोरन्तरं ततः । इति प्रदेशा गदिता गजानां गात्रगोचराः । कण्ठस्यान्तर्मणिः पूर्वं ग्रीवापर्वसमाश्रयः । उरोमणिः समाम्नातस्ततः स्यादुरसः स्थितिः । याऽधोभा पार्श्वगा तत्र गात्रसन्धिसमाश्रिता । आवर्त्तमणिरप्यत्र विज्ञो भास्करसङ्कुतः । ततः सन्धिकरस्तु स्यात्तस्याधः स्तनयोः पुरः । स्तनयोरन्तरं चापि चत्वरस्यान्तरं भवेत् । अधःस्तनौ च स्तनयोरन्तरे चाथ चूचुके । स्तनान्तौ स्तनकूर्चौ च चोरिकौ चापि कूर्चके । चत्वरस्यान्तरालं च भवेच्चूचुकयोरधः । स्तनयोरप्यधस्ताच्च पुरस्तात् स्तनयोर्भवेत् । हृदयं चास्य पार्श्वस्याशयाभौ च वक्षितयोः । स्यातामाशामकाण्डौ च तद्योविवशौ ततः । ततः क्रोडं पक्षाधस्तात् पश्चाच्चाशमकाण्डयोः । रन्ध्रे चापरवत्स्थिस्तनयोरप्यनन्तरम् । जठरे नाभिरित्येते प्रदेशाः किल वक्षसः । आपराङ्गपरःशेफोरेतःस्थानार्द्धः स्मृतः । ततोऽण्डकोषसन्धिः स्यात् कोषसन्धिश्च शेफतः । क्रमान्मेहनमत्र स्यात् मेढ्रर्शनो भवेदपि । आनिर्ममास्तथा तस्य बाहुपार्श्वगतौ मतौ । अपतत्र ककुदं तस्यान्ते पार्श्वयोरपि । मेहनस्य पुरःस्रोतो वङ्क्षणौ कोषपार्श्वगौ । अपरान्त्रयिसो गुह्ये तथा वङ्क्षणमध्यगे । इत्यण्डकोषभागाः स्युः क्रमादावनसुच्यते । तदन्वासनस्योर्द्ध्वं वक्रवंशस्य पृष्ठतः । भवेदपरवंशश्च ततोऽप्यग्राश आसनम् । पश्चिमासनमप्यस्य पृष्ठतः परमस्य च । अत्र आशिप्रदेशश्च ततो वंशश्च वालधिः । (आशिरासनम्) । आसनस्याभिधानास्य भागाः पश्चाश्रिपादिनः । स्यातां च तत्पक्षाधस्तात् पक्षकौ तथा ततः । स्यातां च पक्षपार्श्वं च गर्भूकाच क्रमादपि । पक्षाधोऽन्तरौ चानुकक्षौ पक्षसन्धातौ । निम्नाभौ मध्यगौ तत्र यङ्कुचैषोर्च मध्यतः । कक्षाभोगौ काकपक्षौ शङ्क्वायाकारौ ततः । उत्कटौ कुक्षिपक्षाश्च त्र्यस्थिपार्श्वगतावपि । काककोत्कटदेशानां पार्श्ववंशस्य पार्श्वयोः । काककौ पिण्डके चाधो विद्याश्चापरयोः स्थिते । उत्कटपिण्डिका त्र्यस्थिस्यागमेशासनम् । जघनं पश्चतोऽस्याश्च एवं कालकका दश । भवेत् पायुश्च पायोस्तु गुदमभ्यन्तरं तथा । बहिर्गुदस्य वर्त्म स्यात् गुदान्तःकन्दरं विदुः । त्रिकपायन्तरे कक्षौ तथा पिण्डकयोरपि । अधस्तादन्तरे किञ्चिदन्तरं तस्य संस्थितिः । पिण्डकायाः मण्डूक्यावृष्ठोलौ पिण्डकान्तरे" । अवयवप्रमाणभेदास्तत्रैव । "पिण्डिकारत्निकामाना गुष्करोऽपि भवेत्तथा । कर्णमन्धिर्भवेच्चापि तद्वारत्निप्रमाणतः । कर्णोपकर्णौ पाण्यौ च स्यातां हस्तमुष्टिकृती । कर्णाग्रौ च तथा शिखाहिस्तारे द्वादशाङ्गुले । कर्णाश्रावपि हस्तौ द्वावायामपरिणाहतः । कर्णशक्तिं विद्धि कर्णप्रमाणेन च रत्निकाम् । शिर आसनमुद्दिष्टं मानेन त्रिकहस्तकम् । शिरसस्तु प्रमाणेन स्यात् षड्ङ्गुलमासनात् । आसनेन समं शीर्षं कल्याणकरमित्यपि । वंश्यासनं च नीचेन शिरसः स्यात् षड्ङ्गुलम् । अशाप्यो नाम स प्रोक्तो गजो निन्दितलक्षणः । शिरो यस्य भवेदुच्चमासनाद् द्वादशाङ्गुलम् । सोऽप्युदप्राभिधानेन लक्षणादासनं भवेत् । आसनं वङ्क्षणोद्देशाद् प्रायश्च पञ्चभागतः । मञ्चसमानफलक उत्कटोऽष्ठोस्थितोऽपि च । अष्टौत्येव समाख्यातं लक्षणादासनं भवेत् । हस्तद्वयप्रमाणेन मेचकात् पश्चिमासनम् । द्वादशाङ्गुलनिम्नं स्यादासनात् पश्चिमासनम् । सार्द्धहस्तत्रयं चाधः प्रमाणमपि वालधेः । सप्ताङ्गुलप्रमाणेन पायुश्च परिमण्डलः । अरत्निपरिमाणेन विदुस्तद्गुदान्तरम् । अरत्नितोऽधिकं यस्य विस्तारेण स्तनान्तरम् । तिर्य्यग्रोमचय गात्रमरिभ्यः शोवदोगजः । अरत्नित्रयमानेन नाभिदेशस्तनान्तरम् । नाभिश्च मूलकोषश्च गुदारत्नित्रयमानतः । अण्डकोषश्च हस्तार्द्धप्रमाणेन समन्वितः । द्वे चारत्नी तथार्द्धं च कोषमार्गं भवेदपि । सोऽर्द्धहस्तद्वयायामो हस्तानाहयुतो मतः । प्रोक्ते तु परिणाहः स्यादरत्निद्वितय तथा । हस्तयोश्चार्द्धमानं स्यात् चतुर्भागेन संयुतम् । तस्य पार्श्वतः प्रोक्तावरत्निप्रमितौ मतौ । चतुर्भागयुतारत्निर्भवेच्चनतयोरपि । अष्टाङ्गुलप्रमाणेन स्यातां ततः पुरोमणौ । सप्ताङ्गुलश्चापनयः पार्श्वे पञ्चाङ्गुलानयाः । चतुर्विंशत्यङ्गुलश्च भवेत्तालापरे तथा । अपराभ्यां भवेदुष्पन्धिररत्न्यर्द्धेन मानतः । अरत्निश्च तलायामो भवेच्च करयोरपि । सप्ताङ्गुलास्तु वैशोभाः पाण्योः पार्श्वनखास्तथा । पञ्चाङ्गुलाश्चाङ्गुलाश्च नवचापि नखा मताः । इत्यङ्गमानं नागस्य दिङ्मात्रमिह दर्शितम् । समाङ्गा अपि मातङ्गा दृश्यन्ते दुःखदाः क्वचित् । दृश्यन्ते विषमाङ्गाश्च क्वचित् कल्याणदायिनः । तस्मात् प्रमाणं केषाञ्चिदप्रमाणतया मतम् । प्रमाणं लक्षणार्थैः सर्व्वलक्षणवेदिभिः । अथाङ्गसङ्गमात्तावत् मातङ्गानां गुणागुणाः । भूयोऽप्यगुणदोषाभ्यां प्रसङ्गात् कथिताः पुनः । उपरिक्रमतो वृद्धो नातिस्तब्धोन्नदुस्थितिः । हस्तभिन्नप्रान्तरोमा च लोहिताङ्गुलिपुष्करः । सर्व्वव्यञ्जनपूर्णश्च गजः कल्याणकारकः । भाग्यप्रदो बालहस्तप्रायततनूरुहः । कर्षदो हीनविन्दुश्च गजो दुःख-

ह्रस्वं च कृशरोमके। कुठाराकृतयः पादा डिम्बहस्त्यपि विसृतः। आस्यौष्ठतालुरसनाः काल्पकल्याणकान्तयः। कर्णौ कचाचितौ न्यूनौ नाम्नवर्णश्च वालधिः। कराभिप्रे मखासक्तौ मानोनाङ्गुलिपुष्करे। स्थूले च पक्ष्मणी नेत्रप्रभे दुष्प्रेक्षणे तथा। दुर्वर्णानि तथाङ्गानि वलीमुखनिभं मुखम्। रेणुद्विरेफानुरूपा मक्षिकाभिश्चिताकृतिः। अरत्निमात्रौ दन्तौ च शुष्काश्वमनिगूहितौ। कर्णौ च कठिने यस्य नीलगोपक विद्युति। विवर्णं कठिनं रूक्षं भिन्नभिन्नतनुरुहम्। नपुंसकश्च मातङ्गो स दूरे त्यागमर्हति। मञ्जिष्ठारागभावेन यस्तस्तुर्यानिरोपमा। स पूतनोऽग्निभयदो यूथहा परिवर्ज्जितः। तिर्य्यक्प्रेक्षी चाधःप्रेक्षी दुर्गन्धमदसंयुतः। काणपिङ्गोद्ग्रोमेष्टो मातङ्गः स्यात् मतङ्गजः। पुष्करे स्तनमध्ये च वामहस्ते मतङ्गजः। किलासैराहतः स्याच्च तद्राष्ट्रे दुर्नयं दिशेत्। पश्चात्समुत्थितापापो नित्यमीलितलोचनः। वाह्यिसंक्षिप्तमुखो निबद्धाक्षो मतङ्गजः। न्यूनं विंशतिवर्षस्य दन्तौ यस्य प्रमाणतः। अतिमात्रौ न वै स्यातां भागोनागषमस्तु सः। हीनातिरिक्तदशनो यस्य वै तस्य न्वर्बुदः” इत्यवयवदोषाः।

“अथ वर्णच्छायावर्त्ताः पुष्पाण्याभा स्वरोगतिः। बलं सत्वमनूकञ्च गन्धोबोधितमिङ्गितम्। स्याद्भूतगुणवैशेष्याद् वर्णवैशेष्यमेव हि। वातादिभ्योऽपि दोषेभ्योत्थवैशेष्यमिष्यते। रौक्ष्यं परातिरेकेण सर्वं वातस्य वै भवेत्। शोणता शोणितात् पित्तात् रौद्रता, सौम्यतेन्दुजा” इत्युपक्रम्य “कफो गर्भशयानस्य स्निग्धतां प्रतिपद्यते। पित्तं गर्भशयानस्य साम्यत्वं प्रतिपद्यते। तत्करी कथितः कालस्तथैव स्निग्धदर्शनः। पित्तं कफश्च युगपद् वेविष्टि तु ततस्ततः। श्यामवर्णोऽपि मातङ्गो जायते स्निग्धएव वै। गर्भे च मांसरूहिते कफरक्ते यदा स्थिते। चिरं गर्भशयानस्य हरिस्निग्धस्ततोऽप्यसौ। रक्तपित्तकफानाञ्च सङ्करत्वगतो तथा। हरितारुणपोताद्या नानावर्णा भवन्ति हि। सर्वत्वानुगतेन मोक्षनाद्रूक्षता भवेत्। पारुष्यं धूसरत्वं च सुस्निग्धत्वं भवेत्तथा। कश्चिद्वर्णविभेदाश्च पूर्वसम्भवकारणात्। यच्छन्दतनचाराच्च पित्र्यबीजवशात्तथा। तत्रापि श्वेतवर्णाश्च शुक्रवर्हिरणित्विषः। शुक्लहेमरुचश्चाभाः सुरेषु प्राचि च क्वचित्। श्यामास्तु हरयः कृष्णाः श्यामाश्च करिणः स्मृताः। हरिर्मधुसवर्णश्च कृष्णश्चाञ्जनसन्निभः। न कालो न हरिर्नागो मध्वाभः श्याम इष्यते। एतेषु त्रिषु वर्णेषु हरिर्वर्णोर्वरोमतः”। इति वर्णभेदकारणादिनिरूपणम्।

“आवर्त्तः षड्विधश्चैव त्वग्जोदशनभङ्गजः। कोषजः पक्ष्मजातश्च बालजो रोमजोऽपि च। कोषरोमभवौ शस्तौ दन्तकल्पनजः शुभः। शोकानर्थप्रदाः प्रोक्तास्त्वग्जपक्ष्मजबालजाः। भूमिदो रोमजावर्त्तः कोषावर्त्तोऽर्थप्रदः। दशनसम्भवावर्त्तः सुतदारप्रदस्तथा। कथितः प्रजावर्त्तो ज्ञातिजातभयप्रदः। प्रणालश्चालजावर्त्तः सामञ्जा रोमसम्भवः। प्रशस्तोदक्षिणावर्त्तोवामावर्त्तो विगर्हितः। मतो व्यक्तो मृदुस्निग्धः सवर्णः पीतरोमजः। वामाङ्गे दक्षिणावर्त्तोवामावर्त्तश्च दक्षिणे। आवर्त्तः सम्मतोऽभीष्टो द्विजराजसमप्रभः। शुभोऽप्यक्षेत्रजातोऽसौ शुभं नैव प्रयच्छति। अशुभक्षेत्रजातश्च नानिष्टफलदः शुभः। अश्वत्थे पदतले स्तनयोरन्तरे तथा। ग्रीवाया मक्षिकूटोर्द्धे कुम्भयोरन्तरे तथा। उत्पले दन्तवेष्टे च कर्णमध्ये च वक्षसि। आवर्त्ता वारणानां हि सुनिश्चेया. शुभप्रदाः। स्तनान्तरे शिरोमध्ये कुम्भान्तश्चूलिकान्तरे। वक्षस्यावर्त्तसम्पन्नः कुञ्जरः पञ्चमङ्गलः। शीर्षावर्त्तोऽभिषेकाय स्तनावर्त्तो जयाय च। सुखाय चूलिकावर्त्तः कुम्भोरोरोमजः श्रिये। वंशे प्रोथेऽथ बाहित्थे मन्यासु सगदे कटे। कर्णेऽक्षिकूटे नाभौ च कक्षपक्षांसकुक्षिषु। बालधौ पेचके मेढ्रे रन्ध्रसन्धिकलासु च। आवर्त्ता न प्रशस्यन्ते कर्णभागगताश्च ये। कोणप्रमाणलघवोमर्मपर्वप्रदेशगाः। अशुभक्षेत्रजाताश्च सकिलासान्तरोत्थिता। मनोनेत्राभिरामो हि सुहृद्योगादितो महान्। ऊर्द्धप्रवृत्तोदीर्घश्च रोमजोऽर्थजयावहः। मर्मभागेषु नागस्य निष्ठास्ते रोमजादयः। समभागगतावर्त्ताः सर्वतः सुखदामताः”। इत्यावर्त्ताः।

“स्वस्तिकादिसुसंस्थानं पुष्पं दर्शनदेहजम्। स्निग्धं भवेत् शुभच्छायमच्छिन्नं वाञ्छितप्रदम्। कबन्धादिकसंस्थानं विषतन्तुसमं स्फुटम्। रूक्षं कृष्णञ्च कुसुमं नानानर्थकसंज्ञकम्। दद्यात् सुतं सितं पुष्पं स्निग्धपीतञ्च हेमदम्। नीलोत्पलाभं शीलाग्रं स्निग्धकाजञ्च दन्तिदम्। यदि स्यात् पूजिते भागे कुसुमं स्निग्धपाण्डुरम्। सुरचापसमाकारं तद्भवेद्भूभुजः शुभम्। शक्रचापनिभं पुष्पं दन्तोपरि च दन्तिनः। दिशेद्दिष्टं सुमित्रं च चेमं च क्षितिरक्षिणः। स्तनान्तः स्निग्धकक्षे च पुष्पे नाग समे तथा। पुष्पे श्रोत्रान्तःकाले च स्थानिवृद्धिं विनिर्दिशेत्। श्रीवत्सादिनिभाकारे वैजयन्तीध्वजोपमे। शैलप्रा-

वाददहये कलचामरवीचिभिः । सोमसूर्य्यसमाभासे पिशिताश्यादमूर्त्तिभिः । दिष्टे शुभाय न्यपतेर्नैन्द्रमर्कह्रमाकृति । श्वक्रव्यादनिभाकारं रणापसरकारणम् । धूमाभं पुष्पमिच्छन्ति मत्यवेऽग्निभयाय च । कृष्णं पुष्पं तथा नेष्टं हिमद्रोणविवर्द्धनम्" । इति पुष्पम् ।

"भूताम्नाय भवज्ञाता भवेच्छाया विवाहिनाम् । यस्मा भूजलवज्रात्या न यस्मा वाजिनोद्भवा । छायायाः सम्भवः पूर्वं, परतः परितः प्रभा । छायायाः सम्भवः पूर्वं प्रभा तत्परमश्नुते । वर्णमात्रमश्रिता च्छाया प्रभा वर्णस्य मात्रयः । लक्षणानि तु नागानां पापानि च शुभानि च । छायावशात् फलन्त्येव छाया तेनातिलक्षणम् । यस्य स्याल्लक्षणं भद्रं छाया भद्रा भवेन्न तु । न चासौ शुभदोषक्षो छायोपहतलक्षणः । पापलक्षणयुक्तोऽपि शुभच्छायायुतो गजः । फलं लक्षणजं हित्वा छायाफलमवाप्नुयात् । नीराजनेऽभिषेके च ध्वजोच्छ्राये रणोदये । तेषु तेषु च कालेषु भवेच्छाया च शोभना । वक्षसि प्रतिमानेऽंसे कुम्भे कर्णे कटेषु च । निर्वाये मस्तकस्थाने वेदयोश्च कपोलयोः । पिण्डिकाजघनाभोगे तेषु तेषु प्रदेशेषु च । प्रदेशेषु प्रधानेषु छायाया वीक्षणं भवेत् । प्रशस्ता पार्थिवी छाया वह्निजा जलजापि च । नेष्यते व्योमजा छाया मातरिश्वभवापि च । पार्थिवी स्निग्धगम्भीरा सर्ववर्णैर्विभाव्यते । छाया श्यामां च रक्ता च स्निग्धा जाम्बूनदाग्निजा । छाया नीलाम्बुदाभासा स्निग्धा सलिलसम्भवा । अव्यक्तवर्णा तस्य छाया गगनजा मता । धूम्रा रुक्षा च वायव्या भस्माभा निष्प्रभा तथा । एताश्छायाः प्रोक्ताः सुमातङ्गे राजपूजिते । नीलाम्बुजेन्द्रनीलाभा नीलाञ्जननिभाऽपि च । कान्यक्ता पार्थिवी छाया शुभिक्षक्षेमकारिणी । बालार्कपद्मकिञ्जल्कचक्रगोपकसन्निभा । ज्वालाभा तप्तहेमाभा वह्निजा विजयप्रदा । छायाम्मयी पयःशङ्खकुन्दकुमुदनिभद्युतिः । सौम्यास्तया प्रतीता च भर्तुरर्थप्रदा सदा । जलयुद्दुदसङ्काशा धम्बुतिरतिस्थिरा । निन्द्या च व्योमजा छायानिर्याहेशकरी मता । सर्ववर्णैरपेताऽपि निष्प्रभा भस्मसन्निभा । विच्छिन्ना विकृता च्छाया वायवी सा भयावहा । वैरिञ्ची वैष्णवी पैत्री छाया माधवमी तथा । कौमारी राक्षसी वार्षी गान्धर्वी च तथाऽऽसुरी । पैशाची चेति याश्छाया श्छायादिद्याः कश्चित् शुभाः । भूतोत्थलक्षणे तासां भेदो नेह तु कीर्त्तितः । तेजोऽतिरक्ता भद्रस्य पाटला भवति प्रभा । छाया रक्तकला रक्तपङ्कपङ्गजनिभाऽपि वा । कृष्णा च मन्दकारिण्श्छाया तु मृगहरिणकः । मलिनाम्बरधरो गौर्य्यायुधधारना" इति छाया ।

"कृत्रिमं विविधा ध्वानाम्भिरद्रेभ्यः करतोऽपि च । भवन्ति वायुरगतो गात्राणां वेष्टनेन च । प्रयाणेष्वभिषिक्ते षु ध्वजे जातिकुलेषु च । मार्गेषु बृंहितं यास्तं मत्तस्याप्ने न जातिषु । कूपितेऽत्यस्तनिद्रान्तकूपितो बृंहति कश्चित् । यदि दन्ती शुभे देशे समये च वसुप्रदः । दर्पवेद्बृंहितं भद्रं तत्फलं स्फीतमादिशेत् । सरोवरे तथाऽऽरामे गोष्ठे विवुधवेश्मनि । निकुञ्जे हृद्यदेशे हि विशेषः शुभदो ध्वनिः । यात्रायामभिषेके च यज्ञादिसमये तथा । समवेतं पुण्ये च बृंहितं स्यात्क्षिप्रदम् । अश्मशानादिकाष्ठवल्मीकदुष्टस्थाने भयप्रदः । सुनीचे च प्रधूमे च प्रतिद्वायदिनेषु च अतिशीतेऽनिवर्णे च प्रभाते चाशुभोरवः । भूतले न्यस्तहस्तो हि पर्य्यश्रुनयनो गजः । कूजन् निर्व्ययनं कुर्य्यात् यदि वा मनुजेश्वरः । करेण बृंहितोनागो दुश्चित्तात्तुपरिप्लुतः । आदिशेत्सन्निपाणोनाशमथ वा पृथमापतेः । व्यायतत्वमसहस्तस्य शाखाभोगतचक्षुषः । जघने वामतो बालं तथा निक्षिपतोऽसकृत् । (व लं बालधिम्) । निर्वादतो लङ्घयतो हूस्टोमृणोविमूर्च्छितः । वामे निक्षिप्य गण्डूषं हंहितं स्यादनष्टकृत् । खेयः स्रवति नागानां धमतां यदि शोणितम् । (खेभ्यः छिद्रेभ्यः) तथा मध्यान्तदेशे च प्राणिनां क्षयमादिशेत् । यद्याग्नेयीमुखोभूत्वा प्राच्यां वार्कोदयं प्रति । दन्ती तीक्ष्णरवं कुर्य्यात्तदा स्यात् पावकाद्भयम् । करेण यदि मातङ्गो हंहमाणः समं स्पृशेत् । आलाने बध्यमानस्तु संयुति क्षयमादिशेत् । (संयुति युद्धे) । आलाने बध्यमानस्तु शीत्कुर्वन् कुरुते ध्वनिम् । गात्रं प्रोङ्खोलयस्त्यागतः प्रस्थानमादिशेत् । क्षिप्रा करं विषाणस्यं विषमं कूजते यदि । निरीक्षमाणो गगनं कृतां हस्तिमुद्राकरेत् । यदाभ्युन्नतवक्त्रोऽय समस्थानस्थ जिघ्रतः । तथा कुञ्चितहस्तेन हस्तं गात्रं च जिघ्रतः । कर्षतो दक्षिणं हस्तं मर्मे निक्षिपतोऽपि यत् । हंहितं स्यान्नदिष्टं तथान्योन्यकरस्पृशः । स्वप्नीता शुभवस्तूनि कुसुमादीनि चेद्दिपः । कुर्य्याच्छब्दं शुभं तेन फलं शुभतरं भवेत् । उच्चैरभिमुखः यान्तो यदा नदति वारणः । वक्तृमध्यमानेन तदा तत्र जयो भुवः । मुखेन मण्डूकरवान् कर्णाभ्यां दुन्दुभिध्वनिम् । करेण मुरजारावान् कुर्वन् कल्याणकारकः । कलशादिसमाद्या

विकटाश्च समाः स्मृताः”। इति ध्वनिः। गतिवत्त्वे तु मागुक्तो एवात्र प्रायेण दर्शिते नातस्ते अत्रोदाहृते।

“सत्त्वं त्रिविधमिच्छन्ति श्रेष्ठमध्याधमैर्गुणैः। सात्त्विकं राजसं चापि तामसञ्च विषाणिनाम्। एषामपि गुणास्तेषां बहवस्ते न कीर्त्तिताः। सत्त्वस्योक्ता गुणाः शौर्य्यं बुद्धिर्धैर्य्यं सुहर्षता। रजसोये गुणास्ते च क्रोधोत्साहा वपि क्वचित्। गुणाश्च तमसस्तन्द्रातमोमोहप्रमादिताः। स्नेहवन्तः कान्तियुक्ताश्च प्राज्ञाश्च चिरजीविनः। क्रियाक्लेशसहाः शान्ताः सात्त्विकाः सामसम्भवाः। शिष्याश्च मध्यमाध्याश्च कीर्त्तिता निर्भयाः क्वचित्। क्रियायोगसहाः किञ्चिद्राजसा मध्यमायुषः। तामसा दुःखिता मूढा विरूपा लघुजीविताः। युक्तोऽप्यन्यगुणैः सर्व्वैर्युतश्चेत् सात्त्विकैर्गुणैः। श्रेयोगुणः स समरे तथाऽध्वनि मतङ्गजः। एषां वागीशनिर्दिष्टा विषयापेक्षया स्थितिः। भद्रे सन्निहितं सत्त्वं, रजो मन्द्रे, तमो मृगे। देवगन्धर्व्वयक्षाणां पन्नगासुररक्षसाम्। पिशाचानां नृणां तुल्यं वेद्यं नागस्य चेष्टितम्”। इति सत्त्वम्।

“यत् पूर्व्वसम्भवं स्पष्टं सत्त्वं रूपं गतिः स्वरः। तस्यानुकरणात् युक्तमनूकमिति कोविदाः। सत्त्वरूपजवारावैः शुभानुकारिता शुभा। देवर्षिगणगन्धर्व्वनागानूकाः शुभामताः। एवमेव च दुष्टानुकृतो दुष्टः प्रकीर्त्तिताः। दैत्यरक्षःपिशाचानामनूकं परिवर्ज्जितम्। वृषसिंहतुरङ्गादिसमानूकामता द्विपाः। नेष्टाः खरउष्ट्रादिसमानाकृतियोगिनः”। अनूकम्।

“आस्याक्षिकुम्भकर्णेषु मदनिःश्वासवायुषु। मलहमपुमूत्रेषु गन्धं समुपलक्षयेत्। दृष्टगन्धान्निषेवेत वारणान् धरणीपतिः। दुष्टगन्धान् सदा भूपो यत्नतः परिवर्ज्जयेत्। सर्पिर्मधुसुरालाजदधिक्षीरानुकारकः। पाल्यक्षीरमदिरापद्मकाष्ठादिसन्निभः। मालतीकेतकीजातीचन्दनाधिकसौरभः। सुरसालफलामोदो गन्धो नागस्य सम्मतः। असृङ्मूत्रयकृत्पूतिवसाकुणपकुत्सितः। पद्मिनोत्पलाब्जादिसमप्रतिमविनिर्म्मितः। खरोष्ट्रमूत्रकरसमः श्मशानधूमसन्निभः। मीनमत्कुणतुल्यश्च गन्धो नागस्य दुःसहः”। इति गन्धः।

“पञ्चधा विदितं ज्ञात्वा विज्ञेयं सामजन्मनाम्। अत्यर्थोत्तानगम्भीरमत्यर्थान्वर्थभेदतः। यस्तूद्धातादुद्विजते दूरादंशादि संकुचेत्। अत्यर्थं सङ्कुचेत् स्पृष्टः स गजोऽत्यर्थवेदिता। योऽपि त्वक्स्पर्शमात्रेण रोमस्पर्शवशेन वा। विद्यादुत्ताङ्कुशादींश्च स स्यादुत्तानवेदिता। त्वग्भेदात् शोणितस्रावात् तीव्रप्रव्यथनादपि। अङ्कुशादीन् विजानाति स हि गम्भीरवेदिता। यमैर्हृतोऽभयं वेत्ति यमैर्वेत्ति भयाहृतः। विपरीतमतिर्नागो ज्ञेयः प्रत्यर्थवेदिता। प्रत्येति वार्य्यमाणो यो निगृहीतश्च गच्छति। प्रतिलोमायते संज्ञां सोऽपि प्रत्यर्थवेदिता। यमैर्हृतः यमैर्वेत्तिभयं वेत्ति भयाहृतः। प्रत्येति प्रतिषिद्धश्च नोद्यमानश्च गच्छति। यथासंज्ञं विदध्याच्च सर्व्वकर्म्माणि योऽङ्कुशम्। अन्वर्थवेदिनं प्राज्ञो जानीयात्तं शुभं गजम्” इति विदितम्।

“मतङ्गजेङ्गितं वक्ष्ये शृणु तदवधानतः। शुभञ्चाशुभञ्च येन स्यात् यात्रादिसमये नृप!। अनुयात्रं गतोऽन्यात् किञ्चिद्रूपं यदि द्विपः। तज्जयः, प्रतियात्रं तु रूपाद्गत्या पराजयः। दृष्ट्वा रिपूनभिमुखान् वार्य्यमाणोऽपि चेद्गजः। प्रजेत्तद्विजयो नूनं यदि वा प्राप्नुवान् वधे। दक्षिणेनाग्रपादेन क्षितिमुत्पाटयेद्यदि। उत्तोलयेद्वामपादं तदा जयमुदीरयेत्। करेण चाग्रहस्तेन यदा पृथ्वीं प्रमार्जयेत्। विक्षुत्यनेन कर्णौ च तदा सौख्यं समादिशेत्। मेचकं कुटिलं कृत्वा करं जिघ्रति चेत् द्विपः। प्रहृष्टहृदयाङ्घ्रिश्च तदाभ्युदयमादिशेत्। दक्षिणं तु यदा दन्तं दन्ती प्रमुदितेन्द्रियः। परिमृजति हस्तेन तदा स्यात् प्रियसङ्गमः। तथैव गलसन्धिञ्च पद्मकरेण परामृशन्। श्रीयोगमुपयातं तु वारणो विनिवेदयेत्। सङ्कोच्य दक्षिणं पादं वामपादेन वा भुवम्। विलिखेद्वारणः क्षिप्रं स्तब्धकर्णः स्यात् पराजयः। यदा तु दुर्म्मनादन्तं वामं हस्तेन शोधयेत्। तदात्मनोऽवदेशाय्यं यातुर्वाथ निषादिनः। करेण वामगात्रं च क्षिप्तगात्रः प्रमार्ष्टि चेत्। तदानिष्टं भवेद्भर्त्तुरन्यथा च शुभं भवेत्। व्यथमानः पतेत् त्रस्तः कक्षबन्धे यदा द्विपः। नाभिनन्देच्च मात्स्यादि तदा परिभवो भवेत्। अकस्मादेव कुप्यन्ति भ्रमन्ति च पतन्ति च। करिणो यदि तद्विद्यात् विपक्षं समुपस्थितम्। यदा पश्यति मातङ्गोविद्रवञ्च पराजयम्। प्रवासं परराष्ट्रं वा तदा भवति दुर्म्मनाः। अदंशमशकपीड़ायां करेण परिवीजनात्। गण्डूषदेशनिक्षेपात् सव्याङ्गसुपसर्पणात्। अकस्माच्च स्खलद्गत्या धरण्यां प्रणिपातनात्। जलप्रतारवैमुख्यादङ्कितभक्ष्यसेवनात्। स्तब्धकर्णतया गत्या पादाग्रवेशनादपि। दृष्टदन्तादिपीडत्वादकल्याणकरः करी। आत्मपक्षोज्जलोत्तीर्णोरिपूणां पक्षणं वदेत्” इङ्गितम्।

“जायते द्विविधः कोपः संचारश्च विषाणिनाम्।

शिष्यक्रोधोऽष्टमोऽपि: स्यादनिष्टोऽशिष्यरोषण:। यः क्रुध्यति चिरेणैव मृदुक्रोधो भवेदपि। वागदण्डमात्रकश्चैव प्रतिषिद्धो न तुष्यति। अनुशाम्यति रोषाच्च स शिष्यक्रोधसंज्ञितः। इष्यते सर्व्वकार्य्येषु शुभजातिर्मतङ्गजः। यः क्रुध्यत्यचिरेणैव भयक्रोधो भवेदपि। प्रतिषिद्धश्च वाग्दण्डतीक्ष्णप्रजननकाङ्कुशैः। तुष्यत्येव चिरेणापि रोषाद्विरतिमेति च। अशिष्यक्रोधसंज्ञोऽसौ विज्ञेयो वारणाधमः" इति कोषः। विस्तरस्तु पालकाव्यादौ दृश्यः।

**इभकणा** स्त्री० इभोपपदा कणा शाक०त०। गजपिप्पल्याम्।

**इभकेशर** पु० इभमद इव केशरोऽस्य। नागकेशरे "घटकाटकालगुप्रेभकेशरागुरुचन्दनैः" सुश्रु०।

**इभगन्धा** स्त्री इभस्य गन्ध एकदेशोद्दन्त इव पुष्पमस्याः। नागदन्त्याम् सा च स्थावरविषभेदः यथा सुश्रुते "मूलं पत्रं फलं पुष्पं त्वक्क्षीरं सारएव च। निर्य्यासो धातवश्चैव कन्दश्च दशमः स्मृतः" इत्युपक्रम्य "कुमुद्वतीरेणुकाकरम्भमहाकरम्भकर्कोटकरेणुकखद्योतकचर्म्मरीभगन्धा सर्पघातिनन्दनसारपाकादीनि द्वादश फलविषाणि" इति विभज्य "शुष्ककोफः फलविषैर्दाहोऽन्नद्वेष एव चेति" तद्विकारो दर्शितः।

**इभदन्ता** स्त्री इभस्य दन्त इव शुभ्रं पुष्पमस्याः। गजदन्तशुभ्रपुष्पवत्यां १नागदन्त्याम्, सा च स्थावरफलविषा।

**इभनिमीलिका** स्त्री इभं हस्तिनमपि निमीलयति सेवनात् निद्रापयति। १भङ्गायाम्। इभस्येव निमीलिका। २वैदग्ध्याम्

**इभपालक** पु० इभं पालयति। (माहुत) हस्तिपके।

**इभपोटा** स्त्री पोटा पुंलक्षणा इभी परनिपात पुंवद्भावश्च। पुंगजलक्षणयुक्तायां हस्तिन्याम्।

**इभभर** पु०६त०। गजसमूहे [सिंहे।

**इभमाचल** पु० इभमाचलयति आ+चल-णिच्–वा०अ।

**इभया** स्त्री इभैर्यायते भक्ष्यतया प्राप्यते या-कर्म्मणि घञर्थे क १त०। स्वर्णक्षीरीवृक्षे रत्नमाला इभषेति वा पाठः।

**इभयुवति** स्त्री युवतिरिभी पूर्वनि० पुंवद्भावश्च। युवत्यां हस्तिन्याम् वा ङीप्।

**इभाख्य** पु० इभस्याख्याख्या यस्य। नागकेशरे त्रिका०।

**इभानन** पु० इभस्याननमेवाननं यस्य। गजानने गणेशे तस्य यथा तदाननत्वं तथोक्तं "स्वयं गोलकनाथश्च पुण्यकस्य प्रभावतः। पार्व्वतीगर्भजातश्च तव पुत्रो भविष्यति। स्वयं देशनवनाथश्च सर्वादीशः कृपानिधिः। गणेश इति विख्यातो भविष्यति जगत्त्रये। 'शनिदृष्ट्या शिरश्छेदात् गजवक्त्रेण योजितः। गजाननः शिशुस्तेन नियतिः केन बाध्यते" ब्रह्मवै० पु० ६अ०। शनिदृष्ट्या तच्छिरश्छेदकथा तत्रैव १२अ०। "पार्व्वतीवचनं श्रुत्वा सोऽनुमेने हृदा स्वयम्। पश्यामि किं न पश्यामि पार्व्वतीसुतमित्यहो। यदि बालो मया दृष्टस्तस्य विघ्नो भवेद् ध्रुवम्। अन्यथा मे प्रत्यपवादपरतः कातरताम्। इत्यालोच्य च धर्म्मिष्ठो धर्म्मं कृत्वा स्वसाक्षिणम्। बालं द्रष्टुं मनश्चक्रे न बालमातरं शनिः। विमनस्कमानसः पूर्वं शुष्ककण्ठौष्ठतालुकः। सव्यलोचनकोणेन ददर्श च शिशोर्मुखम्। शनिश्च दृष्टिमात्रेण चिच्छेद मस्तकं मुने!। चक्षुर्निवारयामास तस्थौ नम्राननः शनिः" एवं शिरश्छेदमुक्त्वा। "तान् सर्व्वान् मूर्च्छितान् दृष्ट्वा चारुह्य गरुडं हरिः। जगाम पुष्पभद्रां च उत्तरस्यां दिशि स्थिताम्। पुष्पभद्रानदीतीरे ददर्श काननस्थितम्। गजेन्द्रं निद्रितं तत्र शयानं हस्तिनीयुतम्। दिश्युत्तरस्यां शिरसं मूर्च्छितं सुरतश्रमात्। परितः शावकान् कृत्वा परमानन्दमानसम्। शीघ्रं सुदर्शनेनैव चिच्छेद तच्छिरो मुदा। स्थापयामास गरुडे रुधिराक्तं मनोहरम्"। गजशिरश्छेदमुक्त्वा तत्पत्न्या स्तुतेन हरिणा तस्य कल्पान्तजीवनं वरोदत्त इत्युपवर्ण्य। "आगत्य बालकस्थानं बालं कृत्वाऽथ वक्षसि। रुचिरं तच्छिरः कृत्वा योजयामास बालके। ब्रह्मस्वरूपी भगवान् ब्रह्मज्ञानेन लीलया। जीवनं योजयामास हुङ्कारोच्चारणेन च। पार्व्वतीं बोधयित्वा तु दत्त्वा क्रोडे च तं शिशुम्। बोधयामास तां नाथ आध्यात्मिकविबोधनैः" "सेनाचरीभवदिभाननदानवारिवासेन यस्य जनितासुरभीरणश्रीः" नैष०। इभवक्त्रभमुखगजाननादयोऽप्यत्र। "तं नमामि गजाननम्" माधवः।

**इभारि** पु० ६त०। सिंहे इभानिलादयोऽप्यत्र। [शब्दच०।

**इभोषणा** स्त्री इभोपपदा ऊषणा शाक०त०। गजपिप्पल्यां

**इभ्य** त्रि० इभं गजमर्हति दण्डा० यत्। १प्रचुरगजादिधनाढ्ये २नृपे ३हस्तिपके च पु०। "उषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास" छा०उ० तस्य भाष्ये इभो हस्ती तमर्हतीतीभ्य ईश्वरो हस्त्यारोहो वेति। "जामिः सिन्धूनां भ्रातेव स्वसामिभ्यान्न राजा वनान्यत्ति" ऋ०१, ६५,४, स्वार्थे कन्। इभ्यकस्तत्रैव स्त्रियान्तु टापि वा अत इत्त्वम् इभ्यका–इभ्यिका। इभाढ्यायां स्त्रियाम्।

**इभ्यतिल्विल** त्रि०इभ्यस्तिल्विलः पुष्टश्च। गजादिभिः प्रचुरे आढ्ये। "यदि प्रतीपोयादिभ्यतिल्विल इव धाम्यति-

परित्यक्तः पार्थद्वेषाद् दुरात्मना । रूपवान् बलसम्पन्नो गुणवान् सत्यविक्रमः । इन्द्रलोकं जगामाशु श्रुत्वा तत्रार्जुनं गतम् । सोऽभिगम्य महाबाहुः पितरं सत्यविक्रमः । अभ्यवादयदव्यग्रो विनयेन कृताञ्जलिः । न्यवेदयत चात्मानमर्जुनस्य महात्मनः । इरावानस्मि भद्रं ते पुत्रश्चाहं तव प्रभो ! । मातुः समागमो यश्च तत्सर्वं प्रत्यवेदयत् । तच्च सर्वं यथावृत्तमनुसस्मार पाण्डवः । परिष्वज्य सुतश्चापि सोऽऽत्मनः सदृशं गुणैः । प्रीतिमानभवत् पार्थो देवराजनिवेशने । सोऽर्जुनेन समादिष्टो देवलोके तदा नृप ! । प्रीतिपूर्वं महाबाहुः स्वकार्यं प्रति भारत । युद्धकाले त्वयाऽस्माकं साह्यं देयमिति प्रभो । बाढमित्येवमुक्त्वा च युद्धकाल इहागतः” ।

“इरावन्तं तु निहतं दृष्ट्वा पार्था महारथाः” भा०भी० ९२अ०। “पुत्रं विनिहतं श्रुत्वा इरावन्तं धनञ्जयः।” ९५ अ० । २नदीभेदे स्त्री ङीप् । भा० स०प०९अ० वरुणसभावर्णने । “इरावती वितस्ता च सिन्धुर्देवनदी तथा” “इरावत्यां हतो भोजः कार्त्तवीर्य्यसमो युधि” भा० व० १२अ० “एतद् कामदं तीर्त्वा तथा रम्यामिरावतीम्” । भा०क०४४ अ०। “इरावत्यां महाभोजावग्निसूर्य्यसमौ युधि” हरिवं० ३६१ ।“इरावती धेनुमती हि भूतं” ऋ०७,९९,२। ४अन्नादियुक्ते त्रि० ‘वासिष्टं वर्हिरश्विनाविरावत्” ऋ०७,४०५ । “इरावत् हविरन्नादियुक्तम्” भा० । “सुन्तावन्तः सुभगा इरावन्तोहसमदाः” अथ० ७,६०,६ ।

**इरावती** स्त्री इरां भूमिम् अवति अव—बा०अत ङीप् । वटपत्रीवृक्षे, सा हि पाषाणभेदनेनापि भूमिमाच्छादनात् पाश्वतीति तस्यास्तथात्वम् ।

**इरिकावन** न० इरेव कन् अत इत्वम् इरिकाप्रधानं वनम् । सुभा० “इरिकादीनि वनोत्तरपदानि संज्ञायाम्” पा० न०सू० पाठात् न णत्वम् । वृक्षप्रधाने वनभेदे । इरिकादीनि च “इरिका तिमिर समीर कुवेर हरि कर्म्मार” ।

**इरिण** न० ऋ—इन किच्च । १ऊषरभूमौ, २निराकम्बे, ३शून्ये च । “यथा गौरो अपाकृतं तृष्यन्नेत्यवेरिणम्” ऋ०८,४,३ । “अवेरिणे बीजमुप्त्वा न वप्ता लभते फलम्” मनुः ।

**इरिन्** त्रि० ईर—क्वनिप्०। णिनि यलोपः । १प्रेरके । “न वेषामिरी सधस्थ ईष्ट आं” ऋ०५,८७,३। २ईश्वरे च ।

**इरिमेद** पु० इरी रोगादीर्ण्यकः मेदोनिर्य्यासो यस्य । विट्खदिरे । “इरिमेदः कषायोष्णो मुखदन्तगदास्रजित् । हन्ति कण्डूविषश्लेष्मकृमिकुष्ठविषव्रणान्” भावप्र० ।

**इरिविल्लिका** स्त्री इरिविल्लैव कन् । “पिडकामुत्तमाङ्गस्थां वृत्तामुग्ररुजाज्वराम् । सर्व्वात्मिकां सर्व्वलिङ्गां जानीयादिरिविल्लिकामिति” निदानोक्ते मस्तकस्थे व्रणभेदे । कनभावे इरिविल्लाप्यत्र । “इरिविल्लां गन्धनाम्नीं कक्षां विस्फोटकांस्तथा । पित्तजस्य विसर्पस्य क्रियया साधयेद्भिषक्” सुश्रु० ।

**इरेश** पु० ६त०। १वरुणे, २वागीशे, ३भूमिपतौ, ४विष्णौ च

**इर्गल** न०स्त्री अर्गल+पृ० । द्वाररोधके काष्ठभेदे तस्मै हितम् अपूपादि० यत् । इर्गल्य. छ इर्गलीयः । तत्साधने द्रव्ये ।

**इर्य्य** त्रि० ईर—कण्डू०। अच् वेदे नि० न यलोपदीर्घौ । प्रेरके । “यूयं राजानमिर्य्यं जनाय विभ्वतष्टम्” ऋ०५,५८,४ ।

**इर्वारु** स्त्री उर्व्व—आरु पृषो० । ( काकुड़ ) १कर्कट्याम् । २हिंसके त्रि०। “सिंहव्याघ्रवृकतरक्ष्वृक्षद्वीपिमार्ज्जारशृगालमृगेर्व्वारुकप्रभृतयो गुहाशयाः” सुश्रुतः । मृगेर्वारुकः मृगहिंसकः । भावे। इर्व्वालुरप्यत्रार्थे ।

**इर्वारु(लु)शुक्तिका** स्त्री इर्वारु(लु) शुक्तिकेव स्वयंस्फोटनात् । (फुटी) ( स्वयं भिन्नविपक्वकर्कट्याम् ) ।

**इल** शयने अक० गतौ क्षेपे च सक०तुदा०पर०सेट् । इलति । ऐलीत् इयेल ईलतुः इलितः इलः ।

**इल** क्षेपणे चुरा०उभ०सक० सेट् । एलयति ते ऐलिलत् त । ऐलयीत् ऐलिष्ट “कथं वातमेलयति कथं न रमते मनः” अथ०१०,७,३१ । “आसां देवतानां यांयां कामयते सा भूत्वेलयति” शत०ब्रा० १०,२,८,८ ।

**इलविला** स्त्री पुलस्त्यमुनिपत्न्याम् कुबेरजनन्याम् । एतत्सम्बन्धेनैव कुबेरस्य ऐलविल इति नाम ।

**इला** स्त्री इल—क । १भूमौ, २गवि, ३वाचि, ४जम्बुद्वीपस्य नववर्षमध्ये वर्षभेदे तत्सीमा चेलावृतशब्दार्थे वक्ष्यते । ५ वैवस्वतमनुकन्यायां बुधपत्न्याम् । सा हि विष्णुवरात् पुंस्त्वमासाद्य पुनः शङ्करशापात् स्त्रीत्वं गता बुधस्तु तामुपगम्य पुरूरवसमुत्पादयामासेति पुराणे प्रसिद्धम् । तच्च इडाशब्दे उक्तप्रायम् ६ स्वर्गलोके हि० ।

**इ(ए)ला** कण्डू० यक् प० अक० सेट् । इ(ए)लायति ।

**इलावृत** न० इला पृथिवीवावृतं निषधादिभिः । नववर्षात्मकजम्बुद्वीपस्य वर्षभेदे तच्च यथा “पश्चान्माल्यवतः, प्राच्यां गन्धमादनपर्वतः । इलावृतं नीलगिरेर्याम्यतो, निषधादुदक्” एतत्तु चतुःसीमावच्छिन्ने देशेऽस्ति । “माल्यवांश्च

प्राञ्चं प्रच्छृयाक्षूर्ध्वं ऊ षु ण इति" (११,४२) ८सू०। "प्रसारितबाहुः पिण्डम्" क०। "अवहृत्योपरिनाभि धारयन्नश्वप्रभृतीनभिमन्त्रयते स जातः स्थिरो भव शिवो भवेति"। (११,४२,४५)" ९सू०। "अवहृत्य पिण्डं नाभेरुपरि धारयन्" क०। "धारयत्येषामुपरि पिण्डमनुपस्पृशन् प्रैतु वाजी इत्याग्निमित्यन्तरयोः" (११,४६) १० सू०। "एषां पशूनामुपरि पिण्डमनुपस्पृशन् धारयति प्रैतु वाजीत्यश्वस्य, इत्याग्निमिति खरस्य" क०। "अग्न आयाहीत्याहृत्य (११,४६) खराच्छागस्यैतं सत्यमित्याभिधानात्" (११,४७) ११ सू०। "धारयत्यनुपस्पृशन्नेव" क०। "आयन्त्यावर्त्य पशूनजः पुरस्ताद्रासभो मध्ये" १२सू०। "सस्थानस्थितानामेवावृत्तिः" क०। "अनद्धा पुरुषमीक्षते पूर्ववदग्निं पुरीष्यमिति"। (११,४७) १३ सू०। "अनश्वार्थत्वात् पूर्वत्रच्छन्दोमाग्निषु प्रज्वलत्स्विमुच्यते (२,११)" क०। "उत्तरत आहवनीयस्योद्धताभ्युक्षिते सिकतोपकीर्णे परिश्रिते प्रागृद्वारे निदधात्योषधय इति" (११,४७,४८)१४ सू०। "वि पाजसेति" (११,४९) प्रमुच्यैनमजलोमान्यादाय प्रागुदीचः पशूनुत्सृजति १५ सू०। "प्रमुच्य पिण्डमजलोमानि गृहीत्वा प्रागुदीचीं दिशं प्रति पशूनुत्सृजति" क०। "आपो हि ष्ठेति (११,५०) पर्णकषायपक्वमुदकमासिञ्चति पिण्डे" १६ सू०। "पर्णकषायं पलाशकषायम्" क०। पलाशत्वग्भिःक्वथितमुदकं पलाशकषायपक्वम्" सं०प०। "फेनं च तूष्णीं ततः कृत्वा" १७सू०। "तत एवोदकात् पूर्वतरं फेनं कृत्वोदकमासिञ्चति वचनात् फेनम्" क०। "अजलोमभिः संसृजति मित्रः संसृज्येति (११, ५३)" १८ सू०। "पिण्डम्"। "शर्करायोरसाश्मचूर्णैश्च रुद्राः संसृज्येति (११,५४)" १९सू०। "शर्करा प्रसिद्धा अयोरसो लोहसिङ्घाण· कीट इति यः प्रसिद्धः अश्मचूर्णः पाषाणचूर्णः एवमादैतैः पिण्डं संसृजति" क०। "शर्कराः सूक्ष्मकन्दुकाः अयोरसो लोहरसो यस्ताप्यमानाल्लोहात्पृथग्भवतीति कीट इति लोके प्रसिद्धः अश्मा दृढपाषाणः तेषां चूर्णैः संसृजति" सं०प०। "संसृष्टामिति" (११, ५५,५७) संयौति" २०सू०। "पिण्डं मिश्रयति आर्द्रालयतीत्यर्थः" क०। "अषाढां करोति महिषी प्रथमविन्ना तदाख्या" २१सू०। "अषाढाख्यामिष्टकां महिषी करोति। महिषीशब्दस्याभिषिक्तत्वादाह प्रथमविन्ना तदाख्या" 'तद्वैव महिषीति" ब्रा० (६,५,२,१) क०। "भार्याणां मध्ये प्रथमं लब्धा प्रथमपरिणीता या स्त्री सा तदाख्या" सं०प०। "यजमानपादमात्रीं त्र्यालिखिताम्" २२सू०। "महिषीपादमात्री मा भूदिति यजमानग्रहणम्" क०। "त्रिषु स्थानेषु लिखिताम्" सं०प०। "यजमान उखां करोति मृदमादाय मखस्य शिर इति (११,५७) २३ सू०। "मृदादाने मन्त्रः" क०। "प्रादेशमात्रीं तिर्यगूर्ध्वां च" २४ सू०। "तिर्यगायामप्रमाणे विस्तारप्रमाणे च" क०। "पञ्चप्रादेशामिषुमात्रीं वा तिर्यक् पञ्चपशौ" २५ सू०। "ऊर्ध्वं तु प्रादेशमात्र्येव पञ्चपशावपि" क०। "वसवस्त्वेति (११,५८) प्रथयति" २६ सू०। "आक्तं पिण्डम्" क०। "अन्तानुन्नीय सर्वतः प्रथमं धातुमादधाति रुद्रास्त्वेति" (११,५८) २७सू०। "धातुशब्दानुक्ततृप्रक्षेप एव" क०। "प्रथितस्य तत्प्रान्तानुन्नीय ऊर्ध्वान् गमयति, धातुं प्रथमपिण्डिकाम्" सं०प०। "संलिप्य श्लक्ष्णां कृत्वोत्तरमादित्यास्त्वेति" (११,५८) २८सू०। "संलिप्य शिथिलया मृदा संलिप्य वारिणा संश्लक्ष्णां सुकुमारां कृत्वा" सं०प०। "विश्वे त्वेति (११, ५८) समीकरोति" २९सू०। (६,५,२,२) शत० ब्रा०। "त्रिहस्तीयउत्तरे वर्तिं सर्वतः करोत्यदित्यै रास्नेति (११,५९) ३०सू०। उखाया ऊर्ध्वप्रमाणस्योत्तरे विहस्तीये उपरि वर्तमाने तृतीये भागे सर्वतः सर्वासु दिक्षु मृण्मयीं वर्तिं रज्ज्वाकारां रास्नां (काञ्चीगुणस्थानीयाम्) करोति" क०। "ऊर्ध्वास्तूष्णीं प्रतिदिशं" ३१सू०। "वर्तीः करोति चतस्रोऽपरा वर्तिं प्राप्ताः" ३२सू०। उखाशब्दस्याकृतिवचनत्वाद् स्तैरोखा भवति" क०। "सर्वासु दिक्षु पार्श्वमध्ये बाह्यप्रदेश अपराश्चतस्रो वर्तीरूर्ध्वास्तूष्णीं करोति किम्प्रमाणाः मूलत आरभ्य रास्नां प्राप्ताः तिरश्ची रास्नां यावद्गताः" सं०प० इति प्रथमकण्डिका

"स्तनानिवाग्ये वृषयति" १ सू०। "ऊर्ध्ववर्तीनामेकैकस्याः" क०। "आसां चतसृणां वर्तीनाम ग्रेषु तिरश्च्या वृत्तेरुपरि स्तनानिव स्तनसदृशान्मृदवयवाननुचयति" सं०प०। "द्विस्तनामष्टस्तनामेके" २सू०। "ता हैके द्विस्तनामष्टस्तनामिति (६,५,२, १२) श्रुतेः द्विस्तनपक्षएकस्मिन्नेव वर्त्म्ये क्रियते अष्टस्तनपक्षे द्वौ द्वाविति क०। "बिलं गृह्णात्यदितिष्टेति"(११,५९) ३सू०। "स्तबे गृह्णातीत्यर्थः" क०। "कृत्वायेति (११,५९) निदधाति उखाम्" ४सू०। "तिस्र एके" ५सू०। "उखाः

कुर्वन्ति” (६,५,२,१२) श०ब्रा०। “तथा च ब्रह्मिराड्-ग्रहणाद्येकैका निधानान्ता क्रियते” क०। “इष्टकास्तु तिस्रो विश्वज्योतिषः पृथग्लक्षणास्त्र्यालिखिताः” ६सू०। “तृतीयस्यार्थे चयन्त्याद्यजमान एव तिस्र इष्टकाः विश्वज्योतिःसंज्ञकाः पृथग्लक्षणाः करोति लक्षणकरणं च प्रथमाद्वितीयाप्रसूप्रात्यर्थमेवोपधानं यथा स्यादिति” क०। “मृदमुपशयां निदधाति” ७सू०। “उखां क्रियमाणामुपशेतइत्युपशया तां मृदमतिरिच्यमानां निदधाति कार्यार्थम्” क०। “अवशिष्टां मृदमुपशयसंज्ञां निदधाति” संप०। “सप्तभिरश्वशकृद्भिरुखां धूपयति दक्षिणाग्न्यादीप्तैरेकैकेन वसवस्त्वेति (११, ६०) प्रतिमन्त्रम् ८सू०। “शकृद्भिरश्वलेण्डैः” संप०। “अभ्र्या श्वभ्रं चतुरश्रं खनत्यदितिष्टेति (११, ६१) ९सू०। “अभ्रिश्च पूर्वोक्तैव प्रकृतत्वात् अत्र सा वैणव्यभ्रिस्तूष्णीं सीदतीति (६,५,४,२) श०ब्रा०वचनात्” क०। “श्रपणमास्तीर्य यथाकृतमवदधाति” १०सू०। श्वभ्रे, येनैव क्रमेण कृता आषाढाद्याः उखायां तु विशेषः, “देवानां त्वेत्युखां (११,६१) न्युब्जाम्” ११सू०। “अवदधाति” क०। “श्रपणेनावच्छाद्य दक्षिणाग्निनादीपयति धिषणास्त्वेति (११,६१) १२सू०। “निर्मन्थ्येन वा श्रपणश्रपणे” १३सू०। “कर्त्तव्ये” क०। “वरूत्रीष्ट्वेताक्रममाणो (११,६१) जपति” १४सू०। “उखाभीक्षमाणः” क०। “आचरति मित्रस्येति (११, ६२) १५सू०। “आचरणं च श्रपणप्रक्षेपः” क०। आषाढादीनामधस्तादुपरिष्टाच्च पुनः श्रपणं प्रक्षिपति” संप० “यावद्वाचरेत्” १६सू०। “यावद्भिः प्रकारैः श्रपणं प्रक्षिपेत्तावद्वारानेनैव मन्त्रेणाचरेत्” संप०। “दिवैव प्रदहनोद्धरणे” १७सू०। “कर्त्तव्ये” (६,५,४,१०) श०ब्रा०। “प्रदहनं पचनम् उद्धरणं बहिर्निष्कासनम्” संप०। “उद्वपति श्रपणम्” १८सू०। “प्रदाहतया” क०। “भस्मसात्कृतं पराकरोति” संप०। देवस्त्वेत्युखाम्” १९सू० (११,६३)। “उद्वपति” क०। “उत्तानां करोत्यव्यथमानेति (११,६३) २०सू०। “उद्यच्छत्युखाम्” (११,६४) २१सू०। “ऊर्ध्वं यच्छति” क०। “परिगृह्य पात्रे करोति मित्रैतां तइति” (११, ६४, २२सू०। “अजापयसावसिञ्चति वसवस्त्वेति” (११,६५) प्रतिमन्त्रम्” २३सू०। “उखाम। विचपक्षे च उत्तानकरणाद्येकैका अजापयसावसेकान्ता कर्त्तव्या” क०। “इष्टकाश्चियातस्त्र्यालिखितानाम्” २४सू०। “अत ऊर्ध्वमिष्टकास्त्र्यालिखिताः क्रियन्ते” क०। “अपरिमितालिखिता वोत्तरयोः” २५सू०। “द्वितीयाचतुर्थ्योः कुत एतत् ते हि प्रकृत्याम्नायते “रसो ह्येते चिती अपरिमित उ वै रस इति” (८,७,२,१७), श०ब्रा०। “अतश्च विकल्पोऽयम्” क०। “पूर्ववदग्निः पाके” २६सू०। “इष्टकानां पाके भवति निर्मन्थ्यो दक्षिणाग्निर्वा” क०। फाल्गुनामावास्यायां दीक्षामुक्त्वा कल्पशेषं तत्राह। “दण्डोच्छ्रयणान्तं कृत्वाध्वर्युयजमानयोरन्यतर उखामाहवनीयेऽधिश्रयति मुञ्जकुलाययाणकुलायावस्तीर्णाम् अन्तरेषणां मा सु भित्था इति (११, ६८) तिष्ठन् दङ्प्राङ्” ३१सू०। दण्डोच्छ्रयणान्तमाध्वरिकं कर्म कृत्वा उखामाहवनीयेऽधिश्रयति, सा च मुञ्जकुलायावस्तीर्णा भवति अन्तरेषणा। प्रागुदीचीं दिशमभिमुख। अधिकारमुपजीव्याह” क०। “रुक्मप्रतिमोचनविष्णुक्रमवात्सप्रेषु च” ३२सू०। प्रागुदीचीं दिशमभिमुखो भवति” क०। “अग्नावारूढे त्रयोदशास्यां प्रादेशमात्रीः समिधआदधाति” ३३सू०। “उखायामग्नावारूढे त्रयोदश समिधआदधाति, प्रादेशमात्रीग्रहणं च शिष्टानुकरणप्रसङ्गार्थम्” क०। “अनारोहत्यङ्गारान्मौर्यके” ३४सू०। अनारोहत्यग्नावुखायाम् अङ्गारान्मौर्यके समिदाधानं कुर्वन्ति” क०। ता इदानीमाह, “इतोखां कार्मुकीं द्रुह्व इति” (११,७०) ३५सू०। “आदधाति, क्रमुको धमनः तदीया कार्मुकी” क०। “वैकङ्कतीं परस्या इति (११,७१) ३६सू०। “औदुम्बरीं परमस्या इति” (११,७२) ३७सू०। “अपरशुवृक्णां यदग्नइति” (११,७३) ३८सू०। “या परशुना न छिन्ना” क०। “अकुठारच्छिन्नाम्” संप०। “अधःशया यदत्तीति” (११,७४) ३९सू०। “भूमिसंलग्ना या शुष्का रूढा भवति” संप०। “पालाशीः प्रत्यृचमहरहरिति” (११,७५)। ४०सू०। “आदधाति अथैताः पालाश्यो भवन्तीति (६,६,३,७) श०ब्रा०वचनात्, एवं चापरशुवृक्णा अधःशया चौदुम्बर्यावेव भवतः आम्नानराविधानात्” क०। “उपोत्तमां क्षत्रियस्येच्छन्” ४१सू०। “उत्तमायाः समीपे उपोत्तमा द्वादशी, तां क्षत्रियस्य यजमानस्येच्छयादधाति, अन्यस्य क्षत्रियपुरोहितव्यतिरिक्तस्य उभे उपोत्तमोत्तमे इच्छयाधीयेते, एवं हि श्रूयते” श०ब्रा० (६,६,३,१२) क०। “एवं च सति, उत्तमां पुरोहितस्य” ४२सू०। “इच्छयादधाति” क०। “उत्तमाम् याहइति” (११,८२) संप०। “अन्यस्योभे” ४३सू०। “अन्यक्षत्रियस्यापुरोहितस्य च

एकादश भवन्ति त्रयोदश वा” क० । “क्षत्रियपुरोहितव्यतिरिक्तस्य द्वादशत्रयोदशाविवक्षया भवतः” संप० “स्वाहाकारः सर्वासूखायाम्” ४४सू० । “उखायामाधीयमानासु समित्सु, अतोऽन्यत्रापि स्वाहाकारो भवति सर्वास्विथभिधानात्” क० । “उखायां सर्वासु समित्सु स्वाहाकारो भवति” संप० । “औदुम्बर्यादि दण्डान्तमत्रैके” ४५सू० । “एवं सति प्रागौदुम्बर्याहोमादुखाधिश्रयणादि”तान्यु हैकउखायामेवैतान्यौदुम्बर्याणि जुहूतीति वचनात्” (६,६,१,२२) क० । “अत्रावसरे” संप० इति ४ कण्डिका ।

“यजमानः कण्ठे रुक्मं प्रतिमुञ्चते परिमण्डलमेकविंशतिपिण्डं कृष्णाजिननिष्यूतं लोमसु शुक्लकृष्णेषु शणसूत्रे त्रिवृत्योतसुपरिनाभि बहिष्पिण्डं दधानो रुक्म इति”(१२,१) । “रुक्मं हि प्रकृत्य सर्वमेवैतच्छ्रूयते ( ६,६,१,२ ), यजमानग्रहणाच्च स्वयमेव यजमानः प्रतिमुञ्चते, द्वादशाहे च सर्वे यजमानाः प्रतिमुञ्चेयु अत ऊर्ध्वं मिण्डुाद्यन्वारम्भः एवं हि सर्वैः कृतं भवति” क० । “परिमण्डलं वर्तुलम्, एकविंशतिपिण्डम् पिण्डं निर्बाधम् निर्बाध्यन्ते उन्नताः निष्काश्यन्ते उन्नताः स्वरूपाद्बहिर्निःसृता भवन्ति, कृष्णाजिन शुक्लकृष्णेषु लोमसु निष्यूतं नितरां स्यूतम्, पुनः कीदृशम् त्रिगुणे त्रिवृति शणमये सूत्रे ओतं प्रोतम् तथा उपरिनाभि, पुनः बहिष्पिण्डं बहिर्निर्बाधम्” संप० । “इण्डुशिक्यासन्दीषु कुशरज्जवस्त्रिवृतो मुञ्जिम्भाः”२सू० उखा याभ्यां गृह्यते तौ इण्डु्वौ, शिक्यं प्रतितम्, आसन्दी च । कनुरक्ता रज्जवो मुञ्जिम्भा भवन्ति” क० । “मुञ्जिम्भा कर्दमलिप्ताः” संप० । “परिमण्डलाभ्यामिण्डुाभ्यामुखां परिगृह्णाति नक्तोषासेति” (१२, २ ) ३सू० । “हरति द्यावाक्षामेति” (१२,२ ) ४सू० । “तामेवोखाम्” क० । “आहवनीयस्य पुरस्तादुद्गातासन्दीवदासन्द्यां चतुरश्राक्र्यां शिक्यवत्यां निदधाति देवा अग्निमिति ( १२,२ ) ५सू० । “उद्गातासन्दीवदिति प्रादेशपादी गम्यते” (१२,४,२ ) क० । सा च चतुरङ्गी सह पादैः, तस्यां शिक्यवत्यामासन्द्यां च, निदधाति उखाम्” क० । “शिक्यपाशं प्रतिमुञ्चते षड्द्यामं विश्वा रूपाणीति” (१२,३) ६सू० “ग्रीवायाम्” क० । “सशिक्यं प्राञ्चं प्रत्यृह्णाति सुपर्णोऽसीति” (१२,४ ) पिण्डवत् ७सू०। “सह शिक्येन प्राञ्चमग्निं, प्रत्यृह्णाति, पिण्डवदित्यूर्ध्वबाहुः (१,८ ) । “धारणं च” ८सू० । “पिण्डवदेव उपरिनाभि” क० । अत्र द्वाभ्यामङ्काभ्यां शुक्लयजुर्वेदस्याध्यायादि, त्रिभिरङ्कैः कात्यायनश्रौतसूत्रस्याध्ययकण्डिकादि । चतुर्भिरङ्कैः शतपथब्राह्मणस्याध्यायादि ज्ञेयं तेन तत्तत्प्रतीकमात्रगृहीतमन्त्रसूत्रादि तत्तत्स्थाने द्रष्टव्यम् विस्तरस्तु शत० ब्रा० ६ अ० द्रष्टव्या । लौकिकेष्टरचितप्राचीरादौ इष्टकाघनफलेन इष्टकासंख्याज्ञानोपायो दर्शितोलीला० यथा “चितौ करणखण्डसार्द्धहस्तम् । उच्छ्रयेण गुणितं चितेः किल क्षेत्रसम्भवफलं घनं भवेत् । इष्टकाघनहृते घने चितेरिष्टकापरिमितिश्च लभ्यते ॥ इष्टकोच्छ्रयहृदुच्छ्रितिश्चितेः स्युःस्तराश्च दृषदां चितेरपि ॥ उदाहरणम् । अष्टादशाङ्गुलं दैर्घ्यं विस्तारो द्वादशाङ्गुलः । उच्छ्रितिस्त्र्यङ्गुला यासामिष्टकास्ताश्चितौ किल॥ यद्विस्तृतिः पञ्चकराष्टहस्तं दैर्घ्यं च यस्यां त्रिकरोच्छ्रितिश्च । तस्यां चितौ किं फलमिष्टकानां सङ्ख्या च का ब्रूहि कति स्तराश्च ॥ इष्टकायाः घनहस्तमानम् ३/१६ चितेः क्षेत्रफलम्४० । उच्छ्रयेण ३गुणितं चितेर्घनफलम् १२० । यथोक्तकरणे लब्धा इष्टका सङ्ख्या २५६० । स्तरसङ्ख्या २४ । एवं पाषाणचयेऽपि ‘व्यासात् षोड़शभागः सर्वेषां सद्मनां भवति भित्तिः । पक्वेष्टकाकृतानां दारुकृतानां च स विकल्पः । इ०क०स०। “नेष्टकारचिते पितृन् संतर्पयेत्” शङ्खलि० । “मृण्मयान् कोटिगुणित फलं स्याद्दारुभिः कृतात् । कोटिकोटिगुणं पुण्यं फलं स्यादिष्टकामये” मठ०त० पु० । वास्तुयागे ‘आकाशपदे’ इष्टकारोपाचारः वास्तुयागशब्दे दृश्य ।

**इष्टकाचयन** न० इष्टकयाऽग्नेश्चयनम् । इष्टकया अग्नेश्चयने तत्प्रकारः कात्या०श्रौ०सू०।“एतया त्रिकत्याभिमन्त्र्य केऽन्यचितं चिन्वन्ति द्रोणचिद्रथचक्रचित्कङ्कचित्प्रउगचिदुभयतःप्रउग समुह्य पुरीषः” ,६,५,८ । “एते ह्यग्निविशेषाः तदाकाराश्चिन्वन्त्येके एके सुपर्णचितम् त्रिलिङ्गत्वादस्या त्रिकतेरग्न्यन्तरेष्वप्राप्तिर्मा भूदित्युच्यते एवं हि श्रूयते “तं हैकएतया त्रिकत्याभिमन्त्र्यान्यां चितिं चिन्वन्तीति” ( ६,७,२,८ शत०ब्रा० ) क०। “त्रिकत्या एतया ऋचा अन्यचितं षड्विधमन्यमग्निं चिन्वन्ति तमेवाह द्रोणचिदित्यादि” संप०। “समुह्य पुरीषे प्रतिदिश पुरोवाहरणम्” १० सू० । प्रतिदिशं पुरीषमाहृत्याहृत्य तेनैव चयनम्” क० । “विष्णुक्रमान् क्रमते विष्णो-

रिति" (१२,५ यजु०) "प्रतिमन्त्रमग्न्युद्यमनं च तस्मिं-स्तस्मिन्" ११ सू० । "तस्मिन् क्रमणे" क० । "अक्रम-णतुर्थे" १२ सू० । "उद्यमनं तु भवत्येव" क० । दिशो वीक्षते दिशोऽनुविक्रमस्वेति (१२,५) १३ सू० "प्रतिदिशं मन्त्रः" क० । "पितृवत्प्राङुदङ् प्रत्यङ्क्राम्यक्रन्ददग्नि-रिति" ( १२,६ ) १४ सू० । पितृवदित्यूर्ध्वबाहुः (३,८) क० । "अवरोहत्यग्नेऽभ्यावर्तिन्निति" ( १२,७ ) १५ सू० "प्रत्यवरोहत्यग्निम् यावत्कृत्व ऊर्ध्वोऽवरोहतीति" (६,७,२,६) "श्रुतेस्तावत्प्रत्यवरोहणम्" कर्कः । "उपरि-नाभि धारयन्ना त्वाहार्षमित्यभिमन्त्रयते" (१२,११) १६ सू० । "अग्निम्" क० । "प्राञ्चा उन्मुच्योदुत्तममिति" (१२,१२) "पितृवत्प्राग्दक्षिणा प्रत्यङ्क्राम्यपो दृहन्निति" (१२,१३) १७ सू० । "अदहरति हंसः शुचिषदिति" (१२,१४) । १८ सू० । "आसन्द्यां करोति दृहदिति" ( १२,१४ ) १९ सू० । "उपतिष्ठते सीद त्वमिति" (१२,१५) २० सू० । "वात्सप्रेण च दिवस्परीत्येकादशभिः" (१२,१८,२८) २१ सू० । "उपतिष्ठते" क० । "अनुवाकेनैके" (१२,१८,२९) २२ सू० । "उपतिष्ठन्ते" क० । "अत्र दीक्षितोऽयमिति" २३ सू० । "कस्मिन्नवसरे दीक्षितोऽयमित्याह (७,४,११) "इष्टान्ते ह्युखाधिश्रपणाद्यु क्रमम् अतः प्राकृतानुवचन-मिदमुच्यते" क० । "आहिताग्नेः संवत्सरम्" २४ सू० । "अत ऊर्ध्वं यदुच्यते तत् संवत्सरं यावदावर्तते" क० । "अत ऊर्ध्वं यत्कर्मोच्यते भस्मोद्वपनादि तस्य संवत्सरं यावदाहिताग्निर्भवति" संप० । ५ कण्डिका

"उखाया भस्मोद्वपनमस्तमिते पात्रे" १ सू० । "तस्य प्राग्वाग्विसर्गात्" "भस्मोदुह्य वाचं विसृजत" इति श्रुतेः (६,७,४,१३) क० । "भस्मोद्वपनं भस्मोद्धरणम्" संप० । "वाचं विसृज्य समिदाधानं रात्रौ रात्रीमप्रयावमिति" (११,७५) २ सू० । "एवमुदिते भस्मोद्वपनादि" ३ सू० । "कर्तव्यम् अयं तु विशेषः" क० । "अहरहरित्याधानम्" (११,७५) ४ सू० । "विष्णुक्रमवात्सप्रे चाहव्यन्त्यासमुदिते समिधमाधाय" ५ सू० । "अहव्यन्त्यासेन कर्तव्ये" क० "अर्कान्त्रिमे विष्णुक्रमाः उत्तरस्मिन्वात्सप्रम् एवं याव-द्दीक्षं कर्तव्यम्" संप० । "रुक्मप्रतिमोचनादि प्राग्वात्स-प्राद्विष्णुक्रमाः" ६ सू० । "तयोर्विभागमाह । साग्निके क्रतौ संवत्सरं दीक्षा आम्नाताः संवत्सरमित्युपक्रम्य चिन्वीतेति (१०,२,६,९) पक्षिमे गवतो दीक्षा आम्नाताः पक्षितयदद्दीक्ष इति (१५,१,४) तत्राग्नौ सति चिन्य-ते किमग्निनिमित्ता दीक्षा भवन्तु उत सौमिक्य इति उभयं चैतच्चरितार्थम् पक्षिताद्वहिराग्निक्यचरितार्था: अनग्निके च पक्षिते सौमिक्य इति तेन साग्निमति प-क्षिते कथं भवत्विति नियमकारणाभावादनियमे प्राप्त आह" क० "सोमाविरोधेन वा तत्प्रधान्यात्" ७ सू० । "सोमस्य प्रधानभूतत्वात् तदीया एव दीक्षा भवन्ति" क० "सोमयागेनाविरोधः सोमाविरोधः तेनाविरोधेनैव दीक्षा भवति वावधारणे कुतः तत्प्रधान्यात् सोमस्य प्राधान्यात् अग्नेश्च तदङ्गत्वात् तेन द्वादशाहे वाजपेये द्वादश सप्त-दश वा भवन्ति नाग्निप्रयुक्तसंवत्सरदीक्षाः" संप० । "व्यक्त समिधं व्रते प्रसे-प्रसेऽप्यपतस्याधानम् । (११,८३) ८ सू० "उख्येऽग्नौ यजमानः करोति" संप० । "संव-त्सरभृतिनोऽसंवत्सरभृतेऽपि" ९ सू० । पूर्वं कश्चि-च्चिदस्य साग्निके येनैकवारं संवत्सरमुख्योऽग्निर्भृतो भवति स संवत्सरभृतो तस्यासंभृतेऽप्युख्येऽग्नौ चयनं भवति ( ९,५,१,६५ ) संप० "संवत्सरं सोष्यतः" १० सू० । "संवत्सरमभिषवं करिष्यतः असंवत्सरभृतेऽपि चयनं भवति (९,५,१ ६६) क० । "संवत्सराहिताग्नेः" ११ सू० । "असंवत्सरभृतेऽपि चयनमिच्छते" (९,६,१,६७) क० । "जातस्य च" १२ सू० । "संवत्सरे जातस्य च असंवत्-सरभृतेऽपि चयनं भवति" ( ९,५,१,६८ ) क० । "गर्भाधानदिनादारभ्य संवत्सरे पूर्णेऽतीते वा यो जात-स्तस्य भवति" संप० । "षाण्मास्यमन्त्यम्" १३ सू० । "अन्त्यं जघन्यमिदं पक्षान्तरम् षण्मासानुख्यभरणं कृत्वा-ग्निश्चीयत इति (९,५,१,६२) क० । "षाण्मास्यं षण्मासा-नुख्यमग्निं भृत्वा चयनं भवति" संप० । "अचयनं वा परस्मै" १४ सू० । चयनं वेति विकल्पः एवं हि श्रूयते (९, ५,२,१२) लयो ह वै" इत्युपक्रम्य परस्मै करोतीति निन्दार्थवादः प्रतिषेधार्थः तस्मादप्येवंवित् नाम परस्मा अग्निं चिनुयादिति ९,५,२,१३, प्रतिप्रसवः अतः प्रतिषेधप्रतिप्रसवाभ्यां विकल्पः" संप० । "प्राग्नः कालो-स्यस्योत्तरतः समिदाधानं समिधाग्निमिति (१२,३०) १५ सू० । "उख्यपुरतः प्राङ्मुखमनः कालोऽस्यैव समिदाधा-नम्" क० । "आसन्दीकमुद्यम्योदुत्तमेति (१२,३१) दक्षिण-तोऽनसि करोति" १६ सू० । "आसन्दीकमुख्यमुद्यत्वोत्-क्षिप्यानसो दक्षिणतोऽवस्थितोऽनसि करोति" कर्कः । "स्थाल्यां गार्हपत्यं पश्चात्" १७ सू० । "अनसि करोति दक्षिणाग्निं च द्वितीये करोति" क० । "अनडुहो युक्ता

द्वोखां करोत्याहृता" ९सू० । "उखासम्भवमेकमुखायां प्रक्षिप्तम् द्वितीयमुपशयया सह पिष्ट्वा, आहृता मन्त्रवर्जम्, आहृतशब्देन क्रियामात्रमुच्यते तथा चोक्तम् ( ६,६,४, २ ) एतयैवाहृतानुपहरन् यजुरिति" क० । "आहृता मन्त्ररहितेतिकर्त्तव्यतया" संग्र० । "पक्वायामावपति कपालं च १०सू० । "पक्वायामुखायाम् अग्निं कपालं च" क० । 'उखोपशये पिष्ट्वा संसृज्य निदधाति' ११सू० । "उखाकपालमुपशयया च पिष्ट्वा संसृज्य स्थापयति" क० ।

इदानीं चयनप्रकारमाह । अध्यात्मं "इयमकुपयिष्य" १२सू० । "आत्मन आभिमुख्येन चयनं कर्तव्यम् न पराग्गिति, तथा च नैर्ऋतीषु वचनात्पराक्चयनमुक्तम् (७, २,१,१२) । अपरो विशेषः" "सव्यबाहुमन्तरं कृत्वोत्तरलक्षणाभिरिष्टकाभिः" १३सू०" । "चेतव्यः" क० । "नित्ये सादनसूददोहसाउपधानादुत्तरे तया देवतया ता अस्येति (१२, ५३, ५५,) १४सू० । "सर्वास्विष्टकासु एते नित्ये भवतः तया देवतयेति सादनम् ता अस्येति सूददोहसाधिवदनम्" क० । "अविशेषोपदेशात्" १५सू० । "अविशेषेण ह्यनारभ्य कञ्चिदिष्टकाविशेषमेते श्रूयेते" क० । "विशेषमनुपादाय सामान्येन तयोरुपदेशात् विधानात्" संग्र० । "अनाम्नातप्रतिषेधाच्च" १६सू० । "यत्र नैर्ऋत्यादिषु नाम्नायेते नित्ये संहितायां न पठ्येते तत्रापि प्रतिषेधः श्रूयते ( ७,१,१,१४ ) सादनसूददोहसाधिवदतीति" "अतः प्रतिषेधात् सर्वत्राप्येते भवतः" संग्र० । "एकनोदनास्वेकदेशासु तन्त्रेण" १७सू० । एकनोदना अपस्या वयस्या इत्येवमादि, एकनोदना अपि यद्येकदेशा भवन्ति, यथा तासामेव देशभेदः अपस्याः पञ्च पञ्चान् कान्तेषु इति ( ७,६,२ ) अतश्च प्रत्यनूकं नित्ये, देशभेदे त्वसति तन्त्रेणेति" क० । "एकनोदना एकं विधिवाक्यं यासां ताः । एको देश एकमुपधानस्थानं यासां ताः तत्र तन्त्रेण नित्ये भवतः" संग्र० । "आत्मनि यजुष्मतीः" १८ सू० । "इष्टका उपदधाति न पक्षपुच्छयोः" क० (८,७,२,२) । लोकम्पृणासु दशसु दशसु मन्त्रो लोकं पृणेति ( १२, ५४ ) । (९,१,२१२) १९सू० । "आसादनं च" २०सू० । लोकं पृणानाम्, सूददोहसाधिवदनं तु भवति अप्रतिषिद्धत्वात्" क० । 'प्रतिचितिं द्वे-द्वे उपधाय' २१सू० । लोकं पृणामन्त्रवचनम्, पुनर्दशसु दशसु । "प्रथमं द्वे-द्वे उपधाय ततो दश-दशोपदध्यात्' संग्र० । "अयुग्मगणमध्यमानूके" २२सू० । अयुग्मो य इष्टकागणो यथा वालखिल्याः सप्त तासां मध्यमानूके उपधेये" क० । "त्रिपञ्चसप्तादिगणः" संग्र० । "एका च" २३सू० । "या चैकेष्टका साप्यनूक एव, यथा विश्वज्योतिर्हि यजुष्मत्येवमादि" क० । "अभितो युग्माः" २४सू० । "अनूकमभितोऽर्धार्धिकया युग्मा उपधीयन्ते" क० । "उदञ्चो वर्गाः पूर्वापरे" २५सू० । "यत्र पूर्वापरइति देशव्यपदेशः तत्रोदग्लक्षणा इष्टकावर्गा उपधीयन्ते" क० । "तिर्यगनूकमभितोऽक्ष्णयार्धाधिके पूर्वापरे देशे इष्टकानां वर्गाः समूहाः उदग्लक्षणा उपधेयाः" संग्र० । "प्राञ्चो दक्षिणोत्तरे" २६सू० । "यत्र तु दक्षिणोत्तरव्यपदेशः तत्र प्राग्लक्षणा इति" क० । "प्रागनूकमभितोऽक्ष्णायार्धाधिके दक्षिणोत्तरे प्राञ्चः प्राग्लक्षणाः उपधेयाः" संग्र० । "भिन्नकृष्णयोरचयनम्" (८,७,२, १६ ) २७सू० । 'दीक्षाणामुत्तमेऽहनि वेद्याग्निमानम्' २८सू० । "कर्त्तव्यम्" क० । "उत्तरस्यामेऽर्धव्यामेन गार्हपत्यस्य परिलिखति" २९सू० । "मण्डलमिति शेषः' क० । "मण्डलाद्वा प्रक्रमणमन्तःपात्यस्य" ३०सू० । "पूर्वार्धाद्व्यामस्य त्रीन् प्राचः प्रक्रमान् प्रक्रामतीति वचनात् (१०,२,३,१) । 'पूर्वार्धादेव व्यामस्य प्रक्रमणम् न तस्माद्धि प्रक्रमणमनग्नौ चरितार्थम्" क० । "सावधारण, मण्डलादेवान्तःपात्यस्य क्रमणम् न पूर्वार्धात् तस्मात्" संग्र० । "पश्चाद्यूपावस्थानादमात्रे त्रिलस्य" ३१सू० । यूपावटे भवः शङ्कुर्यूपावटः तस्मात्पश्चात् पद्यालोकमात्रे चित्यस्याग्निक्षेत्रस्य स्थानं भवति" संग्र० । "यजमानेनोर्ध्वबाहुप्रपदोच्छ्रितेन समस्थितेन वा" ३२सू० । ( १०, २,२,६ ) । "प्रपदोच्छ्रितः पादाग्रे व्यवस्थितः समस्थितः प्रसिद्ध एव, तत्क्रियायामोदितत्वात्प्रक्रमणावदध्वर्युर्मा भूदिति यजमानग्रहणम्" क० । ७कण्डिका ।

"द्विपुरुषां रज्जुं मित्वा" १सू० । "द्विपुरुषां रज्जुं मित्वेति निगदे व्याख्यातम्" । "उभयतःपाशाम्" २सू० । "मध्ये लक्षणम्" ३सू० । "अभितोऽर्धपुरुषयोश्च" ४सू० । "मध्यमात्लक्षणात् पुरुषपञ्चमे" संग्र० "अर्धे च" ६सू० । "पुरुषपञ्चमस्यार्धे" क० । "अनुपृष्ठ्यामायम्य पाशयोः शङ्कू मध्येऽर्धपुरुषयोश्च" ७सू० । "पाशावन्मुच्यार्धपुरुषीययोः प्रतिमुच्य दक्षिणायाम्य मध्यमे नितोदं करोति" ८सू० । "गर्तम्" संग्र० "उन्मुच्य पाशावेकं मध्यमे प्रतिमुच्य दक्षिणाधिनितोदमायम्य मध्यमे शङ्कुः" ९सू० । "तस्मिन् पाशं प्रतिमुच्य पूर्वार्धे च दक्षिणायम्य मध्यमे शङ्कुः"

१०सू० । "पश्चादर्धपुरुषे च" ११सू० । "उन्मुच्य पूर्वार्द्धात् पश्चार्धे प्रतिमुच्य दक्षिणायस्य मध्यमे शङ्कुः" १२सू० । "अभितोऽर्धपुरुषयोश्च" १३सू० । "एवमुत्तरोऽन्तः" १४सू० । "दक्षिणे पार्श्वे पूर्ववदायस्य पञ्चमभागीये शङ्कुः" १५सू० । "तस्मिन् पाशं प्रतिमुच्य पूर्वे चार्धपुरुषीये पञ्चमभागीयार्धपुरुषीययोः सन्निपात्य तस्मिञ्छङ्कुः" १६सू० । "एवं पश्चात्" १७सू० । "एवमुत्तरः पक्षः" १८सू० । "तथा पुच्छं वितस्त्या" १९सू० । इच्छन् पक्षपुच्छाप्ययेषु चतुरङ्गुलं चतुरङ्गुलं संकर्षति विकर्षन्त्यन्ते" २०सू० । "यत्र पक्ष आत्मानमप्येति स पक्षाप्ययः एवं पुच्छाप्ययः । अप्ययेषु पक्षयोः पुच्छस्य च आत्मसन्धिसमीपे चतुरङ्गुलं चत्वारि-चत्वार्यङ्गुलान्युभयोः पार्श्वयोः सङ्कर्षति सङ्कोचयति, तथा अन्ते पक्षपुच्छप्रान्ते उभयोः पार्श्वयोः चतुरङ्गुलं विकर्षति विस्तारयति" संप० । "पञ्चारत्निः पुरुषो दशपदो द्वादशाङ्गुलं पदं प्रक्रमस्त्रिपदं समविभक्तस्य" २१सू० । "पञ्चारत्नयोः यस्य सः पञ्चभिररत्निभिः पुरुषः दशभिः पदैः पुरुषो द्वादशभिरङ्गुलैः पदम् इत्येवमर्थो न भवति इतः प्रागरत्न्यादीनां लक्षणस्यानुक्तत्वेनासिद्धत्वात्, अतएवम् पुरुषस्य समविभक्तस्य यः पञ्चमो भागः सोऽरत्निः तस्य दशमो भागः पदम्, पदस्य द्वादशो भागोऽङ्गुलम् त्रिभिः पदैरेकः प्रक्रमः इति तु भवति पदस्य सिद्धत्वात्" क० । "परितत्य रज्ज्वा सच्छितं बहीरज्ज्वेकषष्टे शते परिश्रितो मिनोति" २२सू० । "रज्ज्वा परितत्य सर्वतोवेष्टयित्वा रज्ज्वाबहिर्भागे सच्छितं रज्जुसंलग्नं यथा भवति तथा एकषष्ट्यधिके द्वे शते परिमिनोति" क० "चतुर्णवतानि वा त्रीणि" २३सू० । चतुर्नवत्यधिकानि त्रीणि शतानि" क० । "ऊर्ध्वाः शर्कराः शाते" २४सू० । "उत्तरेषु पुरुषीयेष्वेकशतविधात्" २५सू० । "उत्तरेषु अष्टविधादिषु चयनेषु आ एकशतविधात् एकशतविधचयनं यावत् एकाधिकशतपुरुषात्मकपञ्चनवतितमचयनपर्य्यन्तम् पुरुषीयेण एकैकपुरुषवृद्ध्या अग्निमानं भवति तस्माद् सप्तविधमेव प्रथमं विदधीतेति" (१०,२,३,१८) क० "यथाग्निवेदीष्टकाप्रमाणम्" २६सू० । वेदिश्च इष्टकाश्च वेदीष्टकाः तासां प्रमाणं वेदीष्टकाप्रमाणम् तद्यथाग्नि भवति, अग्निमानमनतिक्रम्य यथाग्नि, यथाग्निक्षेत्रस्य प्रमाणं वर्द्धते तथा वेदिप्रमाणं वर्धते इष्टकाप्रमाणं च वर्द्धते, न हि वेदिवृद्धिं विना तन्मध्ये वर्धितस्याग्नेर्मानं सम्भवति, नापि इष्टका न वर्धिता वर्धितमग्निक्षेत्रं पूरयितुं शक्नुवन्ति, अतः युक्तमुभयोर्वृद्धिः" क० । "अन्तःपात्यगार्हपत्ययोरिच्छन्" २७सू० । "पर्वोर्धाद्यामस्य त्रीन् प्राचः स वेद्यन्तः प्रक्रम प्रक्रमति" (१०,२,३,१) यः प्रक्रमत्रयपरिमितो देशः सोऽन्तःपात्य उच्यते, तस्यान्तःपात्यस्य गार्हपत्यस्य गार्हपत्यचितेश्च इच्छन् इच्छया वृद्धिं कुर्य्यात् इच्छया न कुर्य्यात् तद्वैकउत्तरा" श्रुतेः (१०२,३,६) क० । "उत्तरपक्षस्यापरस्यां स्रक्त्यां परिश्रितो मिनोति जङ्घामात्रीं नाभिमात्रीं मुखमात्रीमिति" २८सू० । "अग्नेरुत्तरपक्षस्यापरस्रक्त्यां पश्चिमकोणे एवम्प्रमाणास्त्रिस्रः परिश्रितो मिनोति" क० । अत्रसर्व्वत्र चतुरङ्कैः शतपथब्राह्मणाध्यायादि बोध्यम् । त्रिभिः कातीयश्रौतसूत्राध्यायादि द्वाभ्यां शुक्लयजुर्वेदाध्यायादि तेन तत्तत्स्थाने अत्रोक्तप्रतीकयुक्तमन्त्रमूलवाक्यादिकं दृश्यमिति सङ्केतज्ञापनम् । विस्तरस्तु शतपथब्राह्मणे लिखिताङ्कसूचिताध्यायादौ दृश्यः ।

**इष्टकापथ** न० इष्टकायामपि पन्था यस्य अच् समा० इष्टकापथं यस्याधोमुखवायुकरणात् । १वीरणमूले । इष्टकया निर्मितः पन्था अच् समा० । इष्टकानिर्मिते २पथि पु० ।

**इष्टकाव** त्रि० इष्टका अस्त्यर्थे व । इष्टकायुक्ते ।

**इष्टकावत्** त्रि० इष्टका+चतुरर्थ्यां मध्वादि० मतुप् मस्य वः । इष्टकासन्निकृष्टदेशादौ स्त्रियां ङीप् ।

**इष्टगन्ध** पु० कर्मधा० । १सुगन्धौ । इष्टोगन्धोऽस्य । २सुगन्धिद्रव्ये त्रि० ३वालुकायां न० मेदि० ।

**इष्टतम** त्रि०अतिशयेन इष्ट+तमप् । १प्रियतमे २अतिशयाभीष्टे "मद्भ्यदिष्टतमं लोके" गीता । द्वयोर्मध्ये अतिशयेन इष्टः तरप् । इष्टतरः द्वयोर्मध्ये अतिशयेन इष्टे त्रि० ।

**इष्टदेव** पु० इज्यते यज-कर्मणि क्त कर्मधा० । १पूज्ये देवे तन्त्राद्युक्तविधानेन यस्य मन्त्र उपास्यतया गृहीतस्तस्मिन् २देवे च । इष्टदेवतादयोप्यत्र स्त्री ।

**इष्टनि** त्रि० यज–तनिक् संप्र० इष–तनिक् वा । १यष्टव्ये २एष्टव्ये च । "तुविष्वणिरप्नतोपूर्वैरासिष्टनिराकेमा स्विष्टनि." ऋ० १,१२७,६ । "इष्टनिरेष्टव्यो यष्टव्यो वा" भा० । [व्याकरणोक्तसंस्कारानुसारेण प्रयोगे ।

**इष्टप्रयोग** पु० इष्टस्य शिष्टप्रयुक्ततया निश्चितस्य प्रयोगः ।

**इष्टवत्** न०यज–इष वा क्तवतु स्त्रियां ङीप् । १यजनकर्त्तरि २इच्छायुक्ते च । 'इष्टं वेदाध्ययनादिः साध्यतयाऽस्त्यस्य मतुप् मस्य वः । ३इष्टकर्म्म कर्त्तरि । वेदे तु पूर्व्वपददीर्घः इष्टावान् "इष्टावन्तोरातिषाचोदधानाः" अथ० १८,३.

२० । "इष्टिभिः पशुबन्धैश्च चातुर्मास्यैस्तथैव च । अग्निष्टोमादिभिर्यज्ञैर्येन चेष्टं स इष्टवान्" व्यासोक्ते ४इष्ट्यादिकारिणि त्रि०। स्त्रियां ङीप् ।

**इष्टव्रत** त्रि० इष्टं व्रतं यस्य । १व्रतयोगे इष्टानि कल्याणानि व्रतानि कर्म्माणि सिध्यन्ति येन । २इष्टकर्म्मसाधने अन्नादौ "इष इष्टव्रता अकः" ऋ० २,५६,६ । "इष्टानि कल्याणानि व्रतानि कर्म्माणि याभिः सिध्यन्ति ता इषः अन्नानि" भा० ।

**इष्टसाधन** न० ६त० । अभीष्टसाधने इच्छाशब्दे उदाहृतिः । ततो भावे त्व । इष्टसाधनत्व तद्भावे न० । तल् । इष्टसाधनता तद्भावे स्त्री ।

**इष्टा** स्त्री इज्यतेऽनया यज—करणे वा० क्त । शमीवृक्षे राजनि० तत्समिधा होज्यते इति तस्याः तथात्वम् कर्म्मणि क्त । अभिमतायां स्त्रियाम् ।

**इष्टाकृत** त्रि० अनिष्टमिष्टं कृतम् इष्ट+च्व्यर्थे डाच् कर्म्मणि क्त । इष्टीकृते "सतामिष्टाकृतं नाम पूर्वावरसहस्रिकम्" रामा० ।

**इष्टादि** पु० "इष्टादिभ्यश्च" पा० सूत्रेण तत्तत्कम्मनेनेत्यर्थे विहितेनिप्रत्ययनिमित्तभूतशब्दसमूहे स च गणः । "इष्ट पूर्त उपसादित निगदित परिगदित परिवादित निकथित निषादित निपठित संकलित परिकलित संरक्षित परिरक्षित अर्चित गणित अवकीर्ण आयुक्त गृहीत आम्नात श्रुत अधीत अवधान आसेवित अवधारित अवकल्पित निराकृत उपकृत उपाकृत अनुयुक्त अनुगणित अनुपठित व्याकुलित" आकृतिगणस्तेन "हठेन पठिती साङ्गिन् सत्तः सेवत" नैष० ।

**इष्टापत्ति** स्त्री ६त० कर्म्मधा० वा । १इष्टस्यापत्तौ इष्टाख्यापत्तौ च वादिना दर्शितापत्तेः प्रतिवादिन इष्टत्वेहि सा भवति । "इष्टापत्तौ दोषान्तरमाह" जग० ।

**इष्टापूर्त्त** न० इष्टं च पूर्त्तञ्च द्वयोः समाहारः पूर्वपददीर्घः । इष्टशब्दोक्ते अग्निहोत्रादौ "वापीकूपतडागादिदेवतायतनानि च । अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते" इति मनूक्ते पूर्त्ते च । "वितथन्तु वदेयुर्ये धर्मं प्रह्लाद पृच्छते। इष्टापूर्त्तञ्च ते घ्नन्ति सप्त सप्तपरावरान्" भा० स० ६६अ० । "इष्टापूर्त्तेन च तथा वक्तव्यमनृतं न तु" भा०प०१८५अ०।"इष्टापूर्त्तफलं न स्यात् शिष्यो न गुरुर्भवेत्" भा०व०२२अ० । क्वचित् इतरेतरद्वन्द्वोऽपि द्वि०व० । "इष्टापूर्त्ते संसृजेथामयञ्च" यजु० १०,५४।

**इष्टार्थोद्युक्त** त्रि० इष्टे अर्थे उद्युक्तः । उत्सुके इष्टार्थलाभाय त्वरमाणे कालासहिष्णौ ।

**इष्टाश्व** त्रि० इष्टोऽश्वोयस्य । १प्रियहये २राजभेदे पु० । "किमिष्टाश्व इष्टरश्मिरेतः" ऋ०१,१२२,१३ । "इष्टाश्व एतन्नामको राजा" भा० ।

**इष्टि** स्त्री यज—क्तिन् । १यागभेदे । स च कात्या०श्रौ०सू० दर्शितः "कर्मशब्दो द्रव्यदेवतायुक्तो यजतिः"। ४,२,१,सू० "क्रियाशब्दः आख्यातप्रत्ययान्तो निर्वपत्यादिशब्दो यजतिः प्रत्येतव्य यागो ध्येय इत्यर्थः न निर्वापाभ्यादिरूपसंस्कारमात्रविधायकः यजतिशब्दोऽत्र तदर्थयागपरः । एवं यागत्वे सिद्धेऽपि इदं संदिह्यते सौर्यं चरुं निर्वपेदग्निषोमीयमजमालभेतेत्यादौ किं यागमात्रं भवति उत धर्मा अपि भवन्तीति यदा च धर्मा भवन्तीति पक्षस्तदापि संदेहः किं पूर्णाहुतिसम्बन्धिनो धर्मा भवन्ति उताग्निहोत्रसम्बन्धिनः, आहोस्विद्दर्शपूर्णमासयोः, अथवा ज्योतिष्टोमस्येति, अथवा दर्शपूर्णमासयोरेवेति, । धर्माणामनाम्नानाद्यथाश्रुतं यागमात्रं कर्तव्यमिति प्राप्ते आह" क०"दर्शपूर्णमासधर्मा इष्टिपशुषु सामर्थ्यात्" २सू०। सौर्यादौ धर्मा भवन्ति न यागमात्रम् एवमेतानि विधिवाक्यानि समर्थान्यर्थवन्ति सप्रयोजनानि भवन्ति अन्यथा साकाङ्क्षत्वादर्थप्रतिपादनाभावेन निरर्थकान्येव स्युः । तथा हि सौर्येण यागेन ब्रह्मवर्चसं भावयेदित्यत्रांशत्रयवती भावना विधीयते किम्, केन, कथमिति, किमंशो ब्रह्मवर्चसम्, तत्र केनांशः सौर्येणेति, कथमंशस्तु वाक्यमध्ये नास्ति तेन कथं भावयेदिति वाक्यं कथमंशसापेक्षम् । यत्र सापेक्षं भवति तदध्याहारेणानुषङ्गेण वा पूरयित्वा निराकाङ्क्षं कर्तव्यम् । अन्यथा तस्यानर्थक्यापत्तेः न च वेदे मात्रामात्रस्य तदिष्यते तस्मादत्र निराकाङ्क्षीकरणाय शिष्यन्तेतिकर्तव्यतापरपर्यायः कथमंशोऽत्र कश्चिदनुषञ्जनीय इति सिद्धे आह "दर्शपूर्णमासधर्म्मा इष्टिपशुषु सामर्थ्यादिति" सर्वासु इष्टिषु अग्नीषोमीये पशौ च दर्शपूर्णमासयोरेव धर्मा भवन्ति सामर्थ्यात् पूर्वोक्त एव हेतुरत्रापि योज्यः। दर्शपूर्णमासधर्मा एव सौर्यादिविधीनां शेषीभवितुं समर्थाः चरुपुरोडाशादयो ह्यवघातादिभिरेव सिध्यन्ति नाभिमर्शादिभिरिति। इष्टिपशुष्विति इष्टिषु सर्वासु अग्नीषोमीये पशौ च पश्वन्तरेषु ह्यग्नीषोमीयधर्मा भवन्ति" क० । इत्यारभ्य पञ्चविंशत्या सूत्रैरवधिना उक्तस्तत्र विस्तरेणावसेयः । तथा च दर्शपौर्णमासेतिकर्तव्यताको यागभेद इष्टिरग-

न्तव्या । तत्करणप्रकारः आश्वला० श्रौ० सूत्रे दर्शितो “यथा पौर्णमासेनेष्टिसोमा उपदिष्टाः” । २,१,१, प्रथमेऽध्याये दर्शपूर्णमासौ व्याख्यातौ विध्यन्तरसहितौ । उत्तरत्रेष्टयः पशवश्च वक्ष्यन्ते विध्यन्तरविहिताः । तेषां विध्यन्तरापेक्षास्ति” “अतोऽयमर्थः सूत्रस्य, यस्मिन्काण्डे उपदिष्टा इष्टयः पशवश्चापि अविशेषिताज्यभागास्ते सर्वे वार्त्रघ्नाज्यभागा इति”। “पौर्णमासेनेत्यस्यायमर्थः, पौर्णमासेन व्याख्याता इति वार्त्रघ्नाज्यभागा इत्यर्थः । तेन समाम्नातानामिष्टीनां पशूनाञ्च अन्यदेवतागमभावः सिद्धो भवति । तथा चोक्तमिष्ट्ययनप्रकरणे “असमाम्नातास्वर्थात् तन्त्रविकारः” नारा० वृत्तिः तस्य कालस्तत्रैव दर्शितः यथा “तैरमावास्यायां पौर्णमास्यां वा यजेत” सू० २,१,२, “तैरिष्टिपशुसोमैरमावास्यायां पौर्णमास्यां वा यागः कर्त्तव्य इति इष्टिपशूनां प्रकृतिप्राप्त एवायं कालः पुनर्विधीयते द्व्यहकालतां निवर्त्य सद्यस्कालताप्राप्त्यर्थम् । किञ्च दर्शप्रकृतेरमावास्या पौर्णमासप्रकृतेः पौर्णमासीत्येवं नियमं निवर्त्य अनियमेन उभयकालताप्राप्त्यर्थम् । प्रकृत्यविरोधात् पर्वसन्ध्यहोरात्रे विकृतिः कर्त्तव्या । यद्यह्नः पूर्वभागे पर्व स्यात् तदा प्रकृतिं कृत्वा विकृतिः कार्या । यदा परभागे रात्रौ वा तदा विकृतिं कृत्वा प्रकृतिः कार्य्येति सोमस्याप्राप्तः कालो विधीयते । इष्ट्यादिशब्दसम्बन्धादेव यजेतेत्यपि सिद्धे यजेतेतिवचनं सोमस्य याग एवानयोः कालयोः सम्पादनीयो नान्यत् दीक्षादीति” वृत्तिः । “राजन्यस्याग्निहोत्रं जुहुयात्” ३सू० । “क्षत्रियस्याग्निहोत्रहोमः पर्वणोरेव कर्त्तव्यो नान्यस्मिन् काल इति यथाह वैश्योऽप्यनयोरेव कालयोरग्निहोत्रं जुहुयात् नान्यस्मिन्नित्यवगम्यते । अत्र विशेषमाह” वृत्तिः । “तपस्विने ब्राह्मणायेतरं कालं भक्तमुपहरेत्” ४सू० । “तपस्वी कर्म्मनिरतस्तस्मै ब्राह्मणाय अतपस्विनेऽपि ब्राह्मणायैव दद्यात् न जात्यन्तराय तपस्विनेऽपीति । इतरं कालमिति, इतरेषु सर्वेष्वग्निहोत्रकालेष्वित्यर्थः । भक्तमुपहरेत्, भक्तं पक्वोदनं पक्वान्नमुपहरेत्, दद्यात् । एतदुक्तं भवति । राजन्यवैश्ययोः पर्वस्वग्निहोत्रकालद्वयं वर्जयित्वा इतरेषु कालेषु ब्राह्मणायोदनो दातव्यो न होमः कर्त्तव्य इति । अग्निधारणन्तु क्रियत एव” वृत्तिः । ततोऽग्न्याधानं प्रसङ्गादुक्तं तच्चाधानशब्दे पूर्वं दर्शितम् अग्न्याधानोत्तरं कर्त्तव्यमाह “यदि त्विष्टपशुः” २,१,१८, सू० “अग्नीनेवेति वाक्यशेषः । यद्यनधिकारत्वादाधानविधेर्विनियोजकस्य प्रकरणस्य व्यापारासम्भवादाधानाङ्गमिष्टयो न स्युः, इष्टीनामनधिकारत्वादिष्ट्यङ्गमाधानं न स्यात्, तथापि न कश्चिद्दोषः, अन्यथात्वेनैवोभयोरप्यनुष्ठानसिद्धेः” । “अयमर्थः सूत्रयोजना । यद्याधानमिष्टीनामाधानाङ्गता स्यात् तथापि आहवनीयाद्यग्निसम्बन्धात् तानेवाग्नीनिष्टयस्तनुयुः विस्तारयेयुः कुर्युः साधयेयुरित्यर्थः । तुशब्दस्तु साधनादिषु विशेषं दर्शयति । आधानेऽग्नीनां साध्यत्वेन सम्बद्धानामेव साध्यत्वम् । इष्टिषु साधनत्वेन सम्बद्धानामपि कल्पनागौरवभयात् साध्यत्वमिति विशेषं स्पृहणीमः एवं यद्याधानेनेष्टिभिश्चाग्नय एवांशतः साध्या इत्यनधिकाराणां कथमनुष्ठानसिद्धिरिति न्यायविदामेव उपालम्भो नास्माकम् । अस्माकं तु साध्यसाधनसम्बन्धेऽवगते तद्दर्शिनां कर्तृत्वेनावगतानां ब्राह्मणादीनां कथञ्चिदधिकारकल्पनयानुष्ठानसिद्धिः । अथवाऽनधिकाराणामनन्यशेषाणामपि तत्साधनसाध्यरूपेणोपकारकत्वेन कामं श्रुतिप्रयुक्त्यैवंविधानामनुष्ठानसिद्धिरित्यलमतिविस्तरेण” नारा० वृत्तिः । ““प्रथमायामग्निरग्निः पवमानः” १९ सू० । “प्रथमायामिष्टौ द्वे देवते । अग्निः प्रथमः केवलः । द्वितीयः पवमानगुणकोऽग्निः । केवलस्याग्नेर्नित्ये एव । “अग्न आयूंषि पवसेऽग्ने पवस्व स्वपाः” २०सू० । “एते द्वितीयस्य पवमानगुणकस्य” वृ० । ‘स हव्यवाडमर्त्योऽग्निर्होता पुरोहित इति स्विष्टकृतः संयाज्ये इत्युक्ते सौविष्टकृती प्रतीयात्” २१सू० । “सौविष्टकृत्योर्याज्यानुवाक्ययोर्वचनेन संयाज्ये इति संज्ञा विधीयते” वृ० । ‘सर्वत्र देवतागमे नित्यानामपायः” २२ सू० । “सर्वत्रेति प्रकरणान्तरेऽपीति दर्शयति । देवतागम इत्यत्र समासनिर्देशस्य तुल्यत्वाद्देवताया देवतयोर्देवतानां वा आगम इत्येवं भवति । नित्यानां प्राकृतीनामित्यर्थः । अपाय उद्धार इत्यर्थः । एतदुक्तं भवति । विकृतौ देवताया एकस्या आगमे द्वयोर्बह्वीनां वा अनागमेऽपि प्राकृतीनां सर्वासामुद्धार इति । यां पुनर्विकृतौ इष्टिचोदनां कृत्वा देवतां न विदधाति, तत्र नोद्धारः प्राकृतीनाम् । तत्र ता एव देवता भवन्तीत्यर्थः । यथा नदितः सोमेन पशुना इष्ट्या वा इत्यादौ” वृ० । ‘याः स्विष्टकृदन्तराज्यभागौ च तास्तत्स्थाने” २३सू० । “नित्यानामपाय उक्तः । तत्र किं सर्वा नित्या उद्धर्त्तव्याः उत काश्चिद्देवतेत्येतं संशयं निवर्त्तयति या आज्यभागौ स्विष्टकृतं चान्तरा देवता यष्टव्यास्ता उद्धर्त्तव्याः । याः पुनर्विकृतौ विहितास्तास्तत्स्थाने उ-

कृतानां प्राकृतीनां स्थाने भवन्ति” इति वचनात्, तद्व- र्भिकाश्च भवन्तीति गम्यते” इ०। “एष समानजातिधर्मः” २४ सू०। “योऽयमतिदिष्टो विधिर्देवताभ्योऽन्यत्रापि स समानजातीयेषु भवति । समानजातीय एककार्य इत्यर्थः” इ० । “द्वितीयस्यां दधन्वन्तौ अग्निः पावकोऽग्निः शुचिः स नः पावकदीदिवोऽग्ने पावकरोचिषाग्निः शुचिव्रततन उदग्ने शुचयस्तव” २५ सू०। “एकः पावकगुणकोऽग्निः, अपरः शुचिगुणकः । “साक्षान् विश्वा अभियुजोऽग्निमीळे पुरोहितमिति संयाजे तृतीयस्यां सामिधेन्यावावपते प्राग- पोत्तमायाः पृथुपाजा अमर्त्य इति द्वे” २६ सू०। “आवपते इति वचनात् अधिके एते सामिधेन्यौ भवतः । प्रथ- मायां द्वितीयस्यां तृतीयस्यामिति वचनात् यस्यामिष्टौ यत् तन्त्रं विहितं तस्यामेकदेवतायामपि तत् तन्त्रं भवति न यथोक्तमानादेवतायामेवेति” इ०। “धाय्ये इत्युक्त एते प्रतीयात् पुष्टिमन्तावग्निना रयिमश्नवद्वयस्मानो अभीवर्धेति । अग्नीषोमाविन्द्राग्नी विष्णुरिति वैकल्पिकानि” २७ सू०। “त्वयाणामेको गृह्यते” इ० । “अदितिः” २८ सू० । अदितिश्चान्या, अस्या द्वे देवते” इ० । “उत त्वामदिते सुव्रतानामृतस्य पत्नीमवसे हुवेम तुविक्षत्रामजरन्तीमुरूचीं महि महीमूषु मातरं सुधर्माणमदितिं सुप्रणीतिम्” २९ सू०। “एषा कल्पजा” इ०। “प्रेद्धो अग्न इमो अग्न इति संयाज्ये विराजावित्युक्त एते प्रतीया- दिति तिस्रः” ३० सू०। “इत्येतास्तिस्र इष्टयोऽनु- क्रान्ता इत्यर्थः । उक्तानुकीर्त्तनमुत्तरार्थम् । यदाद्योत्तमे वैव स्यातामाद्या वेति पक्षस्तदापि तिसृणामिष्टीनां याव- त्यो देवतास्ताः सर्वा यष्टव्या इत्येवमर्थं म । आद्योत्तमपक्षे मध्यमायां ये देवते ते आद्यायामेव प्रक्षेप्तव्ये । यदा पुन- राद्यैव तदा सर्वा देवता आद्यायामेव प्रक्षेप्तव्या इत्येव- मर्थम्” इ० । “आद्योत्तमे वैव स्याताम्” ३१ सू० । “इष्टी इति शेषः । “आद्या वा” ३२ सू० । “आद्यैव- वेष्टिर्भवतीत्यर्थः” इ०। “तथा सति तस्यामेव धाय्ये विराजौ” ३३ सू० । “यद्याद्यैव भवति तदा द्वितीय- तृतीययोरपि देवतास्तत्र भवन्तीत्युक्तम् । अतस्तस्यामेव धाय्ये विराजौ भवतः । धाय्याविराजामनुप्रवेशस्य निमित्तं तृतीयस्या इष्टेर्देवतानुप्रवेश इत्येवमर्थं तथा सतीत्युक्तम्” इ०। “इतिमात्रे विकारे वैराजतन्त्रेति प्रती- यात्” ३४ सू० । “पौर्णमासतन्त्रायामिष्टौ धाय्याविराण्- मात्रे विकारे [illegible]

‘आधानाद् द्वादशरात्रमजस्राः” ३५ सू० । “अत्रा- धानमिष्टीसोक्ता आधानादूर्द्धं द्वादशरात्रमजस्रा इत्यु- क्तम् । तस्यायमभिप्रायः, यावता कर्मसमुदायेनाग्नीनां सिद्धिर्भवति तावतः कर्मसमुदायस्याधानशब्दो वाचक इति ज्ञापयितुम् । तेनाग्न्याधेयं पुनराधेयं वैश्यस्य चैष्टिकस्या- धानस्य यक्षणं भवतीति सिद्धम् । आधानेनेष्टिभिश्च सिद्धाग्नयो द्वादशाहोरात्राणि सर्वे स्वरूपेणैव धार्यन्ते । एतदजस्रधारणमग्निहोत्रपर्व एवाधाने भवति, अग्नि- होत्रस्यैवानन्तरमुच्यमानत्वात् । अनुष्ठानक्रमेणैव कर्मणां व्याख्यानमित्युक्तत्वाच्च” इति । एवमिष्टिसामान्यं प्रदर्श्य विशेषेष्टयस्तत्र दर्शिताः तत्रादौ नवशस्येष्टिः साग्राग्रायण- शब्दे दर्शिता तत्र राज्ञ एवाधिकारः त्रयाणां वर्णानाम- विशेषेणेतिकल्पद्वये प्राप्ते राज्ञो विशेष उच्यते “इष्टिस्तु राज्ञः” “सर्व्वेषां चैके एके सर्वेषामिष्टिरेवेति मन्यन्ते” २,८,६,७, । “श्यामाकेष्वग्रासौम्यचरुः स च वर्षन्तौ तत्र याज्यादिक २,८,८,९,१०, सू०उक्तम् । अन्यमवाद्यभोज- ने जप्यमन्त्रादिकमुक्तम् ११, ३ । एतानित्या इष्टयः अथ काम्याः इष्टय २,१०,१२, कृलादौ । तत्र आयुष्कामे- ष्टिस्तत्र अग्निगणभेदजीवातुमद्देवता २,१०,२ ३,४, सू०। स्वस्त्ययनेष्टि रक्षितवद्देवताका तत्र याज्यादिकम् ५,६,७, पुत्रकामेष्टिः पुत्रवद्गुणकाग्निदेवताका तत्र याज्यादि ८,९, १०, वैमृधेष्टिः विमृद्गुणकेन्द्रदेवताका तत्र याज्यादिकं १२,१४,१५, सू०।आग्नेयीराष्ट्रपालदेवताका तत्र याज्या- दिकम् १७,१८, सू० । लोकेष्टिः पृथिव्यन्तरिक्षदेवताकः तत्र याज्यादिकम् २०,२१,२२, सू० मित्रप्राप्ति- कामेष्टिः अग्निसोमवरुणमित्रेन्द्रबृहस्पतिसवितृपूषन् सरस्वतीदेवताका तत्र याज्यादि १,२,३,४,३ । इयमिष्टिः महावैराजीनामा । अभिचारकामेष्टिः सुपाग्निर्रायनाग्नि- शूरगुणकेन्द्रदेवताका तत्र याज्यादि ११,७,८,९ । विमत- सम्मतिकामेष्टिः संज्ञानी नाम वसुरुद्रादिगुणकाग्निसोमादि चतुष्टयदेवताका तत्र याज्यादि १०,११ । भेदकामेष्टिः । इन्द्रामरुद्देवताका तत्र याज्यादि १२,१४,१५,१६, सू० । सम्पत्तिकामेष्टिः ऐन्द्रामारुती संज्ञानीवत् याज्यादिकम् । १७,सू० । शत्रुभिभवनिवृत्तिकामेष्टिः ऐन्द्रायाहस्पत्या तत्र याज्यादि १८१९ सू०। पवित्रेष्टिः । अग्न्यादिदेव- ताका तत्र याज्यादि २,१२,१ । “वैश्वानरीं व्रातपतीं पवित्रेष्टिं तथैव च । ऋताष्टतौ प्रयुञ्जानः पुनाति दशपौ- [illegible]

नानादेवताका अग्निदेवताका या तत्र याज्यादि २,२,१,२,४,५,६,७,८,९,सू० । सर्वाश्च एता दर्शपौर्णमासेतिकर्तव्यताकाः । पशुगुणके कर्म्माणि पशोरुभयतोऽन्यतरतो वा पशुकामेष्टिः सा च आग्नेयी आग्नावैष्णवी वा आश्व० श्रौ०सू० २,१,२,२,४ सू०। तस्यामितिकर्त्तव्यतायाज्यादि तदुत्तरसूत्रजातैरुक्तम्। विध्यपराधप्रायश्चित्तीष्टिः २,१०,१,सू० विध्यपराधस्वरूपकारणप्रदर्शनपूर्वकं तत्करणप्रकारादि तदुत्तरसूत्रजातैर्दर्शितम्। वारुणीष्टिः तत्प्रकारादि २,१२,५, प्रातःकालातिपत्तौ प्रातरिष्टिः तत्र देवतादि २,१२,१२, आग्नावैष्णवं च सवेष्टिः २,१२,१५ निमित्तभेदेष्वं प्रायश्चित्तेष्टौ देवताभेदादि २,१२,१६, आरभ्य आध्यायात् सूत्रैरुक्तम्। आसन्नमरणीयेष्टिः तद्देवतादि ४,१,२१ २६ सू०। दीक्षाप्रयोजनेष्टिः दीक्षणीया नाम तत्र देवतादि ४,२,१,१८, सू०पर्य्यन्तेनोक्तम्। प्रायणीयेष्टिः तत्र देवतादि ४,३,सूत्रादौ। आतिथ्येष्टिः तत्र देवतादि ४,५,१सूत्रादौ। उदयनीयेष्टिः तद्देवतादि ६,१४,१, सूत्रादौ उदवसनीयेष्टिः तद्देवतादि ६,१४,२२, सूत्रादौ। अन्याः पुनराधेयेष्टिप्रभृतयोऽपि इष्टयः विस्तरभयान्नोक्ता आकरेषु द्रष्टव्याः।

शत०ब्रा० १,६,२,१२, इष्टिकरणप्रकारविशेषो दर्शितः यथा। "स यदीष्टिं कुर्व्वीत सम्प्रदत्त सामिधेनीरनुब्रूयादुपांशु देवता यजति तद्धीष्टिरूपं, मूर्द्धन्वती याज्यानुवाक्ये स्यातां वार्त्रघ्नावाज्यभागौ विराजौ संयाज्ये" "अग्नेरिष्टिमभिधाय अथ पृथक् प्रयोक्तव्याया आग्नेय्येष्टेर्वैशेषिकमङ्गजातमाह। यदीष्टिं दर्शपूर्णमासाभ्यां पृथगेव कुर्व्वीत प्रधानदेवता उपांशु यजेत तदुपांशुत्वं काम्येष्टिरूपं खलु। मूर्द्धन्वत्यौ "अग्निर्मूर्द्धा" "भुवो यज्ञस्य रजसः" (यजु० १३,१४,१५,) मूर्द्धन् शब्दवत्यौ प्रधानस्य याज्ये स्विष्टकृद्याज्यापुरोऽनुवाक्ये, विराजौ विराट्छन्दस्के "प्रेद्धो अग्ने" "इमो अग्ने" इत्येते (यजु० १७,७६ ७७,) भवतः" भा०

दर्शपौर्णमासयागं कृत्वा प्रायश्चित्तेष्टिः कार्य्या तत्प्रकारः शत०ब्रा० ११,१,२,१, दर्शितो यथा। "पौर्णमासेनेष्ट्वा इन्द्राय विमृधेऽनुनिर्वपति तेन यथेष्ट्यैवं यजतेऽथामावास्येनेष्ट्वा अदित्यै चरुमनुनिर्वपति तेन यथेष्ट्यैवं यजते १। स यत्पौर्णमासेनेष्ट्वा इन्द्राय विमृधेऽनुनिर्वपतीन्द्रो वै यज्ञस्य देवता यैतदग्नीषोमीयं पौर्णमासं हविर्भवति तत्र नेन्द्राय त्वेति किं चन क्रियते एतेनो हास्यैतत् सेन्द्रं हविर्भवत्येतेन सेन्द्रो यज्ञोऽथ बहिर्धेव त्वेति सर्वो उ हि वृधो नाष्ट्राः पौर्णमासेन हन्ति ३। अथ यदामावास्येनेष्ट्वा अदित्यै चरुमनुनिर्वपत्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमा स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्ददृशे तेनैतदनन्नेव हविर्भवति तेनाप्रतिष्ठितमिव वै पृथिव्यदितिः सेयमद्दा सेयं प्रतिष्ठिता तेन हास्यैतदन्नेव हविर्भवत्येतेन नाप्रतिष्ठितमेतत्र तद्यस्मादनुनिर्वपत्यथ तस्मादनुनिर्वपेत् ४। स यत्पौर्णमासेनेष्ट्वा इन्द्राय विमृधेऽनुनिर्वपति सैन्द्रो मे यज्ञोऽसदिति सर्वो वै यज्ञ इन्द्रस्यैव स यत्सर्वो यज्ञ इन्द्रस्यैवैतेनो हास्यैतत् सैन्द्रं हविर्भवत्येतेन सैन्द्रो यज्ञः ४। अथ यदामावास्येनेष्ट्वा अदित्यै चरुमनुनिर्वपत्यामावास्यं वा अनुनिर्वाप्यं पौर्णमासेन वा इन्द्रो वृत्रमहंस्तस्मा एतद्वृत्रं जघ्नुषे देवा एतद्धविरनुनिरवपन् यदामावास्यं किमनुनिर्वाप्योऽनुनिर्वपेदिति तस्मान्नानुनिर्वपेत् ५। स यत् पौर्णमासेनेष्ट्वा अथान्यद्धविरनुनिर्वपत्यामावास्येनेष्ट्वाथान्यद्धविरनुनिर्वपति द्विषन्तं ह स भ्रातृव्यं प्रत्युच्छ्रयतेऽथ यः पौर्णमासेनैव पौर्णमासीं यजतऽमावास्येनामावास्यामसपत्ना हैवास्यानुपबाधा श्रीर्भवति ६। पौर्णमासेन वै देवाः पौर्णमासीं यजमाना आमावास्येनामावास्यां क्षिप्रएव पाप्मानमपाघ्नत क्षिप्रे प्राजायन्त स यो हैवं विद्वान् पौर्णमासेनैव पौर्णमासीं यजतऽमावास्येनामावास्यां क्षिप्रएव पाप्मानमपहते क्षिप्रे प्रजायते स यद्यनुनिर्वपेद्व्याहृत्यैवां नादक्षिणं हविः स्यादिति ह्याहुर्दर्शपूर्णमासयोर्ह्येवैषा दक्षिणा यदन्वाहार्य्य इति अनुनिर्वाप्यस्याथाभ्युदितस्य ७" २ कण्डिका। "अद्यामावास्येति मन्यमान उपवसति। अथैष पश्चाद्ददृशे स एष दिव्यः श्वा, स यजमानस्य पशूनभ्यवेक्षते तदुपतप्यं स्यात् प्रायश्चित्तिकृत एतस्माद्धैतद्भीषा चन्द्रमसादिति" १। वायव्याद्युपसर्पन्ति। एतेनो हैतदुपतपदाचक्षते अत्यन्तचिन्त्यमित्येतस्य हैवैतदाचक्षते २। यथचान्द्रमस इति। चन्द्रमा वै सोमो देवानामन्नं तं पौर्णमास्यामभिषुण्वन्ति सोऽपरपक्षेऽप ओषधीः प्रविशति पशवो वा अप ओषधीरदन्ति तदेनमेतां रात्रिं पशुभ्यः संनयति ३। सोऽद्यामावास्येति मन्यमान उपवसति। अथैष पश्चाद्ददृशे तद्यजमानो यज्ञपथादेति तदाहुः कथं कुर्य्यादित्या यज्ञपथाद्यजेतार न यजेतार इति यजेत हैव न ह्यध्वरपक्रमणं भवति स एवैष व्यायानुदेति स आमावास्यविधेनैवेष्ट्येष्टिमनुनिर्वपति तद्दक्षिणैव स्यो वा ४। तस्य त्रीणि हवींषि निर्वपन्ति। अग्नये पथिकृतेऽष्टाकपालं पुरोडाशम्, इन्द्राय वृत्रघ्ने एकादशकपा-

जम, अग्नये वैश्वानराय द्वादशकपालं पुरोडाशम् ५। स यदग्नये पथिकृते निर्वपति। अग्निर्वै पथः कर्ता स यस्मादेवाटो यजमानो यज्ञपथादेति तमेनमग्निः पन्थानमपादयति ६। अथ यदिन्द्राय वृत्रघ्ने। पाप्मा वै वृत्रो यो भूतेर्वारयित्वा तिष्ठति कल्याणकर्मणः साधोस्तमेतदिन्द्रेणैव वृत्रघ्ना पाप्मानं वृत्रं हन्ति तस्मादिन्द्राय वृत्रघ्ने ७। अथ यदग्नये वैश्वानराय द्वादशकपालं पुरोडाशं निर्वपति यत्र वा इन्द्रो वृत्रमहंस्तमग्निना वैश्वानरेण समदहत्तदस्य सर्वं पाप्मानं समदहत्तथोएवैष एतदिन्द्रेणैव वृत्रघ्ना पाप्मानं वृत्रं हत्वा तमग्निना वैश्वानरेण संदहति तदस्य सर्वं पाप्मानं संदहति स यो हैवं विद्वानेतयेष्ट्या यजते न हास्याल्पश्चन पाप्मा परिशिष्यते ८। तस्यै सप्तदश सामिधेन्यो भवन्ति। उपांशु देवता यजति याः कामयते ता याज्यानुवाक्याः करोत्यनमाज्यभागावेव संयाज्ये ९। तिसृधन्वं दक्षिणां ददाति। धन्वना वै श्वानं बाधन्ते तदेतमेवैतद्बाधते यत्तिसृधन्वं दक्षिणां ददाति १०। दण्डं दक्षिणां ददाति। दण्डेन वै श्वानं बाधन्ते तदेतमेवैतद्बाधते यद्दण्डं दक्षिणां ददात्येषा न्वाहिष्टा दक्षिणा दद्यात्त्वेवाश्वामप्यन्यद्यादितरा दक्षिणास्तासां यत् सम्पद्येत सा सा ह्येषा पशव्येष्टिस्तयाप्यनभ्युदृष्टो यजेतैव” ४ क०। “दर्शयागे पुरस्ताच्चन्द्रदर्शनप्रायश्चित्तेष्टिरुक्ता अथ पश्चाच्चन्द्रदर्शने नैमित्तिकामिष्टिं विधित्सुराह। अथानन्तरं सायंकाले एष चन्द्रमाः पश्चात् प्रतीच्यां दिशि दृश्ये दृश्यते। अभ्यवेक्षते अभ्यवहर्तुं पश्यति यथा शालावृको वने संचरतो मेषादीन् पशूनभ्यवजिघ्रोषति। एतस्मादेव खलु चन्द्रसम्बन्धिस्वरूपेण पूर्वोक्तवत् त्वकारः समासान्तः तस्माच्चन्द्रादिति भीषा उक्तरूपया भीत्या, छायारूपगच्छन्ति गवाद्याः पशवः तिरोहिता यजमानस्य भवन्तीत्यर्थः पशूनामुपतापकारि यदेतच्चन्द्रदर्शनं तत् खलु चित्तं शुना त्रिकोडितमित्याचक्षते २। एतमेव चन्द्रगतं दोषमेवमाचक्षते, चन्द्रमसः सम्बन्धी तस्माद्वनमध्यवर्त्ती शश इति अत एव तस्य शशाङ्क इति प्रसिद्धिः। उपवसथकाष्ठां गतं देशान्तरूपं चन्द्रमसं पौर्णमासीकाले पूर्वाकुर्वन्ति। पशव ओषधीर्जग्ध्वा अपश्च पीत्वात्मनि तं चान्द्रमसं कृत्स्नं रसममावास्याया धारयन्ति तत एनं रसममावास्यासम्बन्धिन्यां रात्रौ पशुभ्यः सकाशात् संनयति सम्यक्प्रापयति। तत्सनयनं प्रतिपच्चन्द्रदर्शने सति नोपपद्यते। ३दर्शयागस्यातिक्रान्तकालत्वे दोषरूपस्यास्य तन्त्रानुष्ठानप्रकारमाह।

प्रकृतो दर्शयागः शीघ्रं समापनीयः अनन्तरमेवैतद्दोषपरिहाराय प्रायश्चित्तेष्टिः कर्त्तव्या। स आमावास्यविधेनैवेति यथोदितकालेऽनुष्ठितोऽमावास्यायागस्तत्प्रकारेणैव प्रतिपदि प्रक्रान्तां दर्शेष्टिं समाप्य ४। अथास्यामिष्टौ प्रकृतिवद्विकृतिः कर्त्तव्येति नोदकप्राप्तेष्वङ्गेषु विशेषं विधत्ते। प्रकृतौ पञ्चदश अत्र नोदकप्राप्तास्ताः पृथुवाजवत्यौ धाय्ये द्वे इति सप्तदश (सामिधान्यः) भवन्ति। प्रकृतौ प्रधानयागे उच्चैर्धर्मः। प्रकृतदेवतालिङ्गयुक्तास्ततः षष्ठ्यां दाशतय्यां समाम्नाता या ऋचतास्कामयते। आज्यभागयोः स्विष्टकृद्यागे च याथाकाम्यम् ८। तिसृभिरिषुभिर्युक्तं धनुः तिसृधन्वम् पूर्ववदकारः समासान्तः। एतं चन्द्रात्मकं दिव्यं श्वानम् १०। अदृश्यमानचन्द्रेऽपि” ११ भा०

“इष्टीः पार्वायणान्तीयाः केवला निर्वपेत् सदा” मनुः “प्राजापत्यां निरूप्येष्टिम्”। “हेमन्ते नवशस्येष्ट्या” मनुः “आरेभिरे जितात्मानः पुत्रीयामिष्टिमृत्विजः” रघुः। २“यागमात्रे च “कर्त्तुमिष्टिमभियाच्छता मया” माघः राजसूययागाभिप्रायमिदम्। इष–क्तिन्। ३इच्छायाम्। इष्टप्रयोगनिर्वाहाय पातञ्जलभाष्यकृतः इच्छाबोधके ४श्लोकाद्यात्मक वाक्यभेदे च। यथा। “द्विपर्य्यन्तानामेवेष्टिः” सर्वनाम्नोवृत्तिमात्रे पुंवद्भाव” इत्यादि। एतयेष्ट्या “ठक्छसोश्च” वार्त्ति० “एकतद्धिते चेति” सूत्रस्य गतार्थम् सि०कौ०। “अनुत्सूत्रपदन्यासेति” माघव्याख्यायाम् अनुत्सृष्टसूत्राक्षरा इष्ट्युपसंख्याननैरपेक्ष्येण सूत्राक्षरैरेव” इति मल्लि०।

**इष्टिका** स्त्री इष–तिकन्। इष्टकाशब्दार्थे “उद्धर्षणं त्विष्टिकया कण्डूकोठविनाशनम्” सुश्रु०। “इष्टिका काञ्चनी चात्र चयनार्थं कृताऽभवत्” भा० आश्व० ८८अ०।

**इष्टिकापथिक** न० इष्टिकायाः पथिकं तदुद्देशेनापि प्रभवत्वात्। नामव्यञ्जकतृणे राजनि०।

**इष्टिकृत्** त्रि० इष्टिं यागं कृतवान् कृ–भूते क्विप् ६त०। कृतयागे।

**इष्टिन्** त्रि० इष्टमनेन इष्टा० इनि। कृतयागे “अध्वरेष्विष्टिनां पाता” भट्टिः।

**इष्टिपच** पु० इष्टये इच्छायै अभिलाषार्थं पचति न यज्ञाय पच–अच्– ६त०। १कृपणे २दैत्ये च शब्दर०। स हि स्वेच्छापूरणार्थमेव पचति न यज्ञार्थमिति तस्य तथात्वम्।

**इष्टिपशु** पु० ६त०। यज्ञिये पशौ। त्रिका०।

**इष्टिमुष्** त्रि० इष्टिं यागं मुष्णाति मुष–क्विप् ६त०। दैत्ये।

**इष्ट्यायजूक** पु० इष्ट्या यायजूकः। “काम्येष्टियजनशीले। “तस्मादिष्ट्यायजूकः स्यात् पशुभ्यः एवं प्रायच्छत्” पृ०उ०।

इष्टियाजुकः इष्टियजनशीलः इष्टिशब्देन काम्या इष्टयः शातपथप्रसिद्धाः ताच्छील्ययोगात्काम्येष्टियजनप्रधानो-न स्यात्” भा० ।

**इष्टीकृत** त्रि० अनिष्टमिष्टं कृतम् इष्ट+च्वि-कृ-कर्म्मणि क्त । अनिष्टे इष्टे कृते । अनिष्टिरिष्टिः कृता । इष्टिभेदे सत्रे न० । “सत्रमिष्टीकृतं नाम समुपास्ते महातपाः” भा०व०२५६अ० ।

**इष्टु** स्त्री इष-भावे तुन् । इच्छायाम् उणादिकोषः ।

**इष्ट्ययन** न० इष्ट्यायनं गमनं यत्र । “यागविशेषाचरणभेदे” इष्ट्ययनश्च आश्व० श्रौ०२,१४, सूत्रादौ दर्शितं यथा “अत ऊर्द्धमिष्ट्ययनानि” १।“अत ऊर्द्ध्वं यानि वक्ष्यन्तेऽस्मिन् अध्याये तानि इष्ट्ययनसंज्ञानीति विद्यात् । इष्टिभिरयनं गमनं येषु कर्मसु तानीष्ट्ययनानि” नारा०वृ० । “सांवत्सरिकाणि”२सू० ।“संवत्सरेण क्रियन्ते संवत्सरैश्च क्रियन्त इत्युभयथा विग्रहः कर्त्तव्यः, दाक्षायणयज्ञचातुर्मास्यानामनेकसांवत्सरिकत्वसिद्ध्यर्थम् वृ० ।“तेषां फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा प्रयोगः”३सू० ।“फल्गुनीभिर्युक्ता पौर्णमासी फाल्गुनी, चित्रया युक्ता चैत्री । तेषां सांवत्सरिकाणां आगन्तुकानामस्मिन् काले प्रारम्भः कार्यः । दर्शपूर्णमासगुणविकाररूपाणां दाक्षायणयज्ञादीनामारम्भे कालनियमो नास्तीति तेषामित्युच्यते” नारा०वृ० । “तुरायणम्” ४सू० ।“तुरायणं नामेष्ट्ययनमुच्यते” वृ० ।“अग्निरिन्द्रो विश्वेदेवा इति पृथगिष्टयोऽनुसवनमहरहः” ५सू० ।“अग्निदेवत्या इन्द्रदेवत्या विश्वदेवदेवत्या चैतास्तिस्र इष्टयः त्रिषु सवनेषु यथासङ्ख्येन एकैकेष्टिः कार्याऽहन्यहनि । अहरहरिति वचनं पौर्णमास्यमावास्ययोर्बाधनार्थम्” वृ० । “एका वा त्रिहविः” ६सू० “एताभिरेव देवताभिर्युक्ता एकैवेष्टिस्त्रिहविष्काऽहन्यहनि प्रातः सवन एव कर्त्तव्या नेत्यर्थः” वृ० । “इडादधो नामेष्ट्ययनं तत्र देवतादि २ १४ १-१०” द्यावापृथिव्योरयनं नामेष्ट्ययनं तत्र देवतादि २,१४,१२,१५” “चातुर्मास्यानि इष्ट्ययनानि तद्देवतादि २,१५,१ सूत्रादौ । एवमन्यान्यपि इष्ट्ययनकर्म्माणि आकरे दृश्यानि

**इष्ट्वा** अव्य० यज-क्त्वा । १यागं कृत्वेत्यर्थे । “अश्वमेधेन चेष्ट्वा” महकर्कटकम् । इष-क्त्वा । २अभिलष्येत्यर्थे च ।

**इष्म** पु० इष्यति इच्छत्यनेन वा इष-गतौ इष-इच्छायां मक् वा । १वसन्तकाले २कामे च भावे मक् ।३गतौ । तत अस्त्यर्थे इनि । इष्मिन् गतियुक्ते त्रि० स्त्रियां ङीप् ।“हे वायोमरुत इष्मिणो अभीरवः” ऋ० १,२७,६। “इष्मिणः गतिमन्तः” भा० । इष-इच्छायां कर्म्मणि मक् ।४इष्यमाणे अन्नादौ अस्त्यर्थे इनि अन्नादिमति “हिरण्ययाः स्वायुधास इष्मिणः” ऋ०५,८, ७५। इष्मिणोऽन्नवन्तः” भा० ।

**इष्य** पु० इष्यते इष-क्यप् । वसन्ते ऋतौ हेम० । तस्य ऋतूनां मध्ये इष्टतमत्वात्तथात्वम् “ऋतूनां कुसुमाकरः” गीतायां तस्य भगवद्रूपत्वोक्तेः इष्टत्वम् ।

**इष्व** पु० इष-सर्पणे वन्-गुणाभावः । आचार्य्ये उपदेशार्थम् पद्यमानत्वात्तथात्वम् । उज्ज्वलदत्तस्तु ईष दाने इत्यस्यैव रूपं दीर्घादि इत्याह । उपदेशदानाच्च तस्य तथात्वम् ।

**इष्वग्र** न० ६त० । बाणाग्रे । गहादिपाठात् भवादौ छ । इष्वग्रीय तच्छब्दादौ त्रि० । [इष्वनीकीय तच्छब्दादौ त्रि० ।

**इष्वनीक** न० ६त० । बाणावयवे । गहा० भवादौ छ ।

**इष्वसन** पु०इषवोऽस्यन्ते क्षिप्यन्तेऽनेन अस-क्षेपे करणे ल्युट् ६त० । धनुषि ।“राममिष्वसनदर्शनोत्सुकम्” रघुः ।

**इष्वास** पु० इषवोऽस्यन्तेऽनेन अस-क्षेपे करणे घञ् ६त० । १धनुषि “अत्र शूरा महेष्वासा भीमार्ज्जुनसमा युधि” “काश्यश्च परमेष्वासः शिखण्डी च महारथः” गीता । अर्द्धर्चादिपाठात् क्लीवत्वमपि । इषून् अस्यति अस-अण् उप०स० । २शरक्षेपके त्रि०(तीरन्दाज) मेदि० ।

**इस्** अव्य० इं काममु स्यति सो-क्विप् नि० आलोपः । १सन्तापे २कोपे ३दुःखानुभवे च शब्दर० ।

**इह** अव्य० इदम्+ह इशादेशः । अस्मिन् काले देशे दिशि वा १इत्यर्थे “एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन” श्रुतिः “इह जन्मनि जन्मान्तरे वा” वे०सा० । “नेह नामुत्र किञ्चन” “नेहाभिक्रमनाशोऽस्ति” गीता । “तदखिलमिह भूतं भूनगत्या जगत्याः” नैष० । प्रथमार्थे ह । २अनुभूयमाने लोके इहामुत्रार्थफलभोग विरागः वेदा० सा० च इहकालः । इह भवः विदितो वा कर्म्मा० ठञ् । ऐहिक इहभवे इहविदिते च त्रि० । “ऐहिकमप्यनुपतें दीक्षादिनिषेधात्” सु०त०रघु० । [मानकाले ।

**इहकाल** पु०इदम्+प्रथमार्थे ह इह कर्म्म० । एतत्काले वर्त्त-

**इहतन** त्रि० इहभव ट्युल् तुट् च । इहभवे स्त्रियां ङीप् ।

**इहत्य** त्रि० इह भवः इह+त्यप् । इहकालादिजाते । स्वार्थेकन् । इहत्यक तत्रार्थे स्त्रियां नित्यमित्त्वम् । इहत्यिका

**इहद्वितीया** स्त्री मयू०स० । अत्रत्य द्वितीयायाम् ।

**इहपञ्चमी** स्त्री । मयू०स० । अत्रत्यपञ्चम्याम् ।

**इहल** पु० इहः भवं लाति ला-क । चेदिदेशे त्रिका० तद्वासिनि ब०व० ।

**इहलोक** पु० इदम्-प्रथमार्थे ह कर्म्म० । एतल्लोके मनु-

ल्युट् । स्तोत्रवर्द्धनीये इन्द्रदेवे । "त्वं हि स्तोमवर्द्धन इन्द्रास्युकथवर्द्धनः" ऋ०८,१४,११। "उक्थैः शस्त्रैर्वर्द्धनीयः" भा० । इन्द्रस्य यथा उक्थवर्द्धनीयत्वं तथोक्तं "उक्थमिन्द्राय शंस्यं वर्द्धनं पुरुनिष्षिधे" ऋ० १,१०,५, "इन्द्रायेन्द्रार्थं वर्द्धनं वृद्धिसाधनम् उक्थं शस्त्रम्" भा०

**उक्थवाहस्** पु० उक्थानि शस्त्राणि वहति वह—असुन् णिच्च । शस्त्रपाठके विप्रे "यं विप्रा उक्थवाहसोऽभिप्रमं दुरायवः" ऋ० ८,१२,१३, । उक्थवाहसः उक्थानां शस्त्राणां वोढारः" भा० ।

**उक्थशंसिन्** पु० उक्थानि शस्त्राणि शंसति शन्स—णिनि । शस्त्रस्तावके ऋत्विग्भेदे "नयसीति द्विषः कृणोष्युक्थशंसिनः" ऋ० ६,४५, ६ । स वीरं धत्त अग्न उक्थशंसिनं त्मना सहस्रपोषिणम्" ऋ० ८, १०३, ४ ।

**उक्थशस्** पु०उक्थं शस्त्रं शंसति क्विप् । शस्त्रस्तावके । उक्थशाःशब्दे उदा०।पदकाले सर्व्वत्र तस्य ह्रस्वमध्यपाठः । स च छान्दसो ह्रस्व इति माधवः । क्विप् प्रत्ययेनैवोपपत्तौ न छान्दसत्वमित्यन्ये । "तस्मादुकथशं भूयिष्ठं परिचक्षते" शत०ब्रा० । १०,५,२,५ ।

**उक्थशास्** पु० उक्थानि शंसति शन्स—णिच् नि० नलोपः उप० स० । शस्त्रशंसके । "शुचीदयन्दीधितिमुक्थशासः" ऋ० ४,२,१६ । "अस्य पदकाले ह्रस्वश्छान्दसः" माधवः।"नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति" ऋ०१०,८२, ७ । "नरः शंसन्त्युक्थशास उक्था" ऋ०७,१६,६ ।

**उक्थशुष्म** त्रि० उक्थं शस्त्रं शुष्मं बलं यस्य । उक्थरूपबलयुक्ते स्तवादिवाक्ये "समुद्रं न सिन्धव उक्थशुष्मा उरुव्यचसम्" ऋ० ६,३६, ३ ।"उक्थशुष्मान् वृषभरान्त्स्वप्रसस्तां" ऋ० १०,६३,३ ।

**उक्थादि** पु०६त०। तदधीते वेत्ति वेत्यऽर्थे विहित-ठक्प्रत्ययनिमित्ततया पाणिन्युक्ते शब्दसमूहे स च गणः "उक्थ लोकायत न्याय न्यास पुनरुक्त निरुक्त निमित्त द्विपद ज्योतिष अनुपद अनुकल्प यज्ञ धर्म्म चर्च्चा क्रमेतर श्लक्ष्ण संहिता पद क्रम संघट्ट वृत्ति परिषद् संग्रह गण गुण आयुर्वेद तन्त्रायुर्वेद" । "उक्थं सामविशेषस्तल्लक्षणपरो-ग्रन्थविशेषोलक्षणया तदधीते वेद वा औक्थिकः मुख्यादुक्थशब्दाट्ठगणौ नेष्येते" सि०कौ० ।

**उक्थामद** न०उक्था होत्रया माद्यति मद—अच् । उक्थासाधने स्तोमभेदे "अग्निर्यजुर्भिः सविता स्तोमैरिन्द्र उक्थामदैर्वृहस्पतिश्छन्दोभिः" काठसं० "वृहस्पतिरुक्थामदानि शंसिषम्" ऐत० ।

**उक्थावी** त्रि० उक्थानि अवति अव—ई । शस्त्रस्तावके "इहद्यते वयस्त उक्थाव्यं ग्रहणामि" यजु०७,२२ ।

**उक्थाशस्त्र** न०उक्था होत्रा च शस्त्राणि च द्वन्द्वः । होत्रायाम् ऋचि शस्त्रे च । "छन्दोभिरुक्थाशस्त्राणि साम्नावभृथ आप्यते" यजु० १६,२८ ।

**उक्थिन्** पु० उक्थं स्तुत्यतयाऽस्त्यस्य उकथ+इनि । १शस्त्रस्तावके होत्रादौ ।"प्र वामर्च्चन्त्युक्थिनो नीथाविदोजरितारः" ऋ० ३,१२,५, "उक्थं शस्त्रं तद्वन्तः शस्त्रिणो होत्रादयः" भा० । "तदद्याचित्त उक्थिनोऽनुष्टुवन्ति पूर्व्वथा" ऋ० ८,१५, ६, । उक्थं स्तोत्रसाधनतयाऽस्त्यस्य इनि । २शस्त्रस्तुत्ये इन्द्रादौ ।"हिरण्यपर्णमुक्थिनं रशनां बिभ्रत वशिं भगमिन्द्रं वयोधसम्"यजु० २८,३२ उक्थं शस्त्रं संस्काराङ्गसाधनतयाऽस्त्यस्य इनि । ३शस्त्रसाध्ये संस्कारयुक्ते सोमादौ । "तुभ्येदिन्द्र ! मरुत्वते सुताः सोमासो अद्रिवः हृदा हूयन्त उक्थिनः" ऋ० ८,७६,८ । "उक्थिनोऽन्या होत्रा उक्थिनःशस्त्रवन्तः सोमाः अनुक्था अन्याः" ऐत० ।

**उक्थ्य** त्रि० उक्थमर्हति यत् । शस्त्रस्तुत्ये देवादौ । "इन्द्रः सहस्रदाव्नां वरुणः शंस्यानां क्रतुर्भवत्युक्थ्यः" ऋ० १,१७,५ । "उक्थ्यः स्तुत्यः" भा० "होता गृणीत उक्थ्यः" ऋ० १,७६,१२ । २उक्थसाधने शस्त्रे च । "गाय गायत्रमुक्थ्यम्" ऋ०१,३८,१४ । उक्थ्यं शस्त्रयोग्यं गायत्रमुक्थ्यम्" भा० । उक्थसम्बन्धित्वात् ३शस्त्रेऽपि । "उक्थ्यं वाचि सोमाय त्वेति शस्त्वा जपेत्" आश्व०श्रौ०५,६,२६ ।"उक्थ्यं शस्त्रं शस्त्रसम्बन्धितया" नारा०वृत्तिः । "सोमयागात् परं कर्त्तव्येषु षट्सु यागेषु मध्ये ४यज्ञभेदे स च ।"प्रथमं सोमा" इत्युपक्रम्य "वडुत्तरे" "अत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम: कात्या० १०,६,२७,२८ विहितः । तत्प्रकारस्तु तत्रैव दर्शितः प्राक् । तस्य उक्थसाध्यत्वात् उक्थ्यमिति नाम ।

"उक्थे तु होत्रकाणाम्" १ । "तृतीयसवनइत्यनुवर्त्तते । उकथे त्वयं विशेषः । तृतीयसवने होत्रकाणामपि शस्त्राणि भवेयुः । तानीमान्यत्याह"वृत्तिः।"एह्य,षु ब्रवाणि तेऽग्निरगामि भारतस्वर्णोष्टतमस्तम्भाद्यामसुर इति त्वावामिन्द्रावरुणा युवमावां राजानाविन्द्रावरुणा मधुमत्त-

मक्षेति याज्या । वयमु त्वामपूर्व्य यो न इदमिदं पुरेति प्रगाथौ । सर्वाः ककुभः प्रमंहिष्ठायोदप्रु तोऽक्ताम इन्द्र' इहस्पते युवमिन्द्रश्च वस्व इति याज्या । अथाहीन्द्र गिर्वण इत्यत्र इन्द्र गिर्वण क्रतुर्जनित्वेति मर्त्तो भवामितः स वां कर्मणेन्द्राविष्णू मदपती मदानामिति याज्या"२ । "अत्र सर्वा: ककुभ इत्युक्तं किमनेनोक्तम् । काकुभेषु तावत् प्रगाथेषु हतीयपञ्चमयोरभ्यासे सति ककुभ एव सर्वा भवन्ति । तथैव च स्तुवन्ति छन्दोगाः । अतोऽन्यत् प्रयोजनमन्वेषणीयम् । तदिदमुच्यते । होत्रकाश्च येषां प्रगाथाः स्तोत्रीयानुरूपा इतीन्द्रनिहव- ब्राह्मणस्पत्यवच्छंसनं विहितम् । तत्र बार्हतानामेवायं विधिरित्युक्तत्वात् काकुभेष्वनुप्राप्नोति तन्निहत्त्यर्थं ककुभ इति वचनम् । सर्वग्रहणं सर्वकाकुभप्रगाथसंग्रहार्थम् । तेन बार्हतेष्वेवासौ विधिरिति मन्तव्यम् । "इत्यन्त उक्थ्यः"३ । "एवमन्त उक्थ्यः क्रतुरित्यर्थः । इत्यन्तोऽग्निष्टोम इत्यस्यानन्तरम् एतानि शस्त्राण्युक्थ्यः इत्यन्ते उक्थ्य इत्येतावदुच्यमाने एतानि शस्त्राण्युक्थ्य एवेति गम्यते । तत् किमर्थमुक्थे तु होत्रकाणामित्यन्तोक्थ्यग्रहणम् । अयमभिप्रायः । अथ सोमेनेति लिङ्गध्यायेषु ज्योतिष्टोमाख्यः सोमयागोऽधिकृतः, स च संस्थाभेदात्रामभेदाच्चतुर्धा भिन्नो व्युत्पादितो भवति । तत्र सर्वत्र सोमेन यजेतेत्येतद्विधिविहित एवैको यागः केनचिदुपाधिवशेनाभ्यस्तो भिन्नो नाम प्रतीयते । अतः सर्वेषां प्रकरणित्वे प्राप्ते अग्निष्टोम एव प्रकरणी, अन्ये तस्यैव गुणा विकारा इति ज्ञापयितुमुक्थ्य इत्युच्यते । उक्थ्य एतावदेवौपदेशिकं, अन्यत् सर्वमातिदेशिकमित्यर्थइत्येवं आश्व॰श्रौ॰६,१,क॰ तस्य प्रकारोऽभिहितः उक्थेन संस्थार्थे पञ्चदशे ५पात्रभेदे । "उक्थ्यासुपयाम गृहीत इति" कात्या॰८,६,२१ । "उक्थ्यादि" कात्या॰ १४.२.१० उक्थ्यपञ्चदशादि प्राकृतं कर्म भवति उक्थ्यस्यात्वा उक्थसंज्ञकं पञ्चं गृह्णाति" कर्कः । प्रागुक्थ्यान्महतीयच्चतुपात्रेण इन्द्रमरुत्व इति" कात्या॰ १०,१,१४ । आग्रयणग्रहणानन्तरमुक्थ्यग्रहणात् मागिति कर्कः ।

उक्ष— सेचने भ्वा॰ सक॰प॰ सेट् । उक्षति औक्षीत् उक्षाम्-बभूव आस चकार । उक्षिता उक्ष्यात् उक्षिष्यति औक्षिष्यत् । उक्षितव्यः उक्षणीयः उक्ष्यः । उक्षिता उक्षन् उक्षितः । उक्षा उक्षणम् । उक्षित्वा वसुक्ष्य । कक्षा णि उत्थाने औक्षि उक्षमाणः "उक्षन्त्यश्वा मरुतः हितादव" ऋ॰१,१६६,२, "औक्षन् शोणितमश्रीदाः" भट्टिः । "उक्षां प्रचक्रुर्नगरस्य मार्गान्" भट्टिः । अव्यवधाने एवास्यप्रयोगविधानात् प्रयद्व्यवधानात्स्यप्रयोक्तारतोऽत्र जयमङ्गलेन उक्षान् प्रचक्रुरिति पठितम् उक्षान् सिक्तानिति तदर्थः "इतमुक्षता मधुवर्णमर्चते" ऋ॰१,८७,२, "गङ्गाप्रवाहोक्षितदेवदारु" कुमा॰ । "गन्धवद्रुधिरचन्दनोक्षिता" "किञ्चिदुक्षितविशस्तकाम्रुभौ" रघुः । क्वचिदस्य पदव्यत्ययः । "अक्ष्णयो अपिन्वमुक्षमाणाः" ऋ॰ ४,४२,४ "समुक्षमाणमस्याः वारे पुनन्ति" ऋ॰८,८८,५ "प्रसव्यमात्मानमुदकैः पर्युक्षन्ते" आश्व॰श्रौ॰। उक्षणञ्च द्रव्यद्रव्येण संयोगविशेषजनकव्यापारः । (सेचा) ।

अभि+अवनतामपाणिना सेचने । "उत्तानेनैव हस्तेन- प्रोक्षणं परिकीर्त्तितम् । न्यञ्चताऽभ्युक्षणं प्रोक्तं तिरश्चाऽवोक्षणं स्मृतमिति" छन्दोप॰ उक्तेः तथात्वम् । अभ्युक्षणयन्द्रे विहृतिः "परस्पराभ्युक्षणतत्पराणाम् रघुः । "शिरसि शकुन्तलामभ्युक्ष्य" शकु॰। "अथाद्भिरभ्युक्षति, एव वा अपां समारो यदद्भिरभ्युक्षति" शत॰ब्रा॰२,१,१,३,।

अव+तिर्यक्पाणिना सेचने "दर्भा मधुमिश्रेणावोक्षति" तैत्ति॰ । "उद्धतमवोक्षितं भवति यत्र नसुपावहरत्युद्धृते वा अवोक्षितेऽग्निमादधति" शत॰ब्रा॰६, ४४,१८, "उद्धत्यावोक्षति यत्र नमुपावहरति" शत॰ब्रा॰ ६,८,१,१२, । "तिरश्चाऽवोक्षणं स्मृतम्" छन्दोग॰।

आ+समन्तात् ईषद् वा सेचने "आ गोमूत्रिणमुक्षतं हतेन" ऋ॰७,६०,५ व्यवहितत्वेति उपसर्गस्य व्यवधानम् ।

उद्+जर्द्ध देशात् सेचने । "किं हतीयमेतां दिग्रुदौक्षीः"? शत॰ब्रा॰११,५,२,४। [ब्रा॰२,७,४,६' ।

उप+सामीप्येन सेचने । "अधस्तादुपोक्षत्यापोदेवी:" शत॰

निस्+ निःशेषेण सेचने । "यतस्त्वप आनीय निरौक्षिषम्" शत॰ब्रा॰११.५,२,७ ।

परि+वेष्टनाकारेण समन्तात् सेचने"प्रसव्यमुदकैरात्मानं पर्युक्षन्ते" आश्व॰६,१२, "प्रसव्यं वामावर्त्तेन वेष्टयित्वेत्यर्थः" ना॰ह॰। "आहवनीयं पर्युक्ष्योद्धार्य्यं निमयत्वा गार्हपत्यात्"कात्या॰४,१३,१६, "पर्युक्ष्य हस्तस्थितेनोदकेन समन्तात् सिक्त्वा" कर्कः। "पर्युक्षितं वनिदधि" कात्या॰ ४,१४,२०।

प्र+उत्तानहस्तेन सेचने"उत्तानेनैव हस्तेन प्रोक्षणं परिकी-

क्षितम् छन्दो० उक्तेस्तथार्थता “अपिधानं प्रोक्षिताभ्याम्” कात्या० ६,१०,४, । “तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः” ऋ० १०,९०,७, “प्रोक्षिताः स्थ अग्नये त्वा जुष्टं प्रोक्षामि । अग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि” यजु० १,१३, “कृष्णोऽस्याखरेष्ठो अग्नये त्वा जुष्टं प्रोक्षामि । वेदिरसि बर्हिषे त्वा जुष्टां प्रोक्षामि । बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि” यजु० २,१, “रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान्” यजु० ५,२५, ‘संस्कारः पुंस एवेष्टः” प्रोक्षणाभ्युक्षणादिभिः” कुसुमा० “इत्यनेः पुरुषसंस्कार इति नैयायिकाः । मीमांसकमते द्रव्यसंस्कारः इति भेदः अभ्युक्षणशब्दे विवृतिः । “प्रोक्षितं भक्षयेन्मांसम्” मनुः ।

सम्+प्र+ सम्यक् प्रोक्षणे । ‘प्राणानायम्य संप्रोक्ष्य त्रिभिराद्भिरेतेन तु” या० स्मृतिः ।

वि+विशेषेण सेचने “ज्ञयो वि रोरुवज्जठरे विश्वमुक्षते” ऋ० १०,९२,५ । “व्यवहिताश्चेति” पा० उपसर्गव्यवधानम् । “कोऽयमिन्द्र व्हास तां व्यौक्षदोषं धयेति” शत० ब्रा० २,२,४,५ ।

अभि+वि+ आभिमुख्येन विशेषेण सेचने । “तत्तस्माद् तथैव संस्तुव्याम् यथाग्निं नाभिव्युक्षेत्” शत० ब्रा० १,२,१,१०

सम्+सम्यक् सेचने । “समुक्षितं सुतं सोमम्” ऋ० ३, ६०,५ । ‘इदं ते अन्नं युज्यं समुक्षितम्” ऋ० ८,४,१२

**उक्ष** त्रि० उक्ष–अच् । १सेक्तरि “सुप्रतिका मनोऽहमुक्ष न:” यजु० ८,८४, कर्म्मणि घञ् । २सिक्ते “उक्षान् प्रचक्रुः” भट्टिः

**उक्षण** न० उक्ष–ल्युट् । द्रवद्रव्येण संयोजनव्यापारे “वसिष्ठमन्त्रोक्षणजात् प्रभावात्” रघुः । [नायक्ये वृषे ।

**उक्षतर** पु० अल्प उक्षा ह्रस्वत्वे तरप् । अप्राप्तवाह-

**उक्षन्** पु० उक्ष–कनिन् । १वृषे, २ऋषभौषधौ च । “विदलितमहाकुलासुहृत्सां दिषाणविषङ्गमैः” माघः । “उक्षेव यूथा परियन्नरावीत्” ऋ० ९,७१,९ । “उक्षा मिमाति प्रति यन्ति धेनवः” ऋ० ९,६९,४। “शरद्घनाद्दीधितिमालिनोक्षणः” कुमा० “न वराह न चोक्षाणं न छागान् विविधांस्तथा” भा०व० १२१। “उक्षाणं पक्त्वा सह ओदनेन तस्मात् कपोतात् प्रति ते नयेद्धा” भा० व० १९६ । “नीलं चोक्षाणं मेध्यमप्यालभेत” भा० आनु० ११अ० । ३सेचनकर्त्तरि । सेचके त्रि० । “उक्षा समुद्रो अरुषः सुपर्णः” ऋ० ५,४७,३, उक्षा बिभर्त्ति भुवनानि वाजयुः” ऋ० ९,८३,३ । आत्मन उक्षाणं इच्छति उक्षीयति वेदे तु न नलोपः । उक्षण्यति । “वयं हि वां हवामहे उक्षण्यन्तो व्यश्ववत्” ऋ०,६,९ । ततः कर्त्तरि उ उक्षण्यु आत्मनोऽपेक्षौ “व्यश्वस्तावसुविदमुक्षण्युरप्रीणादृषिः” ऋ० ८,२३,१८। जातवृद्धमहद्भ्यः परस्य अच् समा० । जातोक्षः वृद्धोक्षः महोक्षः “महोक्षं वा महाजं वा श्रोत्रियाय प्रकल्पयेत्” स्मृतिः “विलोक्य वृद्धोक्षमधिष्ठितं त्वया” कुमा० । उक्ष्णोऽपत्यम् अण् टिलोपः । औक्ष्ण तदपत्ये तस्येदमित्यणि अनपत्ये तु नलोपः न टिलोपः । औक्ष त्रि० औ० उक्ष्णां समूहः वुञ् । औक्षक वृषसंघे न० । कुरुपूर्व्ववंश्ये ४राजभेदे च । तस्य गोत्रापत्ये गय न वृद्धिः । उक्षगयतदुगोत्रापत्ये पुंस्त्री० । तदन्तत्वात् फक् उक्षगयायनः “ऋज्यमुक्षगयायने रजतं हरयाणे” ऋ० ८,५,२,२२ । “उक्षनामा कश्चित् कुरोः पूर्व्वजः तस्य गोत्रापत्ये उक्षन् शब्दात् गयः तदन्तत्वात् फक् । संज्ञापूर्व्वकविधिरनित्य इति न वृद्धिः अयञ्च छान्दसः लोकेऽस्य न प्रयोगः” भा० ।

**उक्षवशा** त्रि० उक्षा वशा वशास्थानीयो यस्य । वन्ध्याऽलाभे वशात्वेन कल्पितवृषके १यजमानभेदे । तत्र वशारूपादिकमभिधाय वृषस्य तत्प्रतिनिधित्वम्” शत० ब्रा० ४,५,१,९, उक्तं यथा “मैत्रावरुणी वशा भवति यत्र वै देवाः रेतः सिक्तं प्राजनयंस्तदग्निमारुत” मित्युपक्रम्य पश्चादीनामुत्पत्तिमभिधाय “अथ यदा न कश्चन रसः पर्य्यशिष्यत स एषा मैत्रावरुणी वशा समभवत् तस्मादेषा न प्रजायते रसाद्धि रेतसः पशवस्तद् यदन्ततः समभवत् तस्मादन्तं यज्ञस्यानुवर्त्तते तस्माद्वा एषाल न प्रजायते मैत्रावरुणी वशाऽवक्लृप्ततमा भवति यदि वशां न विन्देदप्युक्षवश एव स्यात्” । २वृषायत्ते त्रि० । ‘उक्षवेहदपि वेहत्स्थानीयकल्पितवृषे यजमाने” शत० ब्रा० उद्दिधिवक्तः ।

**उक्षित** त्रि० उक्ष–क्त । सिक्ते उक्षधातौ उदा० ।

**उख** गतौ भ्वादि० पर० सक० सेट् । ओखति औखीत् उवोख ऊखतुः ओखिता उख्यात् ओखिष्यति औखिष्यत् उखा ।

**उखि** गतौ इदित् भ्वादि० पर० सक० सेट् । उङ्खति औङ्खीत् । उङ्खाम्—बभूव आस चकार । उङ्खिता उङ्ख्यात् उङ्खिष्यति औङ्खिष्यत् ।

**उखर्व्वल** पु० उख–वलच् रुडागमः किच्च । भूरिपत्रे तृणभेदे राजनि० “बलदो रुचिकारी च पशूनां सर्वदाहितः” । अस्य गुणः राजनि० उक्तः ।

**उखल** पु० उख–कलच् । भूरिपत्रे तृणभेदे उखर्व्वले राजनि० ।

**उखा** स्त्री उख–क । १पाकपात्रे पिठरादौ । (हाँड़ि) ।

"यन्नीक्षणं मांस्पचन्या उखाया उत पात्राणि यूष्ण आसेचनानि" ऋ० १,१६२,१३ । अत्रमेतामाश्रित्यैव "मांस्पचन्या उखायाः" इति पा० भाष्यकृतोदाहृतम् । वह्निचयेष्टकासाधने २मृन्मयोखारूपे पदार्थे तत्करणप्रकारः कात्या० श्रौ० १६,१,१, सूत्रादौ उक्तः तच्च इष्टकाशब्दे ९९१पृ० दर्शितम् । "उखास्रत्" सि० कौ० शत० ब्रा० तु स्थालीपरोशब्दस्य निरुक्तिरन्यथैवोक्ता यथा । "अथैनमुखयाभिबिभर्त्ति इमे वै लोका उखा इमे वा एते लोका यन्तमर्हन्ति एभिरेतं लोकं देवा अबिभरुरेभिरेवैनमेतल्लोकैर्बिभर्त्त्येषा यदुखा नाम एतद्वै देवता एतेन कर्मणैतयावृतेमाँ लोकानुदखनन् यदुदखनंस्तस्मादुत्खा उत्खा वैतामुखेत्याचक्षते परोक्षं, परोक्षकामा हि देवाः" ६,७,१,२२, २३ । अस्य "न क्रोड़ादिबह्वच" पा० क्रोड़ादिगणपाठात् स्वाङ्गवाचितोऽपि तेन बहुदुखेत्यत्र न ङीष् उखायां संस्कृतं यत् । उख्य तत्र संस्कृते त्रि० । भवार्थे दिगा० यत् । उख्य उखाभवे त्रि० । तस्य वर्म्मादि० कर्म्मधारयसमासे आद्युदात्तता ।

**उख्य** त्रि० उखायां संस्कृतं यत् । उखासंस्कृते मांसादौ "अमुख्यमुख्यश्च होमवान्" भट्टिः उखायां भवः दिगा० यत् । उखाभवे त्रि० । "उख्यान् हस्तेषु बिभ्रतः" अथ० ४, १४,२ । उख्याग्निमाह । "अथ यद्येष उख्योऽग्निरनुगच्छेत्" शत० ब्रा० ६,६,४,१० । "प्राणनः शाखोख्यश्चोत्तरतः सिद्धाधानम्" "अधूखभस्मावपनं शकलोल्लादौ" कात्या० १६,६,१०, १५,२२ । "अविद्यां तत्रोख्यं निरवपति वमितमिति" १७,१, १९ । स्त्रियां टाप् ततः कत्र्यादि० जातादौ ढकञ् । औख्येयः उख्याजाते त्रि० ।

**उगण** त्रि० उद्गूर्णं उदायुधः गणो यस्य पृषो० । उदायुधगणोपेते "याः सेना अभीत्वरीराव्याधिनीरुगणा उत" यजु० ११, ७७, "उगणाभ्यस्तृंहतीभ्यश्च वो नमो नमः" यजु० १६,२४ ।

**उग्र** पु० उच-रक् गवान्तादेशः । १महादेवे, वायुमूर्त्तिधारिणि शिवे क्षत्रियात् ऊढायां शूद्रायामुत्पन्ने २संकीर्णवर्णे (आगुरी) उग्रपुत्रत्वात् ३शोभाञ्जनवृक्षे, ४केरलदेशे, सूर्य्यांशके "उग्रः पूर्व्वमघात्मकाः" इति ज्योतिषोक्ते ५मघादिगणे च ६वत्सनाभाख्ये विषे न० । ७उत्कटे त्रि० । ८वचायां, ९यवान्यां, १०भव्यायाम्, ११उग्रजातेः स्त्रियां च स्त्री टाप् । तत्र "विषयावशोऽपरमात्मनिरप्तिः" वेदा 'यमयतोऽयमोऽसीति तद्देव तद्मात्माकरोत् वायुरुग्र-यमभवद्वायुर्वा उग्रस्तस्माद्यदा बलवद्वात्युग्रो वातीत्याहुः सोऽब्रवीत् ज्यायान् वा अतोऽस्मि" शत० ब्रा० ६,१,३,१२। उक्तश्रुत्युक्तेः १२वायौ पु०। उग्ररूपत्वादेव अष्टमूर्त्तिपूजने उग्राय वायुमूर्त्तये नम इति तिथितत्त्वे उक्तम् । शूद्रस्य विप्रकन्यायां जात उग्र इति स्मृतः" उशनसोक्ते १३चाण्डालरूपवर्णसंकरे च क्षत्रियाच्छूद्रकन्यायां क्रूराचारविहारवान् । क्षत्रशूद्रवपुर्जन्तुरुग्रनामा ततोऽभवदिति मनूक्तादयं भिन्नः" "क्षत्त्रुग्रपुक्कसानान्तु बिलौकोबधबन्धनमिति" मनुः करणेन समा चास्य हस्तिभोगैर्निर्म्मिता स्मृतिः अस्योग्रस्य । १४उत्कृष्टे त्रि०। "उग्रं शर्म महि श्रवः" यजु० २६,१६। १५असुरभेदे पु० "विप्रचित्तिः शिविः शङ्कुः" इत्युपक्रम्यासुरगणनायां "वेगवान् केतुमानुग्रः सोमव्यग्रो महासुरः" हरिवं० २६२अ० । तत्र वचायाम् "वत्साह्वयप्रियकृ षायच्छाह्वयरसाङ्गमैः" "उग्रा कटुस्तीक्ष्णगन्धा विड्ङ्ग श्रेष्ठं नित्यं चावपीड़ करञ्जम्" । "विड्ङ्गभल्लातकचित्रकोग्राकटुत्रिकाम्भोदसुराद्रुजाश्च" इति च सुश्रु० १६तीक्ष्णवीर्य्ये त्रि० ।१७कालिकावरणभेदे स्त्री । "विप्रचित्ता तथोग्रोग्रप्रभा दीप्ता घनत्विषः" कालीकवचम् । १८उग्रतारायोगिनीभेदे च । "महाकाल्यथ रुद्राणी उग्रा भीमा तथैव च" कालिकापु० ।१९दीर्घे च उग्रनासिकः । २०सर्व्वकार्य्येषु उद्यते "उग्रासोऽह्नश्च उग्रवाहवः इति" ऋ०८,२०,१२। उग्रासः उद्गूर्णाः सर्वकार्य्येषु उद्यताः" भा० उच-समवाये इति धातोर्निष्पन्नतया क्रोधतीक्ष्णरसादिना विशेषसम्बन्धात् एषां च सर्वेषाम् उग्रत्वम् । उग्रप्रभोग्रदंष्ट्रादियोगिनीभेदेऽपि उत्कटाद्यर्थता ज्ञेयम्" भा०।

**उग्रक** त्रि० उग्र+संज्ञायाम् कन् । नागभेदे । नागनामाख्याने "आर्य्यकश्चोग्रकश्चैव नागः कलशपोतकः" भा० आ० ३५ अ० । २शूरे च "उग्रपुत्रशब्दे उदा० ।

**उग्रकर्म्मन्** त्रि० उग्रं कर्म्मास्य । १हिंस्रे पश्वादौ २प्राणिहिंसके ३क्रूरादौ च । [वृक्षभेदे राजनि० ।

**उग्रकाण्ड** पु० उग्रः काण्डोऽस्य । (करेला) कारवेल्ले

**उग्रगन्ध** पु० उग्रः गन्धः पुष्पादावस्य । १चम्पके, २कट्फले ३अर्ककवृक्षे ४लशुने च । ५हिङ्गुनि न० । ६उत्कटगन्धादौ त्रि० । ७यवान्याम् ८वचायाम्, ९अजमोदायाञ्च स्त्री टाप् । राजनिघण्टुः मेदिनी ।

**उग्रचण्डा** स्त्री० उग्रा चण्डा कोपना कर्म्म० । १देवीभेदे । तदाविर्भावः कालिका० पु० ५९,६० अ० उक्तः "उग्रचण्डा तु या मूर्त्तिरष्टादशभुजाऽभवत् । सा नवम्यां

पुरा कृष्णपक्षे कन्यां गते रवौ । प्रादुर्भूता महाभागा योगिनीकोटिभिः सह”। अनयैव मूर्त्त्या दक्षयज्ञो विनाशितः । यथा “आषाढस्य तु पूर्णायां सत्रं द्वादशवार्षिकम् । दक्षः कर्त्तुं समारेभे वृताः सर्व्वे दिवौकसः । ततोऽस्मिन् न वृतस्तेन दक्षेण सुमहात्मना । कपालीति सती चापि तज्जायेति च नो वृता । ततो रोषसमायुक्ता प्राणांस्तत्याज सा सती । त्यक्तदेहा सती चापि चण्डमूर्त्तिस्तदाऽभवत् । ततः प्रवृत्ते सत्रे तु तस्मिन् द्वादशवार्षिके । नवम्यां कृष्णपक्षे तु कन्यायां चण्डमूर्त्तिदृक् । योगनिद्रा महामाया योगिनीकोटिभिः सह । सतीरूपं परित्यज्य यज्ञभङ्गमथाकरोत् । शङ्करस्य गणैः सर्व्वैः सहिता शङ्करेण च । स्वयं बभञ्ज सा देवी महासत्रं महात्मनः” । “उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका” इत्युक्ते दुर्गावरणभेदे च ।

**उग्रता** स्त्री उग्रस्य भावः कर्म्म वा तल् । उग्रस्य १भावे २कर्म्मणि च ३अलङ्कारोक्ते व्यभिचारिगुणभेदे । तल्लक्षणं सा०द०। “शौर्य्यापराधादिभवं भवेच्चण्डत्वमुग्रता । तत्र स्वेदशिरःकम्पतर्ज्जनाताडनादयः” । त्व । उग्रत्व तद्भावकर्म्मणोः न० । ष्यञ् । औग्र्य तत्रैव न० ।

**उग्रतारा** स्त्री उग्रादपि भयात् तारयति भक्तान् तॄ-णिच्-अच् ५त० । तारारूपायां देव्याम् । “तारकत्वात् सदा तारा महामोक्षप्रदायिनी। उग्रापत्तारिणी यस्मादुग्रतारा प्रकीर्त्तितेति तन्त्रोक्ताऽस्या वा निरुक्तिः । तदाविर्भावः कालिकापु० ८१अ० “विनिःसृतायां देव्यास्तु मातङ्ग्याः कायतस्तदा । भिन्नाञ्जननिभा कृष्णा साऽभूद्गौरी क्षणादपि । कालिकाख्याऽभवत् सापि हिमाचलकृताश्रया । तामुग्रताराख्यशो वदन्तीह मनीषिणः। उग्रादपि भयाद्रक्षेत् यस्मात् भक्तान् सदाम्बिका । एवैकजटाख्यातिं यस्मात्तस्या जटैकिका । स्मृतं चिन्तनं चास्याः सम्यक् वेतालभैरवौ ! । यथा ध्यात्वा महादेवीं भक्तः प्राप्नोत्यभीप्सितम् । चतुर्भुजां कृष्णवर्णां मुण्डमालाविभूषिताम् । खड्गं दक्षिणपाणिभ्यां बिभ्रतीन्दीवरं द्वयम् । कर्त्रीञ्च खर्परञ्चैव क्रमाद्वामेन बिभ्रतीम् । द्यां लिखन्तीं जटामेकां बिभ्रतीं शिरसा स्वयम् । मुण्डमालाधरां शीर्षे ग्रीवायामपि सर्व्वदा । वक्षसा नागहारन्तु बिभ्रतीं रक्तलोचनाम् । कृष्णवस्त्रधरां कट्यां व्याघ्राजिनसमन्विताम् । वामपादं शवहृदि संस्थाप्य दक्षिणं पदम् । विन्यस्य सिंहपृष्ठे तु लेलिहानां शवं स्वयम् । साट्टहास महाघोरारावयुक्तातिभीषणा । चिन्त्योग्रतारा. रूपतं भक्तिमद्भिः सुरेशुभिः” अन्यत्र च “रूपं शृणु नरश्रेष्ठ ! येन ध्येया सदा शिवा । कृष्णा लम्बोदरी दीर्घा विरला रक्तदन्तिका । चतुर्भुजा कृशाङ्गी तु दक्षे कर्त्तृकखर्परौ । खड्गं चेन्दीवरं वामे शीर्षे त्वेकजटां पुनः । वामपादं शवस्योर्व्वौ निधायोत्थाप्य दक्षिणम् । शवस्य हृदये न्यस्य साट्टहासं प्रकुर्व्वती । नागहारशिरोमालाभूषिता कामदा परा” । अस्या रूपविषये बहुविप्रतिपत्तिरस्तीत्यतस्तन्निरूपणं तावत् क्रियते

राघवकृते पञ्चकल्पतरौ मन्दारवृक्षप्रकरणे श्रीशङ्कराचार्य्यकृततदीयमूर्त्तिप्रकाशकस्तोत्रं यथा । “ज्वलत्पावकज्वालयोज्ज्वालभास्वञ्चितामध्यसंस्थां सुपुष्टां सुखर्व्वाम् । शवं वामपादेन कण्ठे निपीड्य स्थितां दक्षिणेनाङ्घ्रिणोरू निपीड्य । बृहद्गोलमालम्बोदरीं मेघवर्णां समुत्तुङ्गपीनस्तनाभोगरम्याम् । जवारागरागप्रवृत्तत्रिनेत्रां ललज्जिह्वया दंष्ट्रया भीषणास्याम् । लसद्द्वीपिचर्म्मावृताङ्गीं नितम्बे जटाजूटमध्यस्थितेन्दीवराक्षीम् । शिरोदेशभास्वत्पिशङ्गाभसर्पां जटाजूटमध्यस्थिताक्षोभ्यमूर्त्तिम् । मिथः श्लेषवत्त्वात् शिरश्छिन्नसद्योगलच्छोणितां मानवीं मुण्डमालाम् । दधानां च पञ्चाशदाख्यानसंख्याम् अतश्छिन्नमुण्डालिसंनामिताङ्गीम् । समाच्छिन्नमांसोत्करामूर्द्ध्वदक्षे स्फुरत्पाणिना धारयन्तीं महासीम् । करे वाम ईषत्स्फुरद्रक्तनालं लसन्नीलपङ्केरुहं धारयन्तीम् । करे सव्य उच्चैरधस्ताद्दधानां शितां कर्त्तृकां वामपाणौ कपालम् । जगद्वर्त्तिसंसारसंजातजाड्यं स्वतः कर्त्तृकाधारया खण्डयन्तीम् । विचित्रास्थिमालं करालं कपालं ललाटे च पञ्चान्वितं धारयन्तीम्” । इति तत्रैव मन्त्रप्रदीपे “महाहिर्विद्धिप्रकटाहिभूषणाम् इत्यनेन अष्टनागानामष्टविधरूपत्वोक्त्या तेषां भूषणविशेषकृतया यथा स्थितिस्तथा तत्रैव दर्शितं यथा । “जटास्वनन्तः श्रवणेऽस्य तक्षको महादिपद्मो हृदि हारभूषणम् । तथैव कर्कोटकृतोपवीतकम् स मेखलायामथ देवि ! वासुकिः । स शङ्खपालः किल कङ्कणाकृतः करेषु, पद्मः पदयुग्मसमाश्रयः । भुजेषु नागः कुलिकोऽङ्गदे मतः” इति “तेषां वर्णा अपि क्रमशो दर्शिताः सितोऽथ रक्तोधवलश्च मेचकः तथैव पीतोऽप्यसितश्च पाटलः । भुजङ्गमानामिह वर्णजातयो भवन्ति सर्व्वेषु नरेषु सन्ति ताः” । तत्रायं निर्गलितार्थः । खर्व्वं लिङ्गपिशङ्गैकजटा जवाकुसुमसङ्काशतक्षकनागकृतकुण्डला शुभ्रशेषनागकृतहारा कुर्व्वा-

हलश्यामनागकृतयज्ञोपवीता नीलवर्णा लम्बोदरी खर्वा चतुर्भुजा तत्र उपरि दक्षिणे सरक्तमांसखण्डमण्डितमुष्टि-निविष्टजटाजूटसंलग्नोग्रखड्गविभूषितकरा उपरि वामे रक्तनालकिञ्जल्किकसरनीलोत्पलकरा अधस्तात् दक्षिणे वोजभूषितकर्त्तृकालङ्कृतकरा अधस्तात् वामे त्रिजगज्जाड्य-खण्डककपालमण्डितकरा भुजचतुष्टये धूम्राभनागकृतकेयूरा कनकाभनागकृतकङ्कणा शवारूढा प्रत्यालीढस्थाना-धिष्ठिता निर्भरयन्त्रणाप्रायेण शवहृदयस्थितदक्षिणचरणा शवोरुद्वयस्थितप्रसारितवामपादा कुन्दाभनागकृतकटीसूत्रा पाटलनागकृतनुपूरालङ्कृता सद्यश्छिन्नगलद्रुधिराण्योन्यकेश-ग्रथितपादपद्मप्रलम्बित—पञ्चाशत्तमस्तमुण्डमाला ज्वल-दनलचितामध्यस्थिता द्वीपिचर्मालङ्कृतकृष्णवस्त्रा योषि-दखिलालङ्कारभूषिता नीलावक्षोभ्यरूपनागभूषिता पञ्च-संख्यान्वितकपालमालाभूषितललाटा ललज्जिह्वा दृहद्दंष्ट्रा इत्येवं रूपा। अत्र प्रमाणवाक्ययोः शवहृदयस्थत्वे वामद-क्षिणपादयोर्विकल्प इत्यतोमूर्त्तिद्वयमित्यन्ये। प्रत्यीलाढपदा-ञ्चितशवहृदित्युक्तेः आलीढं दक्षिणं पादं प्रत्यालीढं तु वामकमित्युक्तेः आलीढशब्दे दर्शितवाक्याच्च प्रत्यालीढ-शब्दस्य आलीढविपर्ययरूपत्वात् वामचरणस्यैव शव-हृदयस्थितिरिति तु न्याय्यम्।

**उग्रधन्वन्** पु० उग्रं धनुर्यस्य ब०स० अनङ् समा०। १शिवे २शत्रुभिरसह्यधनुष्के त्रि०। "स इषुहस्तैः स निष-ङ्गिभिर्वशी संस्रष्टा सयुध इन्द्रोगणेन। संसृष्टजित् सोमपा बाहुशर्द्ध्युग्रधन्वा प्रतिहिताभिरस्ता" ऋ०१०,१०३,३।

**उग्रनासिक** त्रि० उग्रा दीर्घा नासिका यस्य। दीर्घनासिके।

**उग्रपुत्र** पु० उग्रस्य शूरस्य पुत्रः। १शूरवंशजाते। "काश्यो वा वैदेहोवोग्रपुत्रः उज्ज्यं धनुरधिज्यं कृत्वा" शत०ब्रा०१४, ६,८। "उग्रपुत्रः शूरान्वयः" भा० "उग्रस्य शिवस्य पुत्रः। २कार्त्तिकेये। उग्र उद्गूर्णः पुत्रो यस्मिन्। ३तादृशे गभीरजलाशये "आँ उग्रपुत्रे जिघांसतः" ऋ० ८, ६७,११। उग्रपुत्रे उग्राः उद्गूर्णाः पुत्रा यस्मिन् तत्तादृशे उदके" भा०।

**उग्रम्पश्य** त्रि० उग्रं पश्यति उग्+दृश-खश् मुम्। पापा-शयतया क्रूरदृष्टियुक्ते उग्रजन्तौ व्याघ्रादौ "उग्रम्पश्या-कुलेऽरण्ये" भट्टिः।

**उग्रव्यग्र** पु० असुरभेदे उग्रशब्दे उदा०।

**उग्रशेखरा** स्त्री उग्रस्य शेखरं वासस्थानत्वेनास्त्यस्याः अर्श० अच्। गङ्गायाम् शब्दार्थ० सा हि तस्य शिरसि स्थिता

**उग्रश्रवस्** पु० उग्रम् उत्कृष्टं श्रुतिधरं श्रवः कर्णौ यस्य। १रोमहर्षणे सौतौ। "लोमहर्षण उग्रश्रवाः सौतिः पौराणिको नैमिषारण्ये" भा० आ० १अ०। २धृतराष्ट्रपुत्रभेदे च। तत्-पुत्रनामाख्याने "उग्रश्रवा उग्रसेनः सेनानीर्दुष्पराजयः" भा० आ० ६७अ०। "उग्रश्रवा उग्रसेनः सेनानीर्दु-ष्पराजयः" भा०आ० ११७अ०।

**उग्रसेन** पु० उग्रा सेना यस्य। १धृतराष्ट्रपुत्रभेदे, उग्रश्रव-श्शब्दे उदा०। २कुरुवंश्ये नृपभेदे। "कुरोस्तु पुत्राश्चत्वारः सुधन्वा सुधनुस्तथा। परिक्षिच्च महाबाहुः" इत्युपक्रम्य "परिक्षितस्तु दायादो धार्मिको जनमेजयः। जनमेजयस्य दायादास्त्रय एव महारथाः। श्रुतसेनोग्रसेनौ च भीमसेनश्च नामतः" हरि० ३२ अ०। अयञ्च जनमेजयः अभि-मन्युपौत्रात् भिन्नएव। अतएव "द्वापरे तव वंशे-ऽस्मिन् द्वावेव च परिक्षितौ। भीमसेनाख्ययोराजन्! द्वौ चापि जनमेजयौ" इति जनमेजयं प्रति तदुक्तम्। यदु-वंश्ये ३नृपभेदे च। "अन्धकञ्च महाबाहुं वृष्णिञ्च यदु-नन्दनम्" इत्युपक्रम्य "अन्धकात् काश्यदुहिता चतुरोऽलभ-तात्मजान्। कुकुरं भजमानञ्च शमं कम्बलबर्हिषम्। कुकुरस्य सुतोधृष्णुर्धृष्णोस्तु तनयस्तथा। कपोतरोमा तस्याथ तैत्तिरिस्तनयोऽभवत्। जज्ञे पुनर्वसुस्तस्मादभिजिच्च पुन-र्वसोः। तथा वै पुत्रमिथुनं बभूवाभिजितः किल। आ-हुकश्चाहुकी चैव ख्यातौ ख्यातिमतां वरौ" इत्याहुकोत्-पत्तिमभिधाय "आहुकस्य तु काश्यायां द्वौ पुत्रौ संबभूवतुः। देवकश्चोग्रसेनश्च देवगर्भसमावुभौ। नवोग्रसे-नस्य सुताः तेषां कंसस्तु पूर्व्वजः" हरि० ३८अ०।

**उग्रसेनज** पु० जायते इति जन—ड ६त०। कंसे तस्योग्रसेन क्षेत्रेऽसुरजातत्वेन तत्पुत्रत्वम्। कंसशब्दे विवृतिः

**उग्रादेव** पु० उग्रेणादीव्यति आ+दिव—अच् ३त०। राज-र्षिभेदे "अग्निना तुर्वशं यदुं परावत उग्रादेवँ हवामहे" ऋ० १,३६,१८, उग्रादेवनामकञ्च राजर्षिम्" भा०।

**उग्रायुध** पु० उग्राणि आयुधान्यस्य। १पौरवे राजभेदे तस्योत्-पत्तिभीष्महननकथादि हरिवं० २० अ०। "अजमीढस्य दायादः" इत्युपक्रम्य तद्वंशपरम्परा उक्ता "तस्य वै सन्नतेः पुत्रः कृतो नाम महाबलः" इति कृतो त्पत्तिमुक्त्वा। "कार्त्तिरुग्रायुधः सोऽथ वीरः पौरव नन्दनः। बभूव येन विक्रम्य पृषतस्य पितामहः। नीपो-नाम महातेजाः पञ्चालाधिपतिर्हतः। उग्रायुधस्य दायादः क्षेम्यो नाम महायशाः। क्षेम्यात् सुवीरो नृपतिः

सुवीरास्तु नृपञ्जयः। नृपञ्जयाद्बहुरथ इत्येते पौरवाः स्मृताः। सवाप्युग्रायुधस्तात। दुर्बुद्धिरभवत्तदा। प्रवृद्ध चक्रो बलश्लाघोपान्तकरणो महान्। स दर्पपूर्णो हत्वाजौ नीपानन्यांश्च पार्थिवान्। पितर्युपरते मह्यं श्रावयामास किल्बिषम्। महामात्यैः परिवृतं शयानं धरणीतले। उग्रायुधस्य राजेन्द्र! दूतोऽभ्येत्य वचोऽब्रवीत्। अद्य त्वं जननीं भीष्म! गन्धकालीं यशस्विनीम्। स्त्रीरत्नं मम भार्य्यार्थे प्रयच्छ कुरुनन्दन!। एवं राज्यञ्च ते स्फीतं धनानि च न संशयः। प्रदास्यामि यथाकाममहं वै रत्नभाग् भुवि। मम प्रज्वलितं चक्रं निशम्येदं सुदुर्ज्जयम्। शत्रवो विद्रवन्त्याजौ दर्शनादेव भारत। राष्ट्रं सेच्छसि चेत् स्वस्ति प्राणानां वा कुलस्य वा। शासने मम तिष्ठस्व न हि ते शान्तिरन्यथा। अधःप्रस्तारशयने शयानस्तेन नोदितः। दूतोऽन्तर्हितमेतद्वै वाक्यमग्निशिखोपमम्। ततोऽहं तस्य दुर्बुद्धेर्विज्ञाय मतमच्युत!। आज्ञापयं वै संग्रामे सेनाध्यक्षांश्च सर्वशः। विचित्रवीर्यं बालञ्च मदुपाश्रयमेव च। दृष्ट्वा क्रोधपरीतात्मा युद्धायैव मनोदधे। निगृहीतस्तदाऽहं तैः सचिवैर्मन्त्रकोविदैः। ऋत्विग्भिर्देवकल्पैश्च सुहृद्भिश्चार्थदर्शिभिः। स्निग्धैश्च शास्त्रविद्भिश्च संयुगस्य निवर्त्तने कारणं श्रावितश्चास्मि युक्तरूपं नदाऽनघ"। "प्रवृत्तान्तस्य तच्चक्रमधर्मनिरतस्य वै। परदाराभिलाषेण सद्यस्तात निवर्त्तितः। नत्वहं तस्य जाने तन्निवृत्तं चक्रमुत्तमम्। हतं स्वकर्मणा तत्तु पूर्व्वं सद्भिश्च निन्दितम्। कृतशौचः शरी चापी रथी निष्क्रम्य वै पुरात्। कृतस्वस्त्ययनो विप्रैः प्रायोधयमहं रिपुम्। ततः संसर्गमागम्य बलेनास्त्रबलेन च। नाहन्यहन्यत्तद्युद्धं देवासुरमिवाऽभवत्। स मयाऽस्त्रप्रतापेन निर्दग्धो रणमूर्द्धनि। पपाताभिमुखः शूरस्त्यक्त्वा प्राणान्नरिन्दम!। एतस्मिन्नन्तरे तात! काम्पिल्यात् पृषतोऽभ्यगात्। हते नीपेश्वरे चैव हते चोग्रायुधे नृपे। अहिच्छत्रं स्वकं राज्यं पित्र्यं प्राप महाद्युतिः। द्रुपदस्य पिता राजन्ममैवानुमते तदा" भा०हरिव०२०अ० २धृतराष्ट्रपुत्रभेदे। तन्नामकीर्त्तने भा०आ० ६७अ०। "उग्रायुधोभीमशरः कनकायुर्दृढायुधः"।

उग्रेश पु० उग्राणामुत्कटरूपाणां प्रमथानामीशः। प्रमथाधिपे शिवे। "शङ्करं भवमीशानं पिनाकशूलपाणिनम्। त्र्यम्बकं शिवमुग्रेशं बहुरूपमुमापतिम्" भा० व०प० १०६ अ०।

उङ्कुण पु० उमिति कृत्वा कणयते हिंस्यते कुण कर्म्मणि घञर्थे क। (उकुण्) उत्कुणे। शब्दमाला।

उच समवाये दि० पर०सक०सेट्। उच्यति इरित् औचत्—औचीत् उवोच ओचिता उच्यात् ओचिष्यति औचिष्यत् उचितः उच्यः। "उवोचिथ हि मघवन् देष्णम्" ऋ० ७,३७,३। उचतिः सेवाकर्मेति माधवः "अभि वा एष एतानुच्यति" तैत्ति०। "नियो रभं पौरुषेयीमुवोच" ऋ० ७,४,२। "तत्र सेदिन्युच्यतु सर्वोश यातुधान्यः" अथ० २,१४,२।

उचथ न० उच्यते स्तूयतेऽनेन वच—कथन्। स्तोत्रे "यद्वां मानास उचथमवोचन्" ऋ० १,१८२,८। उचथम् स्तोत्रम्" भा०। "एवात इन्द्रोचथमहेम" ऋ० २,१९,७। "कुविन्नो अग्निरुचथस्य" ऋ० १,१४३,६।

उचथ्य त्रि०उचथं स्तोत्रमर्हति यत्। १स्तुत्ये २राजभेदे पु० "उचथ्ये वपुषि यः स्वराट्" ऋ० ८,४६,२८। "उचथ्ये स्तुत्ये। यद्वा उचथ्यो वपुश्च राजानौ" भा०।

उचित त्रि० उच—क्त वच—कितच् वा। १न्यस्ते २परिचिते, ३युक्ते। "अमात्यैरिव नीवारभागधेयोचितैर्मृगैः" दिनानि दीनोद्धरणोचितस्य" "प्रविश्य भीमासुरशोणितोचितः" महोप्रपथ्यव्यपरोपणोचितम्" रघुः "साद्यं कथञ्चिदुचितैः पिचुमर्दपत्रैः"। "स्मशंसुष्णमुचितं दधच्छिखो" माघः। "वंशोचितत्वादभिमानवत्याः" किरा०।

उच्च त्रि० उत्क्षिप्य बाहू चीयते, उपर्य्युपरिनिविष्टैरवयवैश्चीयतेऽसौ वा उद्+चि—ड। १उन्नते। "पुरस्तादुच्चम्" कात्या०७,१,२१। "स तदुच्चकुचौ भवन् प्रभाभर-चक्रभ्रमिमातनोति यत्" नैषधम्। अस्मात् उत्कर्षे तरप् तमप्। "किंस्वित् गुरुतरं भूमेः किं स्विदुच्चतरञ्च खात्" भा०व० ३१३अ०। उच्चतमम्" कात्या० ७,१, १५। देवयजनवर्णने "परितः समीपदेशवर्त्तिप्रदेशेभ्यो यद तिशयेनोच्चम्" कर्कः। राशिचक्रमध्ये ग्रहविशेषाणां २राशिभेदे, यथा "मेषो वृषो मृगः कन्या कर्कमीनतुलाधराः। भास्करादेर्भवन्त्युच्चाः राशयः क्रमशस्त्विमे" ज्योति०त०। स्पष्टमुक्तं तत्रैव "रविर्मेषे वृषे चन्द्रो गुरुः कर्के बुधः स्त्रियाम्। शनिर्युके (तुलायाम्) मृगे (मकरे)भौमः शुक्रो मीने च तुङ्गिनः"। तेषां राशिभागभेदे परमोच्चतामाह तत्रैव "त्रिंशद्भागे दिशो (१०) रामाः (३)अष्टविंशतिभिस्तिथिः १५। तथेषुः (५) सप्तविंशश्च विंशतिश्चोच्चसंज्ञकाः"। तथा च रवेर्मेषस्य दशमे भागे,

परमोच्चता चन्द्रस्य वृषे ३अंशे, कुजस्य मकर २८भागे बुधस्य कन्यायाः १५भागे, गुरोः कर्क ५भागे, भृगोः मीन २७भागे शनेस्तुला २०भागे तथात्वम् । 'स्वोच्चात् सप्तमं नीचं प्राग्वद्भागैर्विनिर्दिशेत् । उच्चान्तः स्वोच्चसंज्ञः स्यात् नीचान्ते तु सुनीचकः" परिपूर्णबलः स्वोच्चे सुनीचे दुर्बलोऽपि च । स्वोच्चसुनीचयोरन्तर्भागहारात् फलं दिशेत्" ज्योति०त० राशुक्तास्तु "उच्चं मनुष्यं षष्ठभं त्रिकोणं कन्यान्त्यं शुक्रशनी च मित्रे । सूर्य्यः शशाङ्को-ऽरवीज्ञतयः राहोः रिपुर्विंशतिकः परांशः । सिंहस्त्रि-कोणं धनुरुच्चसंज्ञं मीनोऽरिरं शुक्रशनी विपक्षौ । सूर्य्यार-चन्द्राः सुहृदः समानौ जीवेन्दुजौ षट्शिखिनः परांशाः" ज्यो०त० । राशिपरत्वेऽस्य पुंस्त्वं भपरत्वे क्लीबतेति भेदः । भागहारात् फलबलोक्तौ तदानयनप्रकारः नी०ता० सूर्यादेर्व्विपरीत्योच्चाल्पभाव "तत् सप्तमं नीचमनेन हीनो ग्रहोऽधिकश्चेत् रसभाद्विशोध्यः । चक्रात्, तदं-शाद्युवतो बलं स्यात्" २तथा च ताजके स्वोच्चे २०कला बलं तेन षड्भिः राशिभिर्यदि पूर्णबलं तदा हृतांशैः किमिति १८०, २०, १, लं राशिकेन प्रत्येकांशं १/९ कलमा-याति । जातके तु स्वोच्चे ६०कला बलं तेन प्रत्यंशं १/३ कलम् । नी०ताजके 'त्रिंशत्स्वभे विंशतिरुच्चभे च'' इति उक्तम् । जातके तु श्रीपतिः ६० कला बलमाह यथा "नीचोनोच्चग्रहोऽधिको यदि भवेत् षड्भात् तदाप्र-च्युतचक्रात् कृतकः षष्ट्यादष्टकृभि (१०८००) र्भक्तो-बलं तत्क्रमम् । पादोनं तु बलं ३/४, त्रिकोणगृहे स्वर्क्षे १/२ दलं च तयो १/८ बलांशा ह्यधिमित्रगेऽस्य चरणो १/४ मित्रे समर्क्षेऽष्टमः । १/८ । शत्रुभे भवति षोडशांशक ११६ चाधिशत्रुभवने द्वादशांशकः १/१२ । अत्र त्रिकोणादौ पादोनादिबलकथनात् स्वोच्चे पूर्णबल-मिति प्रतीयते तेन ६०कलात्मक बलम् ।

६ स्वाभिमानिनि ग्रहाणां गतिभेदकारके भगवत्ये २जीव-भेदे तेनैवाकर्षणात् शुक्राणामुच्चादिगतिसम्भवः ।

स च द्विविधः शीघ्रोच्चः मन्दोच्चश्च तात्पर्योच्च-तायां कारणत्व सू०सि० रङ्गनाथाभ्यां दर्शितं यथा "अदृश्यरूपाः कालस्य मूर्त्तयो भगणाश्रिताः । शीघ्रमन्दोच्चपाताख्या ग्रहाणां गतिहेतवः" सू०सि०१। "शीघ्रो-च्चमन्दोच्चपातसञ्ज्ञकाः पूर्व्वोक्तपदार्था जीवविशेषाः सूर्य्या-दिग्रहाणां गतिकारणभूताः सन्ति । ननु कालेनैव ग्रह-चलनं भवतीति कालो गतिहेतुर्नैव इत्यत आह कालस्येति । पूर्व्वप्रतिपादितकालस्य स्वरूपाणि तथा चैषां कालमूर्त्तित्वेन ग्रहगतिहेतुत्वं नासम्भवीति भावः । ननु कालस्य वर्षादिमूर्त्तित्वादेषां तदात्मक-त्वाभावात् कथं कालमूर्त्तित्वमित्यत आह भगणाश्रिता इति । भगोलस्थक्रान्तिवृत्तानुवृत्तग्रहगोलस्थक्रान्तिवृत्त-प्रदेशाश्रिता इत्यर्थः । तथा च ग्रहराश्यादिभोगानां कालवशेनैवोत्पन्नत्वात् तदात्मकानां कालमूर्त्तित्वमिति भाव । ननु ते दृश्यन्ते कुतो नेत्यत आह अदृश्यरूपा इति । वायवीयशरीरा अव्यक्तरूपत्वादप्रत्यक्षा इति भावः । एवं च ग्रहाणामुच्चादिसम्भवात् स्पष्टक्रियोत्पन्नेति तात्पर्य्यम् १। अथानयोरुच्चपातयोर्मध्य उच्चयोर्गतिहेतुत्वं प्रतिपादयति" र०ना०१ "तद्वातरश्मिभिर्बद्धास्तैः सव्येतरपाणिभिः । प्राक् पश्चादपकृष्यन्ते यथासन्नं स्वदिङ्मुखम्" २ सू०सि० । "तेषामुच्चसंज्ञकजीवानां वायुरूपा ये रश्मयो रज्जवस्ता-भिर्बद्धा बिम्बात्मकग्रहास्तैरुच्चसंज्ञकजीवैः सव्यवामहस्त-रूपत्वेन दक्षिणवामहस्ताभ्यामित्यर्थः । स्वदिङ्मुखं स्वाभिमुखं यथासन्नं ग्रहबिम्बं भवति तथा प्राक् पश्चात् पूर्व्वपश्चिमभागाभ्यामित्यर्थः । अपकृष्यन्ते आकृष्यन्ते । अयमभिप्रायः भचक्रगोलस्थक्रान्ति-वृत्तानुवृत्तग्रहकक्षागोलान्तर्गतक्रान्तिवृत्ते कक्षावृत्ते स्वस्व-प्रदेशे ग्रहोच्चपाताधिष्ठातारः । तत्र बिम्बस्थानीयकक्षा-कारवृत्तं प्रवहवायुतिरिक्तवायुरूपं स्वतोगतिस्थाने कम्प्यमानं ग्रहबिम्बद्वयस्य पूर्वापरे प्रोतसूक्ष्मजीवरूपतु-वान्तर्गतमस्ति । अथ ग्रहबिम्बस्योच्चस्थानात् स्वगत्या गच्छदपि वामहस्तस्थितसूत्रे स्वोच्चस्थानात्, पूर्वरूपेण ग्रह-स्थानात् पश्चिमरूपेण दक्षिणहस्तस्थितसूत्रेण स्वाभ्या-शात् पश्चात् स्वाभिमुखमपकृष्यते निरन्तरमुच्चदेवतैः स्व-गत्या यावत् षड्भान्तरं तयोरन्तरं तन्मार्गेणाकर्षणस-म्भवात् पूर्वस्मिन् गच्छत् ग्रहबिम्बं, सव्यहस्तस्थितसूत्रे-णोच्चस्थानात् पूर्वस्मिन् स्वाभिमुखमाकृष्यते स्वगत्या नि-रन्तरं यावदन्तराभावस्तयोरिति" र०ना० । "अथात एवैक-रूपां पूर्वाभिमुखाधिकारावगतां गतिं त्यक्त्वा कुतः प्रत्यक्षविलक्षणां गतिं प्राप्ता ग्रहा इत्यत आह । "प्रवहाख्यो मरुत् तांस्तु स्वोच्चाभिमुखमीरयेत् । पूर्वापरापकृष्टास्ते गतिं यान्ति पृ-थग्विधाम्" सू०सि०१। "प्रवहाख्यः प्रवहसंज्ञको मरुद्वायुः पश्चिमाभिमुखं भमं तान् तत्कालग्रहान् स्वोच्चाभिमुखं स्वस्य प्रवहभ्रमणेनोच्चं भावप्रधाननिर्देशादुच्चता यस्यां दिशि तत् स्वोच्चं पूर्वदिक् पूर्वभाग एव ग्रहाणां प्रवहभ्रमे-

च्चोच्चगमनदर्शनात् तत्सम्मुखं पूर्व्वदिशीति तात्पर्य्यार्थः।
ईरयेत् पश्चिमाभिमुखभ्रमणशीलप्रागुक्तप्रवहानिलरूपेण
चालयतीत्यर्थः। अतः कारणात् ते ग्रहाः पूर्वपश्चि-
मदिशोराकृष्टाः पृथग्विधां प्रथमावगतैकरूपभिन्नप्रका-
रावगतां प्रतिक्षणविलक्षणां गतिं गमनक्रियां यान्ति
प्राप्नुवन्ति। अवलम्बनाकर्षणाभ्यां प्रतिदिनं ग्रहाणां
गतेरन्यादृशत्वं तदनुसारेण ग्रहचारस्थानं युक्तमिति
ग्रहाणां स्पष्टक्रियोत्पन्नेति भावः। यद्वा ननु वायु-
रज्जुभिः कथं ग्रहाणामाकर्षणं सम्भवति तद्रज्जूनां
शिथिलतया घनीभूतत्वाभावेनाकर्षणायोग्यत्वादित्यत आह।
प्रवाहाक्षिप्त इति। उच्चदेवताहस्तहयस्थितकशाकारस्थलं
वायुः प्रवहवायुसम्बन्धात् प्रवहसञ्ज्ञो न पश्चिमाभिमु-
खभ्रमत्प्रवहात्मकस्तान् ग्रहान् स्वोच्चाभिमुखं स्वोच्चदेवता
स्थानसम्मुखमीरयेत् प्रेरयति चालयति। तुकारादुच्च
स्थानात् पूर्वस्मिन् ग्रहे वायुः पश्चिमगत्या ग्रहं चाल-
यति पश्चिमस्थे वायुः पूर्वगत्या ग्रहं चालयतीत्यर्थः।
तथा च कशाकारस्थलं तदा तदा तथा तथा भ्रमतीति
दैवतैराक्षिप्त इत्युपचारादुच्यत इति भावः। अत एव
ग्रहाणां स्पष्टक्रियोत्पन्नेत्याह। पूर्वापराकृष्टा इति
उच्चदैवतैः पूर्वापरदिशयोराकृष्टा ग्रहाः पृथग्विधां
मध्यमातिरिक्तप्रकारां गतिं गमनक्रियां यान्ति। अतो
न केवलं मध्यक्रियया निर्वाहः" र०ना०। अथ प्राक्
प्रसाटपलक्ष्यन्त इत्युक्तं विशदयति। "ग्रहात् प्राग्भगणा-
र्द्धस्थः प्राङ्मुखं कर्षति ग्रहम्। उच्चसञ्ज्ञोऽपरार्द्धस्थ-
स्तद्वत् पश्चान्मुखं ग्रहम्" स०सि०। "ग्रहस्थानात्
पूर्वभागस्थराशिषट्कस्थित उच्चसञ्ज्ञो जीवो ग्रहबिम्बं
पूर्वदिगभिमुखं स्वाभिमुखं कर्षत्याकर्षति। अपरा-
र्द्धस्थो ग्रहस्थानात् पश्चिमभागस्थराशिषट्कस्थितउच्च-
सञ्ज्ञो जीव इत्यर्थः। ग्रहबिम्बं पश्चान्मुखं पश्चिम-
दिगभिमुखं स्वाभिमुखं तद्वदाकर्षतीत्यर्थः" र०ना०।
"अथ पूर्वोक्तसिद्धं फलितमाह। 'स्वोच्चापकृष्टा भगणैः
प्राङ्मुखं यान्ति यद् ग्रहाः। तत् तेषु धनमित्युक्तमृणं
पश्चान्मुखेषु तु" सू०सि० ५। "स्वोच्चजीवाकर्षिता
ग्रहाः पूर्वाभिमुखं भगणैः राशिभिर्भगोलस्थक्रान्ति-
वृत्तानुसारभागात्मकोत्तरक्रान्तिवृत्ते द्वादशराशि-
मिते यद्राशिविभागैरित्यर्थः। यद् यत्संख्याभिर्गं
गच्छन्ति तत् तत्संख्याप्रमितं भागादिकं फलरूपं तेषु
... ग्रहेषु ... धनं ... पश्चात् तेषु

पश्चिमाकर्षितग्रहपूर्वाभिमतराश्यादिभोगेषु तुकारादुच्च-
स्थानाभिमतं फलरूपं पश्चिमतो गच्छन्ति तदित्यर्थः। ऋणं
ह्येनमिति एतत् पूर्वैः कथितम्" र०ना०५। सि०शि०
"दृष्ट्वा भचक्रं कमलोद्भवेन ग्रहैः सहैतद्भगणादिसंस्थैः।
शश्वद्भ्रमे विश्वसृजा नियुक्तं तदन्ततारे च तथा
ध्रुवत्वे। ततोऽपराशाभिमुखं भपञ्जरे सखेचरे शीघ्रतरे
भ्रमत्यपि। तदल्पगत्येन्द्रदिशं नभश्चराश्चरन्ति नीचो-
च्चतराश्मयत्सु"। "यदेतद्भचक्रं ग्रहैः सह भ्रमद्दृश्यते
तद्विश्वसृजा जगदुत्पादकेन कमलोद्भवेन ब्रह्मणा सृ-
ष्ट्यादौ दृष्ट्वा तत् शश्वद्भ्रमेऽनवरतभ्रमणे नियुक्तम्।
एतदुक्तं भवति। आन्यश्विन्यादीन्यन्यानि विशिष्टानि
ज्योतींषि तेषां समूहश्चक्रं ग्रहाश्च सूर्यादयस्तैः सह
सृष्टम्। तानि भानि प्राक्संस्थया अश्विन्यादिवे-
शितानि। ग्रहास्तु भगणादावश्विनीमुखे निवेशितास्त
उपर्य्युपरिसंस्थया। तत्रादौ तावच्चन्द्रः तदुपरि
बुधः, ततः शुक्रः, ततो रविः तस्माद्भौमः, ततो गुरुः
ततः शनिः। सर्वेषामुपरि दूरे भचक्रम्। एषां कक्षा-
प्रमाणानि कक्षाध्याये प्रतिपादयिष्यन्ते। अहो यद्य-
श्विन्यादिस्था ग्रहास्तदोपरि दूरतो भगणास्तत् कथं भग-
णादिसंस्थैर्ग्रहैरित्युच्यते? सत्यम्। अत्र भूमध्ये सूत्र-
स्यैकमग्रं बद्ध्वा द्वितीयमग्रं भचक्रेऽश्विनीमुखे किल नि-
बद्धम्। तस्मिन् सूत्रे प्रोता मणय इव चन्द्रादयो
ग्रहाः सृष्ट्यादौ ब्रह्मणा निवेशिताः। भचक्रं द्वाद-
शधा विभज्यैवं भूमध्यात् सूत्राणि प्रतिभागं नीत्वा
किल बद्धानि तैः सूत्रैः सह ग्रहकक्षायां ये संपातास्ते
तासु कक्षासु राश्यन्ताः। सहतप्रकारा राशय इति
संक्षिप्तमिदमुक्तम्। कक्षाध्याये गोले च किञ्चिद्विस्तार्य्य
वक्ष्यामः। एवंविधं भचक्रं सृष्ट्वा ब्रह्मणा गगने नि-
वेशितम्। यत्र निवेशितं तत्र प्रवहो नाम वायुः।
स च नित्यं प्रत्यग्गतिः। तेन समाहतं भचक्रं सखेचरं
पश्चिमाभिमुखभ्रमणे प्रवृत्तम्। यत् तस्य प्रत्यग्भ्रमणं
तच्छीघ्रतरम्। यत एकेनाह्ना भमण्डलस्य परिवर्त्तः।
एवं तस्मिन् भपञ्जरे सखेचरे शीघ्रतरे भ्रमत्यपि खेचरा
इन्द्रदिशं चरन्ति पूर्वाभिमुखं व्रजन्ति नीचोच्चतरा-
श्मयत्सु। अनन्तरकथितेषु सूत्रमार्गेषु तेषां प्राग्भ्र-
मणम्। तत् तदल्पगत्या, प्रत्यग्गतेर्वैरूप्यात् प्रागल्प-
गत्या व्रजन्तो नोपलक्ष्यन्त इति भावः। तथा तस्य भप-
ञ्जरस्य यौ दक्षिणोत्तराग्रौ तत्र ये तारे ते ध्रुवत्वे

निगुह्ये" प्रश्न० । तथा ज्योतिषे । "स्वव्यापारात् प्राग्गतिः खेटानामूर्ध्वाधस्ताद्याम्यसौम्यापराणि । गोलाभिज्ञैः यत्र यातानि तानि तेषामस्ताम्यस्यहेतुभिः तानि । प्रत्यग्गतिः प्रवहवायुवशेन तेषां नीचोच्चवृत्तजनितोर्ध्वमधश्च वा स्यात् । याम्योत्तरा स्वपमदृक्सविमण्डलाभ्यां षोढा गतिर्निगदितैरमिह ग्रहाणाम्" उच्चता च महत्त्वव्याप्यगुणभेदः । सा च स्वपर्य्युपरिस्थितावधिभावयधर्मा महत्त्वे भवति तत्र गुणवत्त्वात् ततः भावेऽर्थे ष्यञ् । औच्च्यम उच्चतायां न० । त्व । उच्चत्व तत्रार्थे न० तल् । उच्चता स्त्री । "जज्ञे गृहपञ्चके हरगुरौ सेन्दौ नवम्यां तिथौ लग्ने कर्कटके पुनर्वसुदिने मेषं गते पूष्णि । निर्दग्धुं निखिलाः पलाशसमिधः मेध्यादयोध्यारणेराविर्भूतमभूदपूर्व्वविभवं यत्किञ्चिदेकं महः" तिथित० पु० । "ग्रहैस्ततः पञ्चभिरुच्चसंस्थितैरसूर्य्यगैः सूचितभाग्यसम्पदम्" रघुः । "स्वोच्चस्थः स्वगृहेऽपि वा स्वसुहृदां वर्गेऽपि वा" ज्योति०त० ।

उच्चकैस् अव्य० उच्चैस्+टेरकच् । १उच्चतायां २तद्विशिष्टे च । "जनितमुदस्यादुच्चकैरुद्धृतोर" "स्थितोदयाद्रेरभिसायमुच्चकैः" माघः । उत्कर्षार्थे तरबादि उच्चैस्तराम् ।

उच्चक्षुस् त्रि० ऊर्द्ध्वमुत्पाटितं वा चक्षुर्यस्य प्रा०ब० । १ऊर्द्ध्वोत्क्षिप्तनेत्रे २उत्पाटितनेत्रे च । ततः च्वि उच्चक्षूकरोति उच्चक्षूभवति अच्चक्षुष्कृत्याम् ।

उच्चटा स्त्री उद्+चट–अच् । १लशुनभेदे, २गुञ्जायां ३चूडालायाम्, ४भूम्यामलक्याम् ५नागरमुस्तायाञ्च ।

उच्चण्ड त्रि० उद्+चडि–अच् । १अत्यन्तोग्रे २अतिकोपने, ३त्वरायुक्ते ४अनिर्लम्बिते । ४भयङ्करमूर्त्तौ पुं० ५तद्वति त्रि० ।

उच्चतरु पु० कर्म० । नारिकेले वृक्षे । २उच्चवृक्षमात्रे च ।

उच्चताल न० उच्चः तालः हस्ततालो यत्र । १पानगोष्ठ्यां मत्ततया तत्र उच्चैर्हस्ततालदानात्तथात्वम् ।२उच्चतालयुक्ते च ।

उच्चदेव पु० उच्चः श्रेष्ठो देवः । वासुदेवे त्रिका० । तस्य "सर्वदेवमयो हरिः" इत्युक्तेः सर्वदेवमयत्वात् सत्त्वप्रधानत्वाच्च उत्कृष्टत्वम् अतएव भागवते "श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युरिति" सत्त्वप्रधानत्वात् तस्य श्रेयःसाधनत्वमुक्तम् ।

उच्चन्द्र पु० उच्छिन्नः स्खल्याऽपगतश्चन्द्रो यत्र प्रादि०ब० निष्ठान्तलोपः । रात्रिशेषे शब्दरत्ना० ।

उच्चय पु० उत्पाट्य चयः चि–अच् । १पुष्पादेरुत्तोलने । "पुष्पोच्चयं नाटयति" शकु० । "करिष्यामि शरैस्तीक्ष्णैस्तच्छिरः कमलोच्चयम्" रघु० । "प्राञ्चपञ्चदर्भकोशेन कथा स्नाप्योकापालप्रभृतीनाम्" कात्या० २,७,२० । "उच्चये पुरुषोऽप्येकैकशतविधात् १६, ८,२१. २नारीकट्यंशुकग्रन्थौ "नीविः स्यादुच्चयोऽव्ययम्" [illegible] ३उत्कर्षे च । ४स्तूपसमुदाये च अभ्युच्चय । "वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः" सा०द० । "स निष्प्याकुञ्चि रामोऽधी मनःशिलोच्चये" रामा० । "एकतः सरितः सर्वाः गङ्गाद्याः सलिलोच्चयाः" भा०व० ८८ अ० । "नैकरत्नोच्चयवतीं सब्रह्मविषयापणाम्" भा० अनु० ३०अ० । "शिलोच्चयोऽपि क्षितिपालसद्मैः" रघुः । कर्म्मणि अच् । ४हस्ताभ्यामुद्धृत्यावचिते नीवारे" हारा० ।

उच्चल न० । उद्+चल–अच् । १मनसि हेमच०तत्र "असंशयं महाबाहो ! मनो दुर्निग्रहं चलम्" गीतोक्तेश्चलस्वभावत्वात्तथात्वम् ।२चलस्वभावमात्रे त्रि०।

उच्चलित त्रि० उद्+चल–क्त । गमनोद्यते प्रस्तुते गन्तुमुद्युक्ते

उच्चललाटा स्त्री उच्चं ललाटं यस्याः । उन्नतललाटरूपदुर्लक्षणायां स्त्रियाम् । स्त्रीणां च दुर्लक्षणम् कन्याशब्दे वक्ष्यते

उच्चनीच त्रि० उच्चश्च नीचश्च मयू० समा० । उन्नतावनतप्रदेशादौ "कृतारमुच्चनीचानां कर्म्मभिर्देहिनां गतिम्" । भा० आश्व०१६ अ० ।

उच्चा अव्य० उद्+चो–डा । १उच्चैःशब्दार्थे । "अमी य ऋक्षा निहिता स उच्चा" ऋ० १,२४,१० । "उच्चा उच्चैःप्रदेशे" भा० । "उच्चा दिवि दक्षिणावन्तो अस्थुः" ऋ० १०,१०७,२ । "उच्चाकं द्युम्नमधिपश्च कपिप्रूश्चा" २,२,१० । "उच्चा उच्चैः" भा० । "अवतमुच्चाचक्रं परिज्मानम्" ८,७२,१० । "उच्चाचक्रमुपरिस्थितचक्रम्" भा० "उच्चाबुध्नं नीचादुच्चाचक्रयुः पातवे वाः" ऋ० १,११६,२२ । २उन्नतायां स्त्रियां स्त्री "उच्चारणत्पविनगणासटोत्कटम्" माघः ।

उच्चाटन न० उद्+चट्–णिच्–ल्युट् । १उत्पाटने स्वस्थानात् २विश्लेषणे "उच्चाटनं स्वदेशादेर्भ्रंशनं परिकीर्त्तितम्" इति शा०ति० उक्ते ३षट्कर्म्मान्तर्गतेऽभिचारभेदे च । उच्चाट्यतेऽनेन करणे ल्युट् । तन्त्रोक्ते ४तत्साधनकर्म्मणि । तन्त्रसारे वगलाया अभिचारप्रयोगे कुण्डलक्षणमुपक्रम्य "वश्ये तु चतुरस्रं स्यादाकर्षे तु त्रिकोणकम् । तथैवोच्चाटने प्रोक्तं षट्कोणे मारणं स्मृतम् । वश्ये मेषासनं श्रेष्ठं कर्षणे व्याघ्रचर्म्मणि । शान्तौ कुशासनं प्रोक्तं स्तम्भे गोचर्म्मणि स्मृतः । उष्ट्रासनं तथोच्चाटे विद्वेषे तुरगा

सनम्' मारणे मर्द्दभीचर्म्म गोऽथ वा गजासनम्। मधुवाजतिलाद्रीनि वश्यशान्तिकराणि च। आकर्षणे तथा क्षौद्रं घृतेन मधुरान्वितम्। निम्बपत्रन्तु तैलाक्तं विद्वेषकरणं परम्। हरितालं हरिद्रा च लवणेन च संयुता। स्तम्भयेत्तत् देवेशि! प्रशास्त्रैव गतिं मतिम्। वाजिनायस्य सारेण रुधिरेण च होमयेत्। मारणे तु रिपोर्द्देवि! श्मशानाग्नौ कुले शिवि। कुक्कुटानां काकपक्षाणां कटुधूमेन संयुतम्। लाजान् त्रिमधुरोपेतान् सर्वरोगप्रशान्तये" तन्त्रसा० उच्चाटनप्रकारा बहवो दर्शितास्तत्र सामान्यप्रकारस्तत्राभिधीयते निबन्धे "शान्तिवश्यस्तम्भनानि विद्वेषोच्चाटने ततः। मारणं तानि शंसन्ति षट् कर्माणि मनीषिणः॥ रतिर्वाणी रमा ज्येष्ठा दुर्गा काली यथाक्रमात्। षट्कर्म्मदेवताः प्रोक्ताः कर्म्मादौ ताः प्रपूजयेत्। ईशचन्द्रेन्द्रनिर्ऋतिवाय्वग्नीनां दिशोमताः। सूर्य्योदयं समारभ्य घटिकादशकं क्रमात्। ऋतवः स्युर्वसन्ताद्या अहोरात्रे दिनेदिने। वसन्तग्रीष्मवर्षाख्यशरद्धेमन्तशैशिराः। अर्कं शान्तिविधौ शस्तं वश्ये वह्निरुदाहृतः। स्तम्भने पृथिवी शस्ता विद्वेषे व्योम कीर्त्तितम्। उच्चाटने स्मृतो वायुर्भौमाग्निर्मारणे मतः। तत्तद्भूतोदये सम्यक् तत्तन्मण्डलसंयुतम्। तत्तत् कर्म्म प्रकर्त्तव्यं मन्त्रिणा निश्चितात्मना। शीतांशुसलिलक्षोणीव्योमवायुहविर्भुजाम्। वर्णाः स्युर्बीजानि षट्कर्मसु यथाक्रमम्। ग्रथनञ्च विदर्भश्च संपुटो रोधनं तथा। योगः पल्लव इत्येते विन्यासाः षट्सु कर्मसु। मन्त्रार्णान् विहितान् कृत्वा साध्यवर्णान् यथाविधि। ग्रथनं तत् विजानीयात् प्रशस्तं शान्तिकर्मणि। मन्त्रार्णद्वयमध्यस्थं साध्यनामाक्षरं लिखेत्। विदर्भ एष विज्ञेयो मन्त्रिभिर्वश्यकर्मणि। आदावन्ते च मन्त्रः स्यान्नाम्नोऽसौ संपुटः स्मृतः। एष स्यात् स्तम्भने शस्त इत्युक्तो मन्त्रवेदिभिः। नाम्न आद्यन्तमध्येषु मन्त्रः स्याद्रोधनं स्मृतम्। विद्वेषणविधाने तु प्रशस्तमिदमुत्तमम्। मन्त्रस्यान्ते भवेन्नाम योगः प्रोच्चाटने मतः। अन्ते नाम्नो भवेन्मन्त्रः पल्लवो मारणे मतः"। भूतानामुदयः शा० ति०। "दण्डाकारा गतिर्भूमेः पुटयोरुभयोरधः। तोयस्य, पावकस्योर्द्ध्वं गतिस्तिर्य्यङ्नभस्वतः। गतिर्व्योम्नो भवेन्मध्ये भूतानामुदयः स्मृतः। धरण्युदये कुर्य्यात् स्तम्भनं वश्यमात्मवित्। शान्तिकं पौष्टिकं कर्म तोयस्य, तेजसस्तथा। मारणादीनि मरुतो विपक्षोच्चाटनादिकम्। नभसि विद्वेषणं यत्नमुदये च विजानतः"। भूतसम्बन्धादिकं तत्रैवावसेयम्। षट्कर्मकरणनिमित्तमाह रुद्रयामले 'उपस्थिते महापत्तौ राष्ट्रपीडासु रुग्भये। भूमिविकम्पहोत्पाते भूतभीतिविपत्सु च। नातःपरतरं कर्म्म मतो शान्तिकरं प्रिये!। मारणं मोहनं स्तम्भं विद्वेषणमथापि वा। वशीकरणकर्म्माणि तथोच्चाटनकर्म च। सर्वत्र साधयेन्मन्त्री ततोनान्यत् शुभावहम्। विशेषतः शत्रुसंघरोगोपद्रवनाशनम्। शत्रूणां कर्म्मनाशे च तथा शत्रुपराजये। आत्मनो विजये चैव नातःपरतरा क्रिया"। घञ्। उच्चाटोऽप्यत्र पु०। 'उच्चाटन तथोच्चाटे' तन्त्रसारः।

**उच्चार** पु० उद्+चर-णिच्-घञ्। १उच्चारणे। "तस्य कार्य्योऽनुस्वारः" सु० बो०। "मन्त्रोच्चारपरायणः" पु०। उच्चार्य्यते अपानवायुना उत्क्षिप्यते कर्म्मणि घञ्। २पुरीषे। विण्मूत्रोत्सर्गविधानप्रकारः आ० त० नानावचनैर्दर्शितो यथा विष्णुधर्म्मोत्तरे "निद्रां जह्यादुत्कृष्टो राम! नित्यमेवारुणोदये। वेगोत्सर्गं ततः कृत्वा दन्तधावनपूर्ब्बकम्। अरुणोदयकालमाह स्कन्दपुराणम् "उदयात् प्राक् चतस्रस्तु नाडिका अरुणोदयः। तत्र स्नानं प्रशस्तं स्यात्तद्धि पुण्यतमं स्मृतम्"। नाडिका दण्डः। "नाडीषष्ठा दिशानियम्" इत्युक्तेः। विष्णुधर्म्मोत्तरे 'वेगरोधं न कर्त्तव्यमन्यत्र क्रोधवेगतः'। "वेगरोधं न कर्त्तव्यमिति तु कां दिशं गन्तव्यमितिवत् भावाख्यातेतरत्वात् साधुत्वम्। आयुर्वेदेऽपि "न वेगितोऽन्यकार्य्यः स्यात् नाजित्वा साध्यमामयम्"। अङ्गिराः "उत्थाय पश्चिमे रात्रे तत आचम्य चोदकम्। अन्तर्द्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा। वाचं नियम्य यत्नेन ष्ठीवनोच्छ्वासवर्जितः। कुर्य्यान्मूत्रपुरीषे तु शुचौ देशे समाहितः" विष्णुपुराणम् "ततः कल्यं समुत्थाय कुर्य्यान्मूत्रं नरेश्वर!। नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकं भुवः" तिष्ठेन्नातिचिरं तस्मिन्नैव किञ्चिदुदीरयेत्"। कल्यमुषःकालम्, मैत्रं मित्रदेवताकपायुसम्बन्धात् पुरीषोत्सर्गम्, नैर्ऋत्यामुत्थानदेशमारभ्य तत्रामेत्यनेनोपस्थितेः। इषुविक्षेपमतीत्य इषुविक्षेपयोग्यदेशादधिकः। तद्देशपरिमाणमाह पितामहः "मध्यमेन तु चापेन प्रक्षिपेत्तु शरत्रयम्; ततानान्तु परे सार्द्धं कर्म्म कार्य्यं विचक्षणः"। आपस्तम्बः 'मूत्रपुरीषे कुर्य्यात् दक्षिणां दिशं दक्षिणापराम्वेति"। दक्षिणापरा नैर्ऋती। मनुः "मूत्रोच्चारसमुत्सर्गं दिवा कुर्य्यादुदङ्मुखः। दक्षिणाभिमुखो

रात्रौ सन्ध्ययोश्च यथा दिवा"। उच्चारः पुरीषम्। यत्तु यमवचनं "प्रत्यङ्मुखश्च पूर्वाह्णे अपराह्णे च प्राङ्मुखः। उदङ्मुखस्तु मध्याह्ने निशायां दक्षिणामुखः" इति तत् उदङ्मुखेन सहैच्छाविकल्पार्थं सूर्य्याभिमुखनिरासार्थञ्च न तु नियमार्थं देशलवचनविरोधात्। तथा च "सदैवोदङ्मुखः प्रातः सायाह्ने दक्षिणामुखः। विण्मूत्रे आचरेन्नित्यं सन्ध्यायां परिवर्जयेत्" इति। प्रातःसायाह्नशब्दौ दिवारात्रिपरौ पूर्व्वोक्तमनुवचनैकवाक्यत्वात्। सन्ध्यायां परिवर्जयेदिति तु पीडितेतरपरम्। यमः "कृत्वा यज्ञोपवीतन्तु पृष्ठतः कण्ठलम्बितम्। विण्मूत्रे च गृही कुर्य्यात् यद्वा कर्णे समाहितम्"। पृष्ठतः पृष्ठे कण्ठलम्बितं निवीतम्। अत्र लम्बितं निवीतम्। "संवीतं मानुषे कार्य्ये" इति तैत्तिरीयश्रुतेः। मानुषे सनकादिकार्य्ये। "पृष्ठलम्बितं निवीतम्" इति बौधायनवचनाच्च। तथा च हारवत् कृत्वा पृष्ठलम्बितम् कार्य्ये इत्यर्थः। अत्र व्यवस्थामाह शाङ्खायनः। "यद्येकवस्त्रो यज्ञोपवीतं कर्णे कृत्वा अवगुण्ठितः" इति कर्णे दक्षिणकर्णे। "पवित्रं दक्षिणकर्णे कृत्वा विण्मूत्रमाचरेत्" इति स्मृतौ तथा दर्शनात्। अवगुण्ठितः कृतशिरोऽवगुण्ठनः। मनुः "छायायामन्धकारे वा रात्रावहनि वा द्विजः। यथासुखमुखः कुर्य्यात् प्राणबाधाभयेषु च" महाभारते। "प्रत्यादित्यं प्रत्यनलं प्रति गाञ्च प्रतिद्विजम्। मेहन्ति ये च पथिषु ते भवन्ति गतायुषः"। प्रतिः साम्मुख्ये। मनुः "न मूत्रं पथि कुर्व्वीत न भस्मनि न गोव्रजे। न फालकृष्टे न जले न चित्यां न च पर्व्वते। न जीर्णदेवायतने न वल्मीके कदाचन। न ससत्त्वेषु गर्त्तेषु न गच्छन्नपि संस्थितः। न नदीतीरमासाद्य न च पर्व्वतमस्तके। वाय्वग्निविप्रानादित्यमपःपश्यंस्तथैव च। न कदाचन कुर्व्वीत विण्मूत्रस्य विसर्जनम्"। ससत्त्वेषु प्राणिमत्सु संस्थितः उत्थितः पर्व्वतमस्तकनिषेधोऽधिकदोषाय। वशिष्ठः। "आहारनिर्हारविहारयोगाः सुसंवृता धर्म्मविदा तु कार्य्याः। वाग्बुद्धिकार्य्याणि तपस्तथैव धनायुषी गुप्ततमे तु कार्य्ये"। निर्हारो मूत्रपुरीषोत्सर्गः विहारः स्त्रीसम्भोगः। योगः समाधिः। वाग्गुप्तिरश्लीलापत्यागः। बुद्धिगुप्तिरनिष्टचिन्तात्यागः। हारीतः "आहारन्तु रहः कुर्य्यात् निर्हारञ्चैव सर्व्वदा। गुप्ताभ्यां लक्ष्मीयुतः स्यात् प्रकाशे हीयते तथा"। विष्णुपुराणम् "सोमाग्न्यर्काम्बुवायूनां पूज्यानाञ्च न सम्मुखे। कुर्य्यात् ष्ठीवनविण्मूत्रसमुत्सर्गञ्च पण्डितः"। आपस्तम्बः "न च सोपानत्को मूत्रपुरीषे कुर्य्यादिति"। हस्तमनुः "करण्डीतपात्रेण कृत्वा मूत्रपुरीषके। मूत्रतस्यन्तु पानीयं पीत्वा चान्द्रायणञ्चरेत्"। भरद्वाजः "अथ निष्क्रम्य विण्मूत्रं लोष्ट्काष्ठतृणादिना। उद्धृतवासा उत्तिष्ठेदुद्धृतं विभृतमेहनं" उद्धृतवासा कटिदेशादुत्क्षिप्तवस्त्रः" आ० त०। "मूत्रोच्चारौ च कारयेत्"। "यस्योच्चारं विना मूत्रं सम्यग् वायुश्च गच्छति" सुश्रु०। "दाने तपसि शौर्य्ये च यस्य न प्रथितं मनः। विद्यायामर्थलाभे च मातुरुच्चार एव सः" हितो०। उत्क्रान्त्या चारोगतिः। २ ग्रहादीनां राशिनक्षत्रान्तरसञ्चारे। "कथाप्रसङ्गे ग्रहेमाद्वैरीसञ्चितशिरश्चित्रित्"। "उच्चारे संक्रिकाकारैः" सि० शि० त०।

**उच्चारण** न० उच्चातेन कण्ठाद्यभिघातेन चार्य्यते निष्पाद्यते उद्+चर-णिच्-ल्युट्। कण्ठताल्वाद्यभिघातेन शब्दजनके व्यापारे तत्प्रकारस्तु "आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया। मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्। सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः। वर्णान् जनयते तेषां विभागः पञ्चधा मतः" इति शिक्षोक्तदिशावसेयः। वर्णोत्पत्तिस्थानानि चाष्टौ। "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च" शिक्षाकदुक्तानि। विवृतिर्वर्णशब्दे द्रष्टव्या। यथा च कण्ठताल्वाद्यभिघातैर्वोच्चारणसम्भवस्तथा" ईश्वरशब्दे अनुमा० चिन्ता० १०२६ पृष्ठे दर्शितम्। "उच्चारणज्ञोऽथ गिरां दधानम्" माघः। "वेदोच्चारणकार्य्यार्थमयुक्तं तत्त्वया कृतम्" भा० व० २१४ अ०। "सजातीयोच्चारणानपेक्षोच्चारणविषयत्वं वेदस्यापौरुषेयत्वम्" मीमांसकाः वेदान्तिनश्च प्रतिपेदिरे।

**उच्चारित** त्रि० उच्चार-तारका० इतच्। १कृतविण्मूत्रोत्सर्गे। उद्+चर-णिच्-कर्म्मणि क्त। यस्योच्चारणं कृतं तादृशे वर्णादौ "तत्र शक्तिवैकल्यप्रमादालसतादिभिः। अन्यथोच्चारिताः शब्दा अपशब्दा इतीरिताः" भर्तृह०। उद्+अन्तर्भूतण्यर्थे चर-क्त। उच्चरितोऽप्युक्तार्थे "सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति" तन्त्रार्थ्यपर्य्ये न्यायः।

**उच्चार्य्य** अव्य० उद्+चर-णिच्+ल्यप्। १कण्ठाद्यभिघातेन उत्पाद्येत्यर्थे। कर्म्मणि यत्। २उच्चारणीये वर्णादौ त्रि०।

**उच्चार्य्यमाण** त्रि० उद्+चर-णिच्-कर्म्मणि शानच्। यस्योच्चारणं क्रियते तस्मिन् वर्णादौ "कश्चित् कार्य्योच्चार्य्यमाणो वर्ण इत्संज्ञः" मुग्धबो०।

कार्य्येषु स्थिरतरो प्रयत्नः "उत्साहो बलमूलं स्यादिति नीतिविदां मतम् । प्रभुशक्तिर्मन्त्रमूला तस्मादुत्साहवान् भवेत्" इत्युक्ते राज्ञां ४गुणविशेषे, "धारैकोत्साहयोगेन क्रियवैं च कर्मणाम्" मनुः । "भीताविबोत्साहगुणेन सम्पद्" कुमा०।५बल्ये च, गन्धरसादौ हेमच, मेदिनी "भावोऽलम्बे संरम्भः स्थेयानुत्साह उच्यते" सा०द० उक्तलक्षणके वीररसस्य ७स्थायिभावे । स च वीररसस्य स्थायी भावः "रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा । जुगुप्सा विस्मयश्चेत्यष्टौ प्रोक्ताः शमस्तथा" स्थायिनो विभक्तास्य "उत्तमप्रकृतिर्वीरः उत्साहस्थायिभावकः" तत्रोक्तेः । तत्र उद्यममात्रे "मन्दोत्साहः कृतोऽस्मि मृगयापवादिना माधव्येन" शकु० "मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः" गीता "महोत्साहः स्थूललक्षः कृतघ्नोऽद्रुतवैरकः" या०स्मृ० । अस्त्यर्थे मत्वा०मतुप् इनि वा उत्साहिन् उत्साहवत् तद्विशिष्टे त्रि० स्त्रियां ङीप् ।

**उत्साहक** त्रि०उद्+सह–ण्वुल् । उत्साहान्विते "तत्काम्यामिति" पा० षष्ठीनिषेधेऽपि शाकटा० षष्ठी समासः । कार्य्योत्साहकः ।

**उत्साहन** न० उद्+सह–णिच्–ल्युट् । उत्साहजनने

**उत्साहवर्द्धन** पु०उत्साहं वर्द्धयति वृध–णिच्–ल्यु । वीररसे । वृध–ल्युट् ६ त०। उत्साहस्य वृद्धौ न०।

**उत्साहशक्ति** स्त्री उत्साहरूपशक्ति र्बलम् । राज्ञां विक्रमहेतौ बले । "षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः" अमरः । "कर्तव्येषु कर्मसु स्थेयान् प्रयत्न उत्साहः" भट्टि० ।

**उत्सिक्त** त्रि० उद्+सिच–क्त । १उद्रिक्ते अतिशयिते २हृष्टियुक्ते ३उद्धते गर्विते च । "आमोदादुत्सिक्तं वाचमुत्सिक्तमनसां तथा" मनुः ।

**उत्सुक** त्रि० उत्सुवति षु प्रेरणे मितद्वा०दि० डु कन्। १इष्टावाप्तये कालक्षेपासहिष्णौ २इष्टार्थोद्युक्ते च "दिनावसानोत्सुकबालवत्सा" "श्रुत्वा रामः प्रियोदन्तं मेने तत्सङ्गमोत्सुकः" "वत्सोत्सुकापि स्तिमिता सपर्य्याम्" "आपप्रच्छोत्सुकतारकां चित्रकूटस्थलीं अद्रौ" रघुः । उत्सुकस्य भावः ष्यञ् । औत्सुक्य तद्भावे न०। "इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता । चित्ततापत्वराखेदर्दोर्घनिश्वसितादिकृत्" सा० द० । "औत्सुक्येन कृतत्वरा सहभुवा व्यावर्त्तमाना ह्रिया" रत्ना० । भया० अभूततद्भावार्थे च्व्यः । उत्सुकायते उत्सुकायमाना "यक्षोत्सुकायमाना त्वं न प्रतोयायसेऽन्तिके" भट्टि:

**उत्सूत्र** त्रि० उत्क्रान्तः सूत्रम् अत्या० स०। विधानसूत्रातीते "अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना" माघः ।

**उत्सूर** पु० उत्क्रान्तः अतिक्रान्तः सूरं सूर्य्यम् अत्या० स० । दिनात्यये हेमच०उत्सूर्य्यादयोऽप्यत्र । "ओत् सूर्य्यमन्यानुत्सापयाव्युषम्"। अथ०४,५,७, "उत्सूर्य्यायिनवासत् सर्व्वे वासन् प्रगे निशा" भा०शा०२२८अ०

**उत्सृज्य** अ० उद्+सृज–ल्यप् । १त्यक्त्वेत्यर्थे "ऋदुपधात् कर्म्मणि क्यप् । २त्यक्तव्ये त्रि०

**उत्सृष्ट** त्रि०उद्+सृज–क्त । १त्यक्ते २दत्ते च । "ब्राह्मणानाङ्ग यत्किञ्चित् सर्वोत्सृष्टं तु निर्ज्जने । तत् कश्चिदन्यो न भवेत् विभाज्यत्वं यथाक्रमम् । न ग्राह्यं न च तत्चौरं पातव्यं केनचित् क्वचित्" । ब्रह्म पु० । "मद्योत्सृष्टपयसः सूतिकागन्तुकादयः" या० स्मृ० ।

**उत्सेक** पु० उद्+सिच–घञ् । १गर्व्वे "उपदा विविशुः शश्वत् नोत्सेकाः कोशलेश्वरम्" रघुः । "नोत्सेकमगमन्नेदं कदाचिदिह नः कुलम्" भा० आ० ११०अ० । २उद्रेके "पातव्यं पासकामनं स्तोत्सेके गलपक्षे" सुश्रु० । ३ऊर्द्ध्व वहिः सेचने च ।

**उत्सेकिन्** त्रि० उत्सेक+अस्त्यर्थे इनि । १अतिशयिते २गर्वयुक्ते च स्त्रियां ङीप् ।"भाव्येषुत सेकिनी" शकु०

**उत्सेचन** न०उत्क्रम्य आधारमतिक्रम्य सेचनम् । आधारातिक्रमेण प्लवने (उपचान)

**उत्सेध** पु० उत्सेधति कारणमतिक्रम्य वर्द्धते उद्+सिध–गत्याम् अच । १देहे तस्य शुक्रशोणितरूपस्वकारणातिक्रमेण वर्द्धमानत्वम् । भावे घञ् । २उन्नतौ तस्य कृदभिहितभावत्वात् "पुत्रवित्तार्ज्जनात् पितेत्यादौ, पुत्रार्जितवित्त इव उन्नत्यानस्रेऽपि हृत्तिः तथात्वेऽपि विशेषणसमासे आगमाण्यमणादिवत् परनिपातः छिन्नभिन्नत्याद्वार इत्यादिर्वदिति भेदः । यथा "पयोधरोत्सेधनिपातचूर्णिताः इति कुमा० "तस्य प्रमाणमाहुः शास्त्रिणश्चोत्सेधमपदिशन्ति" सुश्रु० । "उत्सेधनिर्जितमहोदरं ध्वजः" माघः "तन्त्राणाबद्धा दीर्घाः प्राहेयाचलरकृत्ताः । तथैवोत्सेधतोयाचलरत्नास्तु इत्यपि" छन्दोगप० "पयोधरोत्सेधविशीर्णसंहति" कुमा०। बर्हिर अच् । ३उन्नते त्रि०। "यावत्यं त उत्पुच्छे उत्सेधमेव तं कुरुते तस्मादुत्सेधं प्रजाभयेऽभि सं अ-

यान्ति” शत० ब्रा० १२,२,२,६, “उत शेधस्य पर्व्वतादिकं प्रासादं वा” भा० ।

**उत्स्वन** पु० उच्चैः स्वनः । १उच्चशब्दे । च० । २तद्वति त्रि० ।

**उत्स्वप्न** त्रि० उत् क्रान्तः अतिक्रान्तः स्वप्नं तन्मर्य्यादाम् अत्या० स० । निद्रायां बाह्येन्द्रियाणां विलीनत्वेन मनसैव सर्व्व-व्यवहारनियमेन तदतिक्रमेण जाग्रदवस्थावत् स्वप्नव-चनादिव्यवहारे । उत्स्वप्नमिव चरति क्यङ् उत्स्वप्नायते यथा मृच्छकटिके “विदूषक उत्स्वप्नायते” स्वप्नदृष्ट-पदार्थस्य स्वप्नवाचा व्यवहरतीत्यर्थः । एवमुत्तररामचरितेऽपि “अयि एष अज्जउत्त” इत्यादिना सीताया उत्स्वप्नो वर्णितः ।

**उद्** अव्य० उ-क्विप् तुक् ‘उदोऽनूर्द्ध्वचेष्टायाम्’ पा० नि० पृषो० द-त्वम् । १प्रकाशे, २विभागे, ३लाभे, ४ऊर्द्ध्वे, ५उत्कर्षे, ६प्राबल्ये, ७आश्चर्य्ये, ८शक्तौ, ९प्राधान्ये, १०बन्धने, ११अभावे, १२मोक्षे, “तस्य उदिति नामेति” श्रुतेः १३अर्क्के च । गणरत्ने उदः अर्थानभिधाय उदाहृतं यथा ‘उत् प्राबल्यवियोगोर्द्ध्वकर्षलाभप्रकाशाश्चर्य्य-मोक्षणाभावदक्षप्राधान्यशक्तिषु” तत्र प्राबल्ये उद्धतः वियोगे उद्गच्छति । ऊर्द्ध्वचेष्टायाम् उत्तिष्ठति । लाभे पाकात् शतमुत्पन्नम् । प्रकाशने उच्चरति आश्चर्य्ये उत्सुकः । मोक्षणे उद्गतः । अभावे उत्पथः । दक्षे उत्फुल्लः । प्राधान्ये उद्दिष्टः शक्तौ उत्साहः”

**उदक** न० उन्द-ण्वुल् नि० नलोपश्च । जले ‘अनीत्वा प-ङ्कतां धूलिमुदकं नावतिष्ठति” माघः । “सकृत् प्रसिञ्च-न्त्युदकं नामगोत्रेण वाग्यतः । प्रोषिते कालशेषः स्यात् पूर्णे दत्तोदकः शुचिः” । या० स्मृ० “यावानर्थ उदपाने सर्व्वतः संप्लुतोदके” गीता । ‘उदकस्योदः संज्ञायाम्” पा० समासे संज्ञायामुदकस्योदादेश उदपानः उदधिः उदमेघः । क्षीरोदः । “पेषंवासवाहनधिषु” पा० । पूर्व्वपदस्थस्य उदादेशः । उदपेषं पिनष्टि उदवासः “अहस्सरालोदवासतत्परा” कुमा० उदवाहनः उद-धिर्घटः पूरयितव्ये उदकहरणादौ परे वा । उदकुम्भ उदककुम्भः । “शान्त्युदकुम्भहस्ताः” भट्टिः पूर-यितव्य इत्याद्युक्तेः उदकपर्वत उदकस्थाली इत्यादौ न । ‘मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च” पा० । उदमन्थः उदकमन्थः (जलविलोडनम्) । उदौदनः उदकौदनः (उदकेन सिद्धः ओदनः) । ‘उदौदनं प्राशयित्वा सर्पिष्मन्तमश्नीयात्” शत० ब्रा० ११,८,४,१५ । उदसक्तुः उदकसक्तुः (उदकमिश्रितसक्तुः) । उदबिन्दुः उदकबिन्दुः उदभारः उदहारः (जलहारकः) उदवीवधः उदगाहः (जलावगाहः) पक्षे न । २उदकसाध्ये तर्पणे च । ‘अनाहूतश्च निष्क्रमेत् न कुर्य्यादुदकं ततः”, “कृतोदकान् समु-त्तीर्णान्” ‘कामोदकं सखिप्रत्तास्वस्त्रीयश्वशुरर्त्विं-जाम्” “न ब्रह्मचारिणः कुर्य्युरुदकं पतितास्तथा ।” “नाशौचोदकभाजनम्” इति च या० स्मृ० ।

**उदककृच्छ्र** पु० “उदकसक्तुभ्यां मासाभ्यवहारेणोदक-कृच्छ्रः” इति विष्णूक्ते व्रतभेदे ।

**उदकक्रिया** स्त्री उदकेन क्रिया तर्पणम् । शास्त्रविहिते जलादितर्पणे “एवं मातामहाचार्य्यप्रेतानामुदकक्रिया” या० स्मृ० । “अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा । “पिण्डोदकक्रियाहेतोः” स्मृति ‘उदककर्मोदकदात्री-दयोऽप्यत्र न० । उदकदानमप्यत्र न० । ‘तेषामकर्मणि-चारत्वे राज्ञामुदकदायिके” भा० आ० १अ० ।

**उदकपरीक्षा** स्त्री विवादादौ लौकिकप्रमाणाभावे कार्य्ये दिव्यप्रमाणभेदे तत्प्रकारश्च मिता० व्य० । ‘सत्येन माभिरक्ष त्वं वरुणेत्यभिशाप्य कम् । नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत्” या० उक्तः । प्रपञ्चस्तु मिता० व्य० । दि० तत्त्वे च अनुसन्धेयः ।

**उदकम्** अव्य० उन्द-अकमु चित् । क्लेदे गचर० । शाखा० कर्म्मणि वा णमुलम् । उदकंकत्वा उदकंकत्वा क्लेदं कृत्वेत्यर्थः ।

**उदकमेह** पु० उदकमिव मेहः । सुश्रुतोक्ते मेहभेदे । तल्लक्षणं तत्रैव ‘तत्र श्वेतमवेदनमुदकसदृशमुदकमेही मेहति” । इक्षुमेहशब्दे ९१० पृष्ठे विवृतिः तस्य अस्त्यर्थे इनि । उदकमेहिन् तद्युक्ते त्रि० स्त्रियां ङीप् ।

**उदकल** त्रि० उदकमस्त्यस्य सिध्मा० वा लच् । उदकयुक्ते पक्षभावे मतुप् मस्य वः । उदकवत् तत्रार्थे स्त्रियां ङीप् । पिच्छा० इलच् । उदकिल तत्रार्थे त्रि० ।

**उदकशुद्ध** त्रि० उदकेन शुद्धः । १स्नाते २उदकस्पर्शेन शुद्धे च । ततः भवादौ अण् अनुशति० द्विपदवृद्धिः । औदकशौद्ध तद्भवे त्रि० ।

**उदकषट्पल** न० ‘चतुरैः पञ्चकोलैस्तु पलिकैःस्निग्धोदकैः । समक्षीरं घृतप्रस्थं ज्वराग्निःप्लीहकासनुत्” चक्रदत्तोक्ते घृतभेदे ।

**उदकान्त** पु० उदकमेवान्तः सीमा । उदकपर्य्यन्ते । ‘यद्-स्थाः पश्चिमे उदकान्ते दीक्षेरन्” आश्व० श्रौ० १२,६,२, “आोदकान्तात् स्निग्धमनोऽनुव्रजः” यज्ञ० ।

सुखदा भवेत् । मृगस्तु कामभोगाय सुखदं रुद्रदैवतम् । अदितिभं सुतं दद्यात् पुष्यभं सुखवर्द्धनम् । अश्लेषा शुभनाशाय शोकायाथ मघा मता । वैधव्यं फल्गुनीहस्ते हस्तः पुत्रविवर्द्धनः । चित्रा चित्रतनुं नारीं कुरुते नात्र संशयः । स्वाती शुभाय नारीणां विशाखा सुखभागिनी । अनुराधार्थभोगाय ज्येष्ठा भर्तृवियोगदा । शुभदाप्यशुभं मूलं पूर्व्वाषाढार्थभागिनी । सुखदा चोत्तराषाढा श्रवणः सुखवर्द्धनः । धनिष्ठापञ्चकं स्त्रीणां प्रथमर्त्तौ सुखप्रदम् । तिथिरेकगुणा प्रोक्ता नक्षत्रं च चतुर्गुणम् । वारः षड्गुणो ज्ञेयो लग्नञ्चाष्टगुणः स्मृतः । वस्त्रं दशगुणं विद्याद्दर्शनं च ततोऽधिकम् । अशुभं चेद्रजः स्त्रीणां प्रथमर्त्तौ हि दृश्यते । विधानं तत्र कर्त्तव्यमरिष्टस्य विशेषतः” इति । अथ योगादिफलम् । परिघस्य तु पूर्व्वार्द्धे व्यतीपाते च वैधृतौ । व्याघातशूलयोर्विष्ट्यामशुभं प्रथमार्त्तवम्”। विष्टिर्विष्टि भद्रेत्यर्थः । अन्यत्रापि । “अमा संक्रान्तिविष्ट्यादौ व्यतीपाते च वैधृतौ । परिघस्य तु पूर्व्वार्द्धे षट् च गण्डातिगण्डयोः । व्याघाते नव, शूले तु नाड्यः पञ्चदशैव तु । वैधव्यमर्यमाग्निस्थ तु तनायां मरुत् भयम् । वैधव्यं यमदंष्ट्रे च दारिद्र्यं चोपजीवनम् । तेजोहानिं समायाति एषु पुष्पवती क्रमात् । अथ राशिफलम् । “मेषे स्याद्व्यभिचारा स्याद्वृषभे परभोगिनी । मिथुने धनभोगाढ्या कर्कटे व्यभिचारिणी । पुष्पाढ्या सिंहराशौ तु कन्यायां श्रीमती तथा । विलक्षणा तुलायां तु वृश्चिके तु पतिव्रता । दुश्चारिणी धनुःपूर्वे त्वपरे च पतिव्रता । मकरे मानहीना च कुम्भे निर्द्धनवन्ध्यता । मीने विलक्षणा कन्ये पञ्चसंख्या विवाहवत्”। अथ लग्नफलम् नारदीये । “लग्नस्य सप्तमस्थाने सूर्य्यो वैधव्यकारकः । पुत्रहानिकरश्चारो बुधः सत्पुत्रदो भवेत् । दृष्टस्तिर्य्यगायुष्यं शुक्रः शापकृत्कारकः । शनैश्चरे च वन्ध्या स्याद्राहौ तु मरणं ध्रुवम्” । अथ गुरुशुक्रोदयफलम् ।“आयुः श्रीः प्रीतिरारोग्यमुदिते गुरुभार्गवे । मन्दोदये विरोधः स्यात् क्लेशः स्यात्तामसोदये । तामसो राहुः । अन्यच्च । “संमार्जनीकाष्ठतृणाग्निशूर्पान् स्पृष्ट्वा दधाना कुलटा तदा स्यात् । तत्रोपयोगे तदवस्थिता चेद्दृष्टं रजो भाग्यवती तदा स्यात्” इत्यादि सर्वं ज्योतिःशास्त्रतोऽवगन्तव्यम् ।

अथ लक्षणम् । “नाभिमूले स्थितं पुष्पसूत्रं वलयस्थितम् । तासु वर्षेषु दधती गर्भधारकम् । अधोमुखं स्थितं स्त्रीणां तद्वत् कुड्मलाकृति । वाय्वात्पर्य्यय प्राप्तौ कुड्मलं विकसद्भवेत् । ऋतुपुष्पं कुसुमं स्त्रीणां स्वभावात् प्रस्रवेद्रजः । तदा प्रभृति सर्वासां मासि मासि ऋतुर्भवेदिति” । अथ प्रथमर्त्तौ मङ्गलाचारः प्रयोगपारिजाते स्मृतिचन्द्रिकायाम् ।“प्रथमर्त्तौ तु पञ्चषष्ठाः पतिपुत्रवती स्त्रियाः । आसनैरासनं कुर्य्युस्तस्मिंस्तामुपवेशयेत् । हरिद्रागन्धपुष्पादीन् दद्यात्ताम्बूलकज्जलः । आशिषो वाचयेयुस्ताः पतिपुत्रवती भव । दीपैर्नीराजनं कुर्य्यात्सदीपे वासयेद्गृहे । ताः सर्व्वाः पूजयेत्तस्याङ्गन्धपुष्पाक्षतादिभिः । लवणापूपमुद्गादि दद्यात्ताभ्यः स्वशक्तितः”। अन्यच्चाह दक्षः । “आर्त्तवाभिप्लुता नारी नैका वेश्मनि संविशेत् । न संसर्गं व्रजेदद्भिः स्नात्वा पापात् प्रमुच्यते । अञ्जनाभ्यञ्जने स्नानं प्रवासं दन्तधावनम् । न कुर्य्यादार्त्तवा नारी ग्रहाणामीक्षणं तथा । नराणां क्रन्दनं रजःस्वापनमाहिसनम्”। मेधातिथौ सएव “दृष्टे शरावे भुञ्जीत नैव चाञ्जलिना पिबेत्” । अथ रजस्वलास्पर्शशुद्धिविधानम् स्मृतिरत्नावल्यां दक्षः “उदक्ये द्वे सगोत्रे वा सवर्णे वाऽथवा पुनः । तयोः स्नानं मिथः स्पर्शे पञ्चगव्यं ततः पिबेत् । सवर्णे योनिसम्बन्धे सगोत्रे च रजस्वले । मिथः संस्पृशतोऽमत्या स्नानमात्रेण शुद्ध्यतः । मत्यैकरात्रं नाश्नीतः पञ्चगव्यं पिबेत्ततः । उदक्ययोर्यदान्योन्यमसवर्णयोः । स्पृष्टेदनया स्नात्वा च तदिच्छायात् शुचिर्भवेत्” । तस्मिन् स्पर्शदिने ।“मत्या तु नाऽश्नीयादाशुद्धेर्भुक्ता चेत् प्रतिवासरम् । उपोषणं तदा कैश्चिदाशुस्तद्दिनसंख्यया । उपवासित्वशक्ता चेत्तत्समं दानमाचरेत् । सभ्यासेतां स्पृशेतां वा ब्राह्मणी च रजस्वले । आस्नानकालादश्नीतोदुभे मत्या मिथः क्वचित् । स्नात्वोपवासं कुर्व्वीतां पञ्चगव्येन शुध्यतः । एवमन्यसवर्णास्वप्रायश्चित्तं समाचरेत् । मत्या रजस्वलान्योन्यं इतरौ ब्राह्मणी स्पृशेत् । आस्नानकालादाशौचादतिकृच्छ्रं समाचरेत् । चाण्डालं वार्त्तवा नारी संस्पृशेत् भोजनान्तरे । तावत्ता वहिरासीनाऽऽस्नानकालादुपोषणम् । प्राजापत्यं चरेत् पश्चात् पञ्चगव्यं ततः पिबेत् । विप्रान् द्वादशसंख्याकान् भोजयित्वा विशुध्यति । पुष्पिणी संस्पृशेत्कोऽपि दारुणं वा नरं शवम् । स्नानादर्व्वाङ् न भुञ्जीत भुक्त्वा कृच्छ्रं समाचरेत् । स्पृष्ट्वोदक्या पञ्चनखान् द्विशफैकशफान् पशून् । वस्त्राणि च शवांश्चापि आद्याद्दा स्नानकालतः” । यदा-

स्पृश्याशुचिस्पृष्टं तृतीयं चापि मानवः । हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुद्ध्यति” अशुद्धस्योदक्यादिस्पर्शे तु देवलः “अशुद्धान् स्वयमप्येतानशुद्धस्तु यदि स्पृशेत् । स शुध्यत्युपवासेन तथा कृच्छ्रेण वा पुनः । आदिस्पर्शे तूपवासः कृच्छ्रस्तु श्वपचादिके” इति । अधिकमार्त्तवशब्दे ८०८पृष्ठे उक्तम् । [उपल ।

**उदगद्रि** उदगुत्तरस्यामद्रिः । हिमाचले । उदक्पर्वतोदयो-

**उदगयन** न० उदक् उदीच्यामयनम् । १उत्तरायणे । ७ब० । माघादिके मासषट्के “उदगयने आपूर्य्यमाणे पक्षे कल्याणे नक्षत्रे चौलकर्म्मोपनयनगोदानविवाहाः” आश्व० गृ० १,४,१, “अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम्” मनुः । उत्तरायणशब्दे ११०४पृ० विवृतिः ।

**उदग्दश** न० उदक् उत्तरा दशा यस्य । उत्तराग्रे वस्त्रे “उत्तीर्य्यान्यानि वासांसि परिधाय सकृदेवाग्न्यापोऽयोदग्दशानि विसृज्यासत आनक्षत्रदर्शनात्” आ० गृ० ४,४,१०, “उदग्दशानि उदगग्राणि” नारा० वृ० । “अथ वासो द्विगुणं वा चतुर्गुणं वा प्राग्दशं वोदग्दशं वोपस्तृणाति” शत० ब्रा० ३,३,२,९, [उच्चभूमिके देशे जटा०

**उदग्भूम** त्रि० उदक् उन्नता भूमिर्यत्र अच् समा० । उत्-

**उदग्र** त्रि० उन्नतमग्रं यस्य । १उच्चे उन्नते २दृढे “हरिर्मणिश्यामसदग्रविग्रहः” किरा० “नयन् मधुलिहः श्वैत्यमुदग्रदशनांशुभिः” “आक्रम्य संस्थितमुदग्रविशालशृङ्गम्” माघः “अवन्तिनाथोऽयमुदग्रबाहुः” “संदधे दृशमुदग्रतारकाम्” “क्षतात् किल त्रायत इत्युदग्रः” रघुः । “वोर्ज्जोदग्रे राजशब्दे मृगे च” “सम्मर्द्दनोदग्रतरप्रभाव:” “आविष्कृतोदग्रतरप्रभावम्” रघुः । ३उन्नते च । “मदोदग्राः ककुद्मन्तः” रघुः । [उन्नतदन्ते

**उदग्रदत्** त्रि० उदग्रा दन्ता यस्य दत्रादेशः स्त्रियां ङीप् ।

**उदग्राभ** पु० उदकं गृह्णाति ग्रह–अण् उप० स० संज्ञाया मुदादेशः घेदे हस्य भः । १मेघे “एवा ववस्य मदिरो महाश्वोदग्राभस्य नमयन् वधस्नैः” ऋ० ६,६७,१५, “उदग्राभमुदकग्राहिणं मेघम्” भा० लोके तु उदग्राह इत्येव । उदग्रा उन्नता आभा यस्य । २महाप्रभे त्रि० ।

**उदङ्क** पु० उदच्यते उद्ध्रियतेऽत्र उद्+अन्च–घञ् । “उदङ्कोऽनुदके” पा० नि० कुः १चर्म्ममये घृतादिपात्रे (कुपो) तैलोदङ्कः घृतोदङ्कः । उदच्यते आकृष्यतेऽनेन करणे घञ् । आकर्षणसाधने २संदंशे “हृदयोदङ्कसंस्थानं कृतान्तानायसाश्मम्” भट्टिः । ३ऋषिभेदे पु० “अग्नीध्र उदङ्कः शौल्वायनः” शत० ब्रा० १४,६,१०,४, अस्य इञ् अहन्ने च उपका० बहुत्वे गोत्रप्रत्ययस्य वा लुक् । औदङ्कायनाः उदङ्काः ।

**उदङ्मुख** त्रि० उदक् उत्तरा मुखमस्य । उत्तरमुखे “मण्डपं कारयेत्तत्र प्राङ्मुखं वाप्युदङ्मुखम्” अन्नाचलदानरूपे पुरा० “कृतं भुङ्क्ते ह्युदङ्मुखः” । “यथाशास्त्रमुदङ्मुखः” । “मूत्रोच्चारसमुत्सर्गं दिवा कुर्य्यादुदङ्मुखः” मनुः । “उदङ्मुखान् प्राङ्मुखान् वा पूर्व्वाह्णे वै शुचिः शुचीन्” मनुः । “उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रम्” रघुः । “स्थानादस्मात् सरसनिचुलादुत्पतोदङ्मुखः खम्” मेघ० ।

**उदचमस** पु० उदकस्य उदकधारणार्थश्चमसः संज्ञाया मुदादेशः । उदकस्थापनार्हे चमसरूपे पात्रभेदे “अथान्तरेणोदचमसं निनयति” शत० ब्रा० ७,२,१,१७ । “चतसृषु चतसृषु स्रौक्षीनुदचमसानुन्नयति” कात्या० १७,२,४,

**उदच्** त्रि० उद्+अन्च–क्विप् । १ऊर्द्ध्वं गते उत्तरे २देशे ३अनन्तरे ४काले उत्तरदिग्देशकालवृत्तौ च । ५उत्तरदिशि स्त्री ङीप् अचोऽल्लोपे उदीआदेशे दीर्घः उदीची “तेनोदीचीं दिशमनु रवेः” मेघ० । ततः अस्ताति तस्य लुक् । प्रथमापञ्चमीसप्तम्यन्तार्थे वर्त्तमाने दिग्देशकाले अव्य० “अयने द्वे गतिरुदग् दक्षिणार्कस्य वत्सरः” अमरः “उपवीणयितुं ययौ रवेरुदगावृत्तिपथेन नारदः” रघुः “संपूर्णो तृणमात्रमुदगग्राभ्याम् पवित्राभ्याम्” “उदगग्ने स्तृणन् कुर्य्यात् कारयन्ति” सं० त० गोभि० । “प्राग्वमुदग्वं वा धौतं वस्त्रं प्रसारयेत्” वि० पा० ख० । “आचम्योदक्परावृत्य” मनुः । “चारयित्वोदक्स्वम्” सि० मि० ।

**उदज** पु० उद्+अज–अप् अभावः । पशुप्रेरणे ।

**उदजिन** पु० उत्क्रान्तमजिनम् अत्या० स० । चर्म्मातीते निरुदकादि० अन्तोदात्तता ।

**उदज्ञ** पु० उदकं जानाति ज्ञा–क संज्ञायाम् उदादेशः ऋषिभेदे तस्यापत्यम् तिका० फिञ् । औदज्ञायनि तदपत्ये पुंस्त्री० ।

**उदञ्च्** त्रि० उद्+अन्च–क्विप् । उदक्शब्दार्थे । अन्ये उदञ्चः उदञ्चौ इति भेदः । ततः प्रथमान्ताद्यर्थे अस्ताति तस्य लुक् । उदक् प्रथमान्ताद्यर्थे दिग्देशादौ अव्य० “तान् प्रत्युदङ्ङेति तान् गातान्” शा० छ० । उदक् उत्तरस्याम् ।

**उदञ्चन** न० उद्+अन्च–णिच् करणे ल्युट् । १पिधानार्थे पात्रे (ढाकना) । “प्रतिप्रस्थाता संस्रावानवग्लु चेता चमसेन वोदञ्चनेन वा” शत० ब्रा० ४, ६,५, २१,

"प्रतिप्रस्थाता च संस्रावाश्रावणीयादुन्नेतोदञ्चनेन चमसेन वा" कात्या० १०,५,१। भावे ल्युट्। २ऊर्द्ध्वक्षेपणे। कर्त्तरि ल्यु। ३उत्क्षेपके त्रि०। "वत्सपतिर्विश्वासामूधः स धियामुदञ्चनः" ऋ० ५,४४,१२। "उदञ्चन ऊर्द्ध्व-मुन्नमयिता" भा०।

**उदञ्चित** त्रि० उद्+अन्च—पूजायां क्त १पूजिते। णिच्—क्त। २ऊर्द्ध्वगमिते ३उत्क्षिप्ते। हेम० "उदञ्चिताक्षोऽञ्चि तदक्षिणोरुः" भट्टिः।

**उदञ्च्** त्रि० उद्+अन्च—क्विन्। उत्तरदिग्भवे। बाह्वा० अपत्ये इञ्। औदञ्चिः तदपत्ये पुंस्त्री०।

**उदण्डपाल** पु० उद्गतमण्डं पलति गच्छति कारणतया पल-गतौ अण् उप० स०। १मत्स्ये २सर्पे च मेदि० तयोर ण्डोद्भेदेन जातत्वात्तथात्वम्। [र्थम्य०।

**उदथ्या** स्त्री उद्+अद—बा० यत्। तैलपिपीलिकायां शब्दा-

**उदधान** पु० उदकं धीयतेऽत्र आधारे ल्युट्। उदादेशः। १कुम्भे २मेघे च।

**उदधि** पु० उदकानि धीयन्तेऽस्मिन् धा-आधारे कि उदा-देशः। १समुद्रे, २घटे च। "उदधेरिव निम्नगाशतैः" "चन्द्रोदय इवोदधेः" रघुः। "यैः कृतः सर्व्वभक्ष्योऽग्निरपेयश्च महोदधिः" मनुः। समुद्रसामान्यस्यैव संज्ञा तत्तत्-पदसमभिव्याहारे तु विशेषस्य बोधः। यथा क्षारोदधिः क्षीरोदधिः सुरोदधिः। ३मेघे च। "हृदय मघ्नायुरपो दत्तोदधिं भिन्त" यजु० १८,५४। ४उदकधानकर्त्तृ-कर्म्मे च "संस्कर्य्येव दिव्यु तदुदधिर्निधिः" यजु० १८,२२ कर्म्मस्य च जलपूर्णाक्षताभिर्नाडीभिर्जलाकर्षणेन महारणात्तथात्वं यथा च तस्याक्षताधायकत्वम्" तथा-ऽन्यत्रस्य २२२ पृष्ठे उक्तम्।

**उदधिक्रा** त्रि० उदधिं क्रामति क्रम—वि क्षोप्। समुद्र-क्रामके।

**उदधिमल** पु० उदधेर्मलमिव। समुद्रफेने राजनि०।

**उदधिमेखला** स्त्री उदधिर्मेखलेव यस्याः। मध्यस्थाने समु-द्रवेष्टितायां पृथिव्याम्। भूगोले "भूमेरर्द्धं क्षारसिन्धो-रुदक्स्थं जम्बूद्वीपं प्राहुराचार्य्यवर्य्याः। अर्द्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः" सि० शि० उक्तेः याम्यार्द्धे एवाम्बुधीनां निवेशात् तेषां पृथिवी मध्यवेष्टकतया मेखलातुल्यत्वम्।

**उदधिसुता** स्त्री ६त०। १लक्ष्म्याम् तस्या उदधिजातत्वात् तथात्वम्। उदधितनयादयोऽप्यत्र २चन्द्रे पु०।

**उदन्** न० उन्द+कनिन्। उदके। "उदकस्योदादेशोऽयमि-त्यन्ये अन्यएवायं शब्द इत्यपरे। "धाराश्रमेशोदभि र्वुन्दन्ति भूम" ऋ० १,८५,५ "अत्र त्मना भरते फेनमु-दन्" ऋ० १,१०४,२,। उदन् उदनीत्यर्थः परमे व्योमन् इति यत् सप्तम्या लुक् नलोपाभावश्च

**उदन्त** पु० उद्गतोऽन्तोनिर्णयो यस्मात्। १वार्त्तायाम् वृत्तान्ते कुशलादिकथने,। "श्रुत्वा रामः प्रियोदन्तम्" रघुः "कान्तोदन्तः सुहृदुपनतः सङ्गमात् किञ्चिदूनः" मेघ० "एवंप्रायेण चास्योदन्तेन" काद०। २साधौ मे स्वार्थे कन्। तत्रैव उद्गतोऽन्तोऽस्य पाकस्यात् प्रा० ब०गतलोपः। ३पाकस्यात् प्राप्तान्ते त्रि० "अतमसदिति तदाकुर्यद्यु-दन्तं तर्हि नकुर्यादिति तन्नोदन्तं कुर्य्यादुप ह दघ्ने-घ्युदन्तं कुर्य्यादप्रजज्ञि वै रेत उपदध्यं तस्मान्नोदन्तं कुर्य्यात्" शत०ब्रा० २,२,१,१४, "अधिश्रितं वारुणमुदन्तं पौष्णम्" कात्या० २५,२,२,

**उदन्तिका** स्त्री उदन्तमुद्गतान्तं करोति उदन्त+णिच्+ण्वुल् टाप् अत इत्। तृप्तौ हारा०।

**उदन्य** नामधातु अतिगार्द्ध्येनोदकमिच्छति क्यच् निपा० उद-न्यति औदन्यीत् उदन्याम्—बभूव आस चकार। उदनिता-उदन्यिता उदन्या।

**उदन्या** स्त्री अतिगार्द्ध्येन उदकमिच्छति क्यजन्तात् अ। १पिपासायाम्। "व्यस्यन्नुदन्यां शिशिरैः पयोभिः" भट्टिः वेदे० बा०नयनार्थेऽपि क्यच्। २उदकनयने च "अथ-यत्रैतत्पुरुषः पिपासतिनाम तेज एव तत्पीतं नयते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येव तत्तेज आचष्ट उदन्येति" छा० उ० यथा च पुरुषस्य पिपासा भवति तद्भाष्ये समर्थितं यथा

"यत्र यस्मिन् काल एतन्नाम पिपासति पातुमिच्छतीति पुरुषो भवति। अशिशिषतीतिवदिदमपि गौणमेव नाम भवति। द्रवीकृतस्याशितस्यान्नस्य नेतार आपोऽन्नशुङ्ग देहं क्लेदयन्त्यः शिथिलीकुर्य्युरब्बाहुल्याद्यदि तेजसा न शोष्यन्ते। नितरां च तेजसा शोष्यमाणास्वप्सु देह-भावेन परिणममानासु पातुमिच्छा पुरुषस्य जायते तदा पुरुषः पिपासति नाम तदेतदाह। तेजएव तत्तदा पीतमबादि शोषयेद्देहगतलोहितप्राणभावेन नयते परि-णमयति। तद्यथा गोनाय इत्यादि समानमेव। तत्तेज आचष्टे लोकः। उदन्येति उदकं नयतीत्युदन्या उद न्येतीति छान्दसम्"। पिपासा च प्राणस्य धर्म्मः यथाह

चन्द्राः १९७० । इत्याद्यस्तेषामैक्यं कृत्वा भुज्यमान राशेर्ये भुक्तभागास्तांस्तदुदयासुभिः सङ्गुण्य त्रिंशता ३० विभज्य लब्धासवोऽपि तत्र योज्याः एवं मध्यार्कभुक्तासवः स्युः । भदिनान्तादूर्ध्वं तावत्स्वात्मके काले लङ्कायां मध्यमस्यार्कस्योदयः । तत्काले हि ग्रहाः साध्याः अथ चापरगतेन हे सिद्धान्ते मध्यमार्ककलामितेऽस्वात्मके काले भदिनान्तादूर्ध्वं जाताः, अतोऽसूनां कलानां च यदन्तरं तेनार्कोदयोऽन्तरित । एतत्तदुदयान्तराख्यं कर्मोच्यते तदन्तरासुभिर्ग्रहगतिं सङ्गुण्यार्कसावनाहोरात्रासुभि २१६५९ विभज्य लब्धकला ग्रहे भवणं कार्याः यदि कलाभ्योऽसवोऽल्पकाः स्युः, अन्यथा धनं, यदि तु स्वदेशोदये मध्यमार्कभुक्तासूनानीयेदकर्म कृतं तदौदयिकानां ग्रहाणां चरकर्मापि कृतं स्यात् यदि तु स्फुटार्कभुक्तासून् स्वोदयासुभिरानीयेदं कर्म कृतं तदोदयान्तरभुजान्तर चरकर्माणि त्रीण्यपि कृतानि स्युः नहि कथमिदमुदयान्तराख्यं कर्माचार्यैर्न कृत तदाह यतोऽन्तरं तस्त्वल्पकमुर्व्यां स्वल्पान्तरत्वात् चतुर्ष्वपि अन्तराभावः तन्मध्येऽप्यन्तरस्य हानिवृद्धी । इदानीं देशान्तरस्वरूपमाह प्रमि० “येऽनेन लङ्कोदयकालिकास्ते देशान्तरेण स्वपुरोदये स्युः । देशान्तरं प्राक् मदर्वं यथाख्यद्यात्सोऽपि नत्युरसंज्ञकम्” शि० । “ये लङ्कान्तरकर्मणा लङ्कायामौदयिका ग्रहा स्वकाले देशान्तरकर्मणा स्वपुरौदयिका स्युः । तच्च देशान्तरं द्विविधम् एकं पूर्वापरमध्ययाम्योत्तरं नत्युरसंज्ञकं तच्च यावत् वीररमाह” प्रमि० । “यल्लङ्कोज्जयिनीपुरोपरि कुरुक्षेत्रादिदेशान् स्पृशत् सूत्रं मेरुगतं बुधैर्निगदिता सा मध्यरेखा भुवः । आदौ प्रागुदयोऽपरत्र विषये पश्चाद्धि रेखोदयात् स्यात्तस्मात् क्रियते तदन्तरभवं स्वे स्वे व्ययं स्वं फलम्” शि० । “लङ्काया मेरुगतं समरेखा सा रेखा उज्जयिनीकुरुक्षेत्रादिदेशान् स्पृशन्ती याति सा मध्यरेखेत्युच्यते । रेखाया यदार्कोदय तत्कालात् पूर्वस्मिन् देशे भवति रेखोदयकालादनन्तरं पश्चिमदेशेऽर्कोदयः । तदन्तरकालस्तदन्तरयोजनैः स्वस्थभूवेष्टनाद्यनुपातेन ज्ञायते यदि स्फुटपरिधियोजनैः षष्टि ६० घटिका लभ्यन्ते तदा देश स्फुटान्तरयोजनैः किमितीति त्रैराशिकेन देशान्तरघटिका लभ्यन्ते मध्यमाद्यास्ता चाग्नीता ग्रहास्ताभिरनुपातः यदि षष्टिघट्या ग्रहस्य गतिकला लभ्यन्ते तदा देशान्तरघटीभिः किमिति अथ योजनैरेवाऽनुपातः । यदि स्फुटपरिधियोजनैरिति. प्राप्यते तदा देशान्तरयोजनैः किमिति फलं कलाः प्राग्धनं, यतस्तत्रार्कोदयः पश्चाद्धनं यतस्तत्र रेखोदयादनन्तरमर्कोदय इत्युपपन्नम् ।

इदानीं भूगोले स्फुटपरिधिप्रदेशं स्फुटतानुपातं चाह” प्रमि० “स्वदेशमेर्वन्तरयोजनैर्यैर्लब्धांशजैर्मेरुगिरेः समन्तात् । वृत्तं स्फुटो भूपरिधिर्यतः स्यात्त्रिज्याहृतो लम्बगुणः कृतोऽस्मात्” शि० “स्वपुरस्य मेरुगर्भस्य चान्तरे यावन्ति योजनानि तावन्ति लब्धांशजानि यतो निरक्षदेशस्वपुरान्तरयोजनान्यक्षांशजानि, भागेभ्यो योजनानि च व्यस्तमित्युपपद्यत इत्यर्थः; तैर्लब्धांशजैर्योजनैर्मेरुगिरेः समन्ताद्यद्वृत्तमुत्पद्यते स स्फुट भूपरिधिः यो मध्यपरिधिः पठितः स निरक्षदेशोपरि । अयन्तु स्वपुरोपरि, अतः किञ्चिन्न्यूनो भवति अथ तदानयन मध्यपरिधेर्भीष्टान्त्रिज्यातुल्यं व्यासार्धं प्रकल्प्य तस्मिन् व्यासार्धे स्वपुरे यावती लम्बज्या तावत् स्फुटपरिधेर्व्यासार्धं भवितुमर्हतीति अतस्त्रैराशिकं यदि त्रिज्याव्यासार्धे मध्यम. परिधिर्लभ्यते तदा लम्बज्यामिते कः इति फलं स्फुटपरिधिरित्युपपन्नम” प्रमिताक्षरा ।

इष्टकाले लग्नाद्यानयनम् अस्मदुक्तं ५१८पृष्ठ लङ्कोदयप्रमाणदर्शनपूर्वकमुक्तप्रायम् विशेषस्तु शि० शि० । “तात्कालिकार्केण युतस्य राशेर्भुक्तभागैर्गुणितोदयात् स्यात् । भोग्यासवः खाग्निहृतादवाप्ता भुक्तासवो भुक्तलवैः स्युरेवम् । इष्टासुसङ्घादपनीय भोग्यांस्तदग्रतो राश्युदयांश्च शेषम् । अशुद्धहृत् खाग्निगुणं लवाद्यमशुद्धपूर्वैर्भवनैरजाद्यैः । युक्तं तनुः स्यादनयनांशहीनमिष्टासवोऽल्पा यदि भोग्यकेभ्यः । त्रिंशद्गुणाः स्वोदयभाजितास्ते लब्धांशयुक्तो रविरेव लग्नम्” शि० । “यस्मिन् काले लग्नं ज्ञेयं तस्मिन् काले तात्कालिकोऽर्कः सायनांशः कार्यः । तेनार्केण युतस्य राशेर्ये भोग्यांशास्तैस्तदुदयासवो गुणास्त्रिंशता भाज्याः । ये लब्धास्ते भोग्यासवः स्युः । अथेष्टासुभ्यो भोग्यासून् विशोध्य तदग्रतो यावन्त उदयाः शुध्यन्ति तावन्तः शोध्याः । ततः शेषात् खगाग्निगुणादशुद्धोदयेन भक्ताद्यल्लब्धमंशाद्यं तदशुद्धोदयात् पूर्वं यावन्तो मेषाद्या उदयास्तावद्भी राशिभिर्युतमयनांशैश्च रहितं तल्लग्नं स्यात् । अथ यदीष्टासवो भोग्येभ्योऽल्पः तदेष्टासवस्त्रिंशद्गुणास्तदुदयासुभिर्भाज्या । फलेनांशाद्येन युतो रविर्लग्नं स्यात्” प्रमि० लग्नाद्यादिना कालानयनं तत्रैव दर्शितं यथा “अर्कस्य भोग्यस्तनुभुक्तयुक्तो मध्योदयाढ्यः समयो विलग्नात् । यद्येकभे लग्नरवी तदा तद्भागान्तरं स्वोदयखाग्निभागः । लग्नेऽल्पके तु द्युनिशात् स शोध्यस्तात्कालि-

कालोदयलग्नं कालः । चेत् शायनाः षड्राशीष्टगतकुलग्नं तात्कालिकार्कादिभ्यः षड्भैः ॥ आर्य्यौ यदेष्टघटिका विलग्नं कालश्च तदौदयिकात् लग्नं” शि० । “अर्कस्य भागभुक्तो-भ्यशालं साध्यः । लग्नस्य सायनांशस्य भुक्तकालः साध्यः तयोरैक्यमर्कोदयतो लग्नपर्य्यन्तं ये मध्ये राशयस्तेषा-मुदयाश्च योज्यास्तत्रैव । एवं लग्नात् कालो भवति । अत्र यद्येकराशौ लग्नार्कौ भवतस्तदा तयोरन्तरांशैः स्वो-दयं सङ्गुण्य त्रिंशता भजेत् फलमिष्टकालः स्यात् । परं यद्यर्काल्लग्नमधिकम् । यद्यल्पं तदा दृक्कालोऽहोरात्राच्छो-ध्यः । शेषमिष्टकालः स्यात् । अत्रैतत्कालसाधनेऽर्कस्य भोग्यमौदयिकादेव क्रियते । यत, कालज्ञानार्थं तात्का-लिकार्कस्य कार्य्यम् । अतः स्थूलः काल आयाति । अनेन कालेन तात्कालिकमर्कं कृत्वा मुहुः कालः साध-यितुं युज्यते । परं यदि प्रष्टुः शायनघटिका दृष्टाः । एतदुक्तं भवति । उदयानन्तरमेतावतीष्विष्टसायनघटिकासु कीदृक् लग्नं भवतीत्येतदभीष्टं तदैव तात्कालिकार्काल्लग्नं साध्यते तदैव च लग्नादसकृत् कालः । यदा पुनरिष्टघटिका आर्य्यस्तदौदयिकादेवार्काल्लग्नं लग्नात् कालं सकृत् । अत्रोपपत्तिः सुगमा । तात्कालिकीकरणकारणता गोले क-थिता व्याख्याता च । इदानीं विलोमेन लग्नसाधनमाह” प्रमि० । “भुक्तांश शुद्धे विपरीतलग्नं भुक्तांशगेष्टाप्तलवोनि-तोऽर्कः” शि० “यदोदयात् पूर्वघटीषु लग्नमिष्टं तदा शेषासुभ्यो विशोध्य तत्कालिकमर्कं कृत्वा तस्य भुक्तासवः साध्यास्तानिष्टासुभ्यो यावन्त उदया विशुध्यन्ति तावतो विलोमेन विशोधयेत् । शेषात् त्रिंशद्गुणितादविशुद्धो-दयभक्ताद् ये लब्धा अंशास्तैस्तावद्भुक्तांशैश्च तथा विशुद्धोदयलग्नैः राशिभिश्चोनोऽर्कस्तो रविलग्नं भवति प्रमि० । होराद्रेक्काणोदयसाधनमपि तत्रैव यथा “च तासां स्थूलत्वात् स्थूला उदया भवन्ति राशीनाम् । सूक्ष्मार्थी होराणां कुर्य्याद्द्रेक्काणकानां वा” शि० “यथा राश्युदयाः साधितास्तथा होरोदया अपि साध्याः । त द्यथा पञ्चदशादिपञ्चदशभागोत्तरभागानां ज्या होरा-ज्याः षड् भवन्ति । ताभिर्मिथुनान्तद्युज्या ३१४१ पृथक् पृथग् गुणा स्वस्वद्युज्यया भाज्या । फलानां धनूंष्यधो-ऽधः शुद्धानि । फलात् पञ्चमं पञ्चमाच्चतुर्थ-मित्यादि । शेषाणि होरोदयासवो भवन्ति । एवं दशादिदशोत्तरभा-गैर्द्रेक्काणोदया भवन्ति । ते च नव । तथा होरांशा-नाञ्च षड् चराणि । यान्यधोऽधः शुद्धानि तानि तेषां

चरखण्डानि ते क्रमोत्क्रमस्थैः क्रमोत्क्रमस्थैः ऊनयुताः सन्तः स्वदेशे होरोदया भवन्ति । मेषादीनां द्वादश, ते च व्यस्तास्तुलादीनाम् । एवं चतुर्विंशतिः२४ । एवमेव द्रेक्काणोदयाः षट्त्रिंशत् । तथा चार्कस्य सायनांशस्य भागाः पञ्चदश १५ हृता गता होराः स्युः । शेषांशास्ते भुक्तास्ते पञ्चदशभ्यः शुद्धा भोग्यांशाः स्युः । भोग्यांशाः स्वदेशहोरोदयं पञ्चदशहृताः-फलं भोग्यासवः स्युस्ता-निष्टासुभ्यो विशोध्य तदग्रतो होरोदयांश्च शोधयेत् ॥ शेषं पञ्चदशगुणमशुद्धहोरोदयेन भजेत् फलं लवाः । अशु-द्धपूर्व्वाणां होरोदयानां संख्यया गुणितैः पञ्चदशभि-र्युताः अन्तो लग्नांशा भवन्ति । एवं लग्नात् कालसाध-नेऽपि । एवमेव द्रेक्काणोदयैरपि लग्नसाधनम् । तत्र पञ्चदशस्थाने दश १० गुणने भजने च कल्प्याः । एवं होरोदयैर्द्रेक्काणोदयैर्वा साधित लग्नादिकमुदयान्तराख्यं कर्म च सूक्ष्मं भवति अन्यथा स्थूलम्” प्रमि० ।

चक्राणामुदयान्तरकर्म तत्रोक्तम् “भानोः फलं गुणि-तमर्कयुतस्य राशेर्व्यौदयेन खखनागमही १८०० विभ-क्तम् । तस्याः षडंशगुणितं द्युनिशासु भक्तं स्वर्णं पले-ऽर्कवदिदं तु भुजान्तराख्यम्” शि० । “अर्कस्य यद् भुजफलं यस्मिन् राशौ रविर्वर्त्तते तस्य राशेः सम्बन्धी यो निरक्षोदयस्तेन तद्गुणितराशिकलाभि १८०० र्भक्तं पुनः षड्गुणया गुणितमहोरात्रासुभि २१६५८ र्भक्तं यत् फलं तद्गृहेऽर्कवत् धनर्णं कार्य्यम् । यद्यर्कस्य भुजफ-लम् धनं, तदा स्वर्णस्यान्येषां च धनम् । यदि ऋणं तदा ऋणमित्यर्थः । अत्रोपपत्तिः । ये मध्यमार्कौ-दयिकास्ते स्फुटार्कौदयिकाः क्रियन्ते । तत्रार्कफलस्यासु-करणायानुपातः । यदि राशिकला१८०० निरक्षोद-यासुभिर्लभ्यन्ते तदा फलकलाः कतिभिरिति । लब्धं भास्वत्फलोत्था असवो भवन्ति । अथान्योऽनु-पातः । यदि द्युनिशासुभिर्गतिकला लभ्यन्ते तदेभिः किमिति । ताः कला ऋणं धनं च यतो मध्यमार्कोद-यात् प्राक् स्फुटार्कोदयः स्यादृणे तत फले स्वं यतोऽनन्त-रमित्युपपन्नम् । इदानीमुदयान्तरमाह” प्रमि० । “युक्तायनां-शस्य तु मध्यमस्य भुक्तासवोऽर्कस्य निरक्षदेशे । मेषादि-भक्तोदयसंयुता ये ग्रहायनांशाश्रितमध्यभानोः । लिप्ता-गणस्तद्विवरेण निघ्नी गतिर्ग्रहस्य द्युनिशासुभक्ता । स्वर्णं ग्रहे चेदसवोऽधिकोना इदं ग्रहाणामुदयान्तराख्यम्” शि० “मध्यमार्कस्य सायनांशस्य ये राशेर्भुक्तभागास्तैरुदय

निरक्षदेशीय चरगुणलिप्तका विभजेत् फलं तस्य राशेर्भुक्तासवः । अथ मेषाद्या येऽर्केण भुक्ता राशयस्तेषां च निरक्षोदयासवस्तत्र योज्यास्ते मेषादिभुक्तोदयासवः स्युः । अथ मध्यमार्कस्य सायनांशस्य कलाः कार्याः । तासां कलानां तेषामसूनां च यदन्तरं तेन चन्द्रगतिर्गुण्या द्युनिशासुभिर्भाज्या लब्धाः कला चन्द्रे धनं कार्याः यदि कलाभ्योऽसवोऽधिकाः स्युः, यदि न्यूनास्तदा ऋणम् । अत्रोपपत्तिः । इह यः पूर्वमहर्गणः कृतः स मध्यमसावनमानेन स्फुटसावनस्य चलत्वात् । रविमध्यगतिकलातुल्यासुभिः सहिता नाक्षत्राः षष्टिघटिकाः ६०,५९,८ । इदं मध्यमसावनम् । ता गतिकला यैरसुभिरुद्गच्छन्ति तद्युताः षष्टिघटिकाः स्फुटसावनम् । तच्चलम् । प्रत्यहं गत्यन्यत्वात् प्रतिमासं राश्युदयान्यत्वाच्च । तादृशोऽहर्गणः कर्त्तुं नायातीति मध्यमः कृतः । तेन मध्यमर्कोदये चन्द्रा न भवन्ति कदाचिदर्कोदयात् प्राक् कदाचिदनन्तरम् । अत एव प्रागुक्तम् । "दशशिरःपुरि मध्यमभास्करे क्षितिजसन्निहिते सति मध्यम" इत्यादि० इति । अथ स्फुटमध्याहर्गणयोरन्तरानयनम् । मेषादेरारभ्य येऽर्कभुक्ता राशयस्ते यैरसुभिरुद्गच्छन्ति त एकीकृताः । तावत्यसुकात्मके काले भदिनान्तादूर्द्ध्वमहर्गणेन भवितव्यम् । अथ च मेषादिभुक्तकलातुल्येऽन्तरे कृतः । अतोऽसूनां कलानां च यदन्तरं तावद्भिरसुभिरहर्गणोऽन्तरितः । यद्यहोरात्रासुभिर्गतिर्लभ्यते तदेभिरन्तरासुभिः किमिति । फलं चन्द्रेषु स्वं यद्यसवोऽधिकाः । अन्यथा ऋणमित्येतदुक्तं युक्तमेव" । इदानीं येऽस्फोदयान्तरस्य वासनां न बुध्यन्ति तेषां प्रतीत्यर्थमन्यदप्याह" प्रमि० । "येन स्वोदयैः स्फुटरवेरसवः कृतास्ते विश्लेषिताश्च यदि मध्यरवेः कलाभिः । तास्वन्तराख्यमुदयान्तरकं चराख्यं कर्मत्रयं विहितमौदयिके तदा स्यात्" इत्यादि० । "यदि स्फुटरवेः स्वोदयेन भुक्तासवः कृता मेषादिस्वोदयैश्च युतास्तेषामसूनां मध्यमार्ककलानां च यदन्तरं तेन भुक्तिर्गुणिता द्युनिशासुभिर्भक्ता यद्यसवोऽधिकास्तदा फलं चन्द्रे स्वम् । अन्यथा ऋणम् । एवं कृते सति भुजान्तरमुदयान्तरं चराख्यं च कर्मत्रयमपि कृतं स्यादौदयिके चन्द्रे । इदानीं प्रकारान्तरेणौदयिककर्माह" प्रमि० । "मध्याह्नवेरयनभागयुताद्विनिघ्नाद्दोर्ज्या कचुर्गतिगुणा खनगाश्वि २७० भक्ता । स्वर्णं चन्द्रे युगयुजोः पदयोर्विलिप्ताश्चैवं स्फुटं खलु भवेदुदयान्तरं वा" इत्यादि० । "मध्यमार्कस्य सायनांशस्य द्विगुणितस्य या बाहुस्तस्यार्कदोर्ज्या तया गुणिता चन्द्रगतिः खनगाश्विभिः २७० हृता फलं विकलादि चन्द्रे धनम् । एवं युग्मपदस्थितेऽर्के । अयुग्मपदस्थिते ऋणम् । अत्रोपपत्तिः । क्रान्तिवृत्तस्य चत्वार्यपि पदानि पृथक् पृथक् पञ्चदशभिः पञ्चदशभिर्घटिकाभिरुद्गच्छन्ति । परं नैकैको राशिः पञ्चभिरत उदयान्तरकर्म पदमध्यं यावदुपचीयते ततोऽपचीयते । अत एव पदान्तरेषु तस्याभावः । पदमध्येषु परमता । यदत्र निरक्षोदयैः कर्म दर्शितं तद्बालावबोधार्थम् । तत् स्थूलम् उदयानां स्थूलत्वात् । अत एवार्य्यभट्टादिभिः सूक्ष्मत्वार्थं ह्रस्वोदयाः पठिताः" । इदमुदयान्तरं कर्म यथा सम्भवति तथोच्यते । मध्यमार्कस्य सायनांशस्य दोर्ज्यां द्युज्यां च कृत्वा तया द्युज्यया सा दोर्ज्या भाज्या त्रिज्यान्तद्युज्यया गुणनीया । तस्या धनुषो येऽसवस्ते मध्यमार्कस्य सायनांशस्य भुजकला ऊनाः सन्तः स्फुटा अन्तरासवो भवन्ति । तैरुदयोऽन्तरित इत्यर्थः । एवं पदमध्ये षड्विंशतिः पलानि किञ्चिदधिकानि भवन्ति । तानि ज्याप्रकारेण साधयितुमर्को द्विगुणितः । द्विगुणितस्यार्कस्य यावद्भुजः क्रियते तावत् पदमध्ये राशित्रयं भवति । तद्दोर्ज्यया लब्धा षड्विंशत्या चानुपातः । यदि त्रिज्यामितया दोर्ज्यया षड्विंशतिर्लभ्यते तदाभीष्टया किमिति । अत्र षड्विंशत्या त्रिज्या अपवर्त्तिता गुणकस्थाने रूपम् १ । हरस्थाने साधोंश्चत्वारः । फलं पानीयपलानि । पुनरन्योऽनुपातः । यदि पानीयपलषष्ट्या गतिकलातुल्या विकला लभ्यन्ते तदेभिः किमिति । पूर्वं लब्धा दोर्ज्या गुणः साधोंश्चत्वारो हरः । इदानीं षष्टिर्हरः अतश्चन्द्रगतेर्दोर्ज्या गुणः । हरयोर्घातो हरः खनगाश्विनः २७० इत्युपपन्नम् । ओजपदेऽसवः कलाभ्य ऊना एव भवन्त्यतस्तत्र ऋणम् । युग्मपदे त्वधिका अतस्तत्र धनम्" प्रमि० ।

ग्रहाणां दृश्यादृश्ययोः, चन्द्रे विशेषस्य च निरूपणं तत्रैव "निशीथलग्नादुदयाख्यलग्ने न्यूनाधिके यस्य खगः सदृश्यः । दिनेऽपि चन्द्रो रविसन्निधानात्काले गतश्चेत् सति दर्शने भा" इत्यादि० । "दिनकरेऽस्तंगते यदिष्टकाले लग्नं तदिष्टलग्नम् । तस्माद्ग्रहस्योदयाख्यलग्नं न्यूनमस्ताख्यं चाधिकं यदि भवति तदा ग्रहो दृश्यः इतोऽन्यथा चेददृश्यः । एवं लक्षणे सति चन्द्रो दिवसेऽपि दृश्यः । यदि ग्रहो दृश्यस्तदा ग्रहस्य छाया साध्या" प्रमि० ।

ताराग्रहाणामुदयास्तमययोर्ज्ञापनं यथा सू०सि० रङ्गना० । "अथोदयास्तमययोः परिज्ञानं प्रकीर्त्यते । दिवा-

करकराक्रान्तमूर्त्तीनामल्पतेजसाम्" सू० । "अथ नक्षत्रग्रहयुत्यधिकारानन्तरम् । सूर्य्यकिरणाभिभूता मूर्त्तिर्बिम्बं येषां तेषां चन्द्रादिषड्ग्रहाणां नक्षत्राणां च । अतएवाल्पतेजसां न्यूनप्रभावतामुदयास्तमययोः अचिरकाले सूर्य्यादधिकासन्निहितसन्निहितत्वसम्भावनया क्रमेणोदयास्तयोः सूर्य्यान्निःसृतस्य यस्मिन् काले यदन्तरेण प्रथमदर्शनं सम्भावितं स उदयः । सूर्य्याद्दूरस्थितस्य यस्मिन् काले यदन्तरेण प्रथमादर्शनं सम्भावितं सोऽस्तः । अनेन नित्योदयास्तव्यवच्छेदस्तयोरित्यर्थः । परिज्ञानं सूक्ष्मतामप्रकारः प्रकीर्त्यते अतिसूक्ष्मत्वेन मयोच्यत इत्यर्थः । तथा च ग्रह इत्युद्देशेऽस्तमनमुद्दिष्टमपि तस्य पूर्व्वमेव सूर्य्यासन्नत्व एव सम्भवात् तद्विलक्षणतया ग्रहयुतिप्रसङ्गे नोक्तम् । नक्षत्रग्रहयुतिस्तु ग्रहयुतिवदिति तदनन्तरमुक्ता । अतः प्रतिबन्धकजिज्ञासापगमेऽवश्यवक्तव्यत्वादस्यावसरसङ्गतित्वात् तत्सङ्गत्या नक्षत्रग्रहयुत्यधिकारानन्तरं प्रागुद्दिष्टमस्तमनं तत्प्रसङ्गादुदयश्च प्रतिपाद्यत इति भावः । तत्र प्रथमं ग्रहताराणां पश्चिमास्तपूर्व्वोदयावाह" र० ना० । "सूर्य्यादभ्यधिकाः पश्चादस्तं जीवकुजार्कजाः । ऊनाः प्रागुदयं यान्ति शुक्रज्ञौ वक्रिणौ तथा" सू० "वक्रगती शुक्रबुधौ तथा सूर्य्यादधिकौ पश्चिमास्तं गच्छतः । सूर्य्यादल्पौ पूर्व्वोदयं प्राप्नुतः । शेषं स्पष्टम् । अथ चन्द्रबुधशुक्राणां पूर्व्वास्तपश्चिमोदयावाह र० ना० । "ऊना विवस्वतः प्राच्यामस्तं चन्द्रज्ञभार्गवाः । व्रजन्त्यभ्यधिकाः पश्चादुदयं शीघ्रयायिनः" सू० । "शीघ्रयायिनः सूर्य्यगत्यधिकगतय इत्यर्थः । एतेन बुधशुक्रौ वक्रगत्यल्पगती सूर्य्यादल्पौ पूर्व्वास्तमधिकौ च पश्चिमोदयं न प्राप्नुत इत्युक्तम् । शेषं स्पष्टम् । अत्रोपपत्तिः । रविगतितोऽल्पगतिर्ग्रहोऽर्कादूनश्चेत् प्राच्यां दर्शनयोग्यो भवितुमर्हति । यतः सूर्य्यस्याधिकत्वेन बहुगतित्वाच्चोत्तरोत्तरमधिकविप्रकर्षात् प्रवहवशेन न्यूनस्य पूर्व्वमुदयादधिकस्यानन्तरमुदयनियमात् । ग्रहस्य क्रान्तिजसंलग्नताकालानन्तरं यावत् सूर्य्यस्य तादृशः कालस्यावत्पर्य्यन्तं विप्रकर्षे दर्शनसम्भवात् । एवं यदाल्पगतिः सूर्य्यादधिकस्तदा प्रवहवशेनार्कस्य पूर्व्वमुदयादनन्तरमुदितग्रहस्य दर्शनासम्भवात् प्रवहवशेनादौ न्यूनार्कस्यास्तसम्भवादनन्तरमधिकग्रहस्यास्तसम्भवात् सूर्य्यास्तानन्तरं पश्चिमभागे ग्रहदर्शनसम्भवेऽप्यधिकगतिसूर्य्यस्य पृष्ठस्थितत्वेनोत्तरोत्तरमधिकसन्निकर्षात् पश्चिमायामदर्शनं सम्भवत्येव । ते तु भौमगुरुशनयः । वक्रत्वे न्यूनगतित्वाद्बुधशुक्रौ चेति । अथार्कगतितोऽधिकगतिर्ग्रहः । सूर्य्यादूनस्तदोक्तरीत्योत्तरोत्तरमधिकसन्निकर्षात् पूर्व्वस्मिन्नदर्शनं याति । यदा सूर्य्यादधिकस्तदोक्तरीत्योत्तरोत्तरमधिकविप्रकर्षात् पश्चिमायामुदयः । ते तु शीघ्राश्चन्द्रबुधशुक्रा इत्युपपन्नमुक्तम् । अथाभीष्टदिन आसन्ने सूर्य्योदयास्तकालिकौ सूर्य्यदृग्ग्रहौ तत्कालज्ञानार्थं कार्य्यावित्याह" र० ना० । "सूर्य्यास्तकालिकाः पश्चात् प्राच्यामुदयकालिकौ । दिवाकरग्रहौ कुर्य्याद्दृक्कर्माथ ग्रहस्य तु" सू० । "पश्चात् पश्चिमास्तोदयसाधनेऽभीष्टदिन आसन्ने सूर्य्यग्रहौ सूर्य्यास्तकालिकौ कुर्य्याद्गणकः । पूर्व्वास्तोदयसाधने सूर्य्योदयकालिकौ कुर्य्यात् दिनेऽभीष्टकाले कुर्य्यात् । चकारो विकल्पार्थकः । अनन्तरं ग्रहस्य दृक्कर्म्म आयनाक्षदृक्कर्म्मद्वयं कुर्य्यात् । तुकार आक्षदृक्कर्म्मस्तोकपूर्व्वोक्तमिति विशेषार्थकः । अत्रोपपत्तिः । पश्चादस्तोदयसाधने पश्चिमायां तद्दर्शनमिति सूर्य्यास्तकालिकौ सूर्य्यग्रहावभीष्टकालांशसाधनार्थं सूक्ष्मौ । पूर्व्वोदयास्तसाधने पूर्व्वदिशि तद्दर्शनमिति सूर्य्योदयकालिकौ सूर्य्यग्रहावभीष्टकालांशसाधनार्थं सूक्ष्मावन्यकाले तु किञ्चित्स्थूलावपि कृतौ दृक्कर्म्मसंस्कृतग्रहस्य सूर्य्यवत् क्षितिजसंलग्नतायोग्यत्वाद्दृक्कर्म्मसंस्कृतो ग्रहः कार्य्य इति । अथेष्टकालांशानयनमाह" र० ना० । "ततो लग्नान्तरप्राणाः कालांशाः षष्टिभाजिताः । प्रतीच्यां षड्भयुतयोस्तद्वल्लग्नान्तरासवः" सू० । "ततस्ताभ्यां सूर्य्यदृग्ग्रहाभ्यां लग्नान्तरप्राणाः "भोग्यासून्नकस्याथ" इत्युक्तप्रकारेणान्तरकालासवः षष्टिभक्ता इष्टाः कालांशा भवन्ति । प्रागुदयास्तसाधने प्रतीच्यां, पश्चिमोदयास्तसाधने षड्भयुतयोः षड्राशियुक्तयोः सूर्य्यदृग्ग्रहयोर्लग्नान्तरासवः । अनन्तरासवस्तद्वत् षष्टिभक्ता इष्टकालांशा भवन्तीत्यर्थः । अत्रोपपत्तिः । दृग्ग्रहसूर्य्ययोरयनान्तरकालो ग्रहस्य सूर्य्योदयकाले दिनगतं पूर्व्वोदयास्तनिमित्तमुपयुक्तम् । एवं पश्चिमोदयास्तनिमित्तं सूर्य्यदृग्ग्रहाभ्यामस्तकालासुभिरन्तरकालः सूर्य्यास्तकाले ग्रहस्य दिनशेषकाल उपयुक्तः तत्रास्तकालानामनुक्तोदयासुभिः साधनार्थं षड्भौ सूर्य्यदृग्ग्रहौ कृतौ स कालोऽस्वात्मकः । यदि अहोरात्रासुभिश्चक्रकलातुल्यचक्रांशा लभ्यन्ते तदेष्टासुभिः क इत्यनुपाते प्रमाणफलयोः फलापवर्त्तनेन हरस्थाने षष्टिः । अतोऽस्वात्मकान्तरकालः षष्टिभक्त इष्टकालांशा इत्युपपन्नमुक्तम् । अत्रेदमवधेयम् । सूर्य्योदयकालि-

दृगार्थं ग्रहगत्योरिष्टजातीयत्वं यदं तदन्तरेणानुपपत्-
त्तु युक्त एवेत्याह" र० ना०। "तल्लग्नासुहृते भुक्ती
अष्टादशशतोद्धृते। स्यातां कालगती ताभ्यां दिनादि
गतगम्ययोः" सू०। "भुक्ती रविग्रहयोर्गती कलात्मिके
तल्लग्नासुहृते कालसाधनार्थं ग्रहस्य यो राश्युदयो
गृहीतस्तेनासात्मकोदयेन गुणिते अष्टादशशतेन भक्ते
फले सूर्यग्रहयोः कालांशवत् कालगती स्याताम्।
ताभ्यां गतिभ्यां गतगम्ययोर्दृगाक्षयोर्दिनादि पूर्वोक्त-
प्रकारेण साध्यम्। न तु पूर्वोक्तप्रकारेण, यथास्थित
गतिभ्यां स्फुटत्वापत्तेः। अत्रोपपत्तिः। यदि एतावद्भिः
कलाभीराश्युदयासवस्तदा गतिकलाभिः क इत्यनुपा-
तेनाहोरात्रक्षेत्रे गत्यासवः कलासमा इत्युपपन्नमुक्तम्।
अथ नक्षत्राणां सूर्यसान्निध्यवशादस्तोदयदर्शनार्थं कालां-
शान् विवक्षुः प्रथममेवाहाह" र०ना०। "स्वातिरगस्त्य-
मृगव्याधचित्राज्येष्ठाः पुनर्वसु। अभिजिद्ब्रह्महृदय
त्रयोदशभिरंशकैः" सू०। "मृगव्याधो लुब्धकः। त्रयोद-
शभिः कालांशैर्दृश्यादृश्यानि नक्षत्राणि भवन्ति। शेष स्प-
ष्टम्। अथान्येषामाह" र०ना०। "हस्तश्रवणफाल्गुन्य श्रुति-
ष्ठा रोहिणीमघाः। चतुर्दशांशकैर्दृश्या विशाखाश्विनदैव-
तम्" सू०। फाल्गुन्य पूर्वोत्तराफाल्गुन्यौ द्वयम्। अश्विनदैव-
तमश्विनीकुमारौ दैवतं स्वामी यस्येत्यश्विनीनक्षत्रम्। दृश्या
उपलक्षणादृश्या अपि लिङ्गपरिणामश्च यथायोग्यं
बोध्यः। शेषं स्पष्टम्। अथान्येषामाह" र०ना०। "कृत्ति-
कामैत्रमूलानि सार्पं रौद्रर्क्षमेव च। दृश्यन्ते पञ्चदशभि-
राषाढाद्वितयं तथा" सू०। "कृत्तिकानुराधामूलनक्षत्राणि
पञ्चदशभिः कालांशैर्दृश्यन्ते। उपलक्षणाद्दृश्यन्तेऽपि।
एवकारो न्यूनाधिकव्यवच्छेदार्थः। आश्लेषार्द्रा। चः समुच्चये।
आषाढाद्वितयं पूर्वोत्तराषाढाद्वयं तथा पञ्चदशकालां-
शैर्दृश्यन्त इत्यर्थः। अथान्येषामवशिष्टानामाह" र०ना०।
"भरणीतिष्यसौम्यानि सौक्ष्म्यात् त्रिःसप्तकांशकैः। शेषाणि
सप्तदशभिर्दृश्यादृश्यानि भानि तु" सू०। "तिष्यः पुष्यः सौम-
दैवतं मृगशिरो नक्षत्राण्येतानि नक्षत्राणि सौक्ष्म्यादणुबिम्ब-
त्वात् त्रिःसप्तकांशकैरेकविंशतिकालांशैर्दृश्यादृश्यानि।
उदितान्यस्तङ्गतानि च भवन्तीत्यर्थः। शेषाणि पूर्वाधि-
कारोक्तनक्षत्रेभ्योऽतिरिक्तानि शततारापूर्वोत्तराभाद्रप-
दारेवतीधनिष्ठानि अपांवत्सापवत्सानि च सप्त-
दशभिः कालांशैर्दृश्यादृश्यानि भवन्ति। तुकारो दृश्या-
दृश्यानीत्यत्र समुच्चयार्थकः। अथ दिनाद्यासयनार्थमि-
न्याया एव प्रमाणजातीयत्वकरणमाह" र० ना०।
"अष्टादशशताभ्यस्ता दृश्यांशाः स्वोदयासुभिः। विभज्य
लब्धाः क्षेत्रांशास्तैर्दृश्यादृश्यताथ वा" सू०। "दृश्यांशाः
कालांशा अष्टादशशतगुणितास्तान् स्वोदयासुभिर्ग्रहराश्यु-
दयासुभिर्भक्ता लब्धाः क्षेत्रांशाः क्रान्तिवृत्तसंबन्धास्तै-
रंशैर्दृश्यादृश्यता उदयास्तौ प्रकारान्तरेणोक्तरीत्या ज्ञेयौ।
कालांशाभ्यां क्षेत्रांशानयनीय तदन्तरकला यथास्थितगत्यो-
रन्तरेण योगेन वा भक्ता। फलमुदायास्तयोर्गतैष्यदिनाद्यं
पूर्वागतमेव स्यादित्यर्थः। अत्रोपपत्तिः। यदि राश्यु-
दयासुभिरेकराशिकलास्तदा कालांशकलातुल्यासुभिः का
इति क्रान्तिवृत्ते कलास्ताः षष्टिभक्ता अंशा इति पूर्व-
गतेष्वास्थाने कालांश एव कृता लाघवात्। अत्रानु-
पपन्नम्। ग्रहाणामनुकदिक्स्थोऽनुकदिक्षूदय इत्यु-
क्तम्। तथा नक्षत्राणां नोक्तम् गत्यभावाद्वियोगयोगा-
भावेन गतैष्यदिनाद्यानयनासम्भवश्चेत्यत आह" र०ना०।
"प्रागेवाहुदय पश्चादस्तो दृक्कर्म पूर्ववत्। गतैष्यदिवसप्राप्ति-
र्भानुभक्त्या सदैव हि" सू०। "एषां नक्षत्राणां प्राच्यामुदयः
प्रतीच्यामस्तो गत्यभावाद्दृग्गतिग्रहवत्। एषां नक्षत्राणां
दृक्कर्मायनदृक्कर्म पूर्ववत् पूर्वप्रकारेण कार्यम्। परन्तु
स्पष्टाक्षपृथ्वीभिरिति ध्येयम्। सदा नित्यम्। एवका-
रात् कदाचिदप्यन्यथा नेत्यर्थः। हि निश्चयेन। र-
विगत्या गतैष्यदिवसानां लब्धिः स्यात्। नक्षत्रगत्य-
भावात् योगे ग्रहगतिवत्। अथ कतिपयानां नक्षत्राणां
सूर्यसान्निध्यवशादस्तो नास्तीत्याह। "अभिजिद्ब्रह्मह-
दयं स्वातीवैष्णववासवाः। अहिर्बुध्न्यमुदक्स्थत्वान्न लु-
प्यन्तेऽर्करश्मिभिः" सू०। अभिजित्। ब्रह्महृदयम्। अने-
नैकदेशस्य ब्रह्मणोऽपि ग्रहणम्। स्वातीश्रवणधनिष्ठाः।
अहिर्बुध्न्यमुत्तराभाद्रपदा एतानि नक्षत्राण्युत्तरदिक्-
स्थत्वादुत्तरविक्षेपाधिक्यादित्यर्थः। सूर्यकिरणैर्न लुप्यन्ते
अस्तं न यान्तीत्यर्थः। अत्रोपपत्तिः "यस्योदयार्का-
दधिकोऽस्तभानुः प्रजायते सौम्यशरातिदैर्घ्यात्। तिग्मां-
शुसान्निध्यवशेन नास्ति धिष्ण्यस्य तस्यास्तमयः कथञ्चित्"।
इति भास्कराचार्योक्ता। परमिदमुक्तमष्टाक्षभायाम्। अन्यथा
पूर्वाभाद्रपदाया अपि तथात्वापत्तेरिति दिक्" र०ना०।
"यथा भौमादीनां सूर्यसान्निध्योदयास्तासन्ने दृश्या सकल-
बिम्बदर्शनं तथा चन्द्रस्य स्वोदयास्तकाले सकलबिम्बद-
र्शनं शुक्लत्वेन न भवति। किन्तु बिम्बैकदेश एव शुक्लत्वेन
दृश्यत इति भौमादिविलक्षणत्वं चन्द्रस्य कुत इत्याशङ्का-

या: पूर्व्वाधिकारे समुपस्थितेस्तदुत्तरभूतचन्द्रोदयनाधिकारोऽवश्यमुपस्थित आरम्भो व्याख्यायते । तत्र चन्द्रोऽत्र सूर्य्योदयकालात् पूर्व्वकालेऽस्तकालानन्तरकाले चासन्नकतिपयदिवसेषु दर्शनात् पूर्व्वाधिकारे चन्द्रस्य कालांशानुक्त्या तदुदयास्तानुक्तेश्च प्रथममुपस्थितचन्द्रोदयास्तयोः साधनमतिदिशति" र० ना० । "उदयास्तविधिः प्राग्वत् कर्त्तव्यः शीतगोरपि । भागैर्द्वादशभिः पश्चाद्दृश्यः प्राच्यामदृश्यताम्" सू० । "चन्द्रस्य अपिशब्दः पूर्व्वाधिकारोक्तग्रहनक्षत्रैः समुच्चयार्थकः । उदयास्तविधिरुदयास्तयोः साधनप्रकारः प्राग्वत् पूर्व्वाधिकारोक्तरीत्या गणकेन कार्य्यः । ननु कालांशानां पूर्व्वमनुक्तेः कथं तत्सिद्धिरत आह । भागैरिति । द्वादशभिरंशैश्चन्द्रः पश्चिमायां दृश्य उदितो भवति । प्राच्यामदृश्यतामस्तं प्राप्नोति । अत्र पश्चात् प्रागिति पुनरुक्तमपि पूर्व्वं बुधशुक्रयोः साहचर्य्येण चन्द्रोदयास्तदिगुक्ता तत्साहचर्य्येण चन्द्रस्य पश्चिमास्तपूर्व्वोदयौ वर्त्तेते इति कस्यचिन्मन्दबुद्धेर्भ्रमस्य वारणार्थेति ध्येयम्"।

सूर्य्योदये विशेषः शु० त० स्क० पु० । "रेखामात्रं तु दृश्येत रश्मिभिश्च समन्वितम् । उदयं तं विजानीयाद्धोमं कुर्य्यात् विचक्षणः" "उदयादोदयाद्भानोर्भौमसावन वासर" सू० सि० । "सावनः स्यादहोरात्रमुदयादोदयाद्रवेः" काल० मा० ब्रह्म० सि० । गुरुशुक्रोदये च सर्व्वमङ्गलकार्य्याणि कर्त्तव्यानि । अगस्त्योदयः अगस्त्यशब्दे उक्तः । "प्रससादोदयादम्भः कुम्भयोनेर्महौजसः" रघुः ।

**उदयगामिनी** स्त्री उदयं सूर्य्योदयं गच्छति मुहूर्त्तादिना व्याप्नोति गम-णिनि ङीप् । "सूर्य्योदयावधिमुहूर्त्तादिकालव्यापिन्यां तिथौ । कर्म्मानुष्ठाने उदयकाले क्रियमाणस्य ग्राह्यता तन्निर्णीतम्" का० मा० । "व्रतोपवासनियमे घटिकैका यदा भवेत् । उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके" ब्र० पु० । "व्रतोपवासस्नानादौ घटिकैका यदा भवेत् । उदये सा तिथिर्ग्राह्या श्राद्धादावस्तगामिनी" विष्णु० ध० पु० । "आदित्योदयवेलायां याऽल्पापि च तिथिर्भवेत् । पूर्णा इत्येव सा ज्ञेया प्रभूता नोदयं विना" देवलः । "यां तिथिं च समनुप्राप्य उदयं याति भास्करः । सा तिथिः सकला ज्ञेया स्नानदानजपादिषु" देवलः । "उदयन्नेव सविता यां तिथिं प्रतिपद्यते । सा तिथिः सकला ज्ञेया दानाध्ययनकर्म्मसु" व्यासः । "पक्षद्वयेऽपि तिथयस्तिथिं पूर्व्वां तथोत्तराम् । त्रिभिर्मुहूर्त्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः" पैठी० । "उदिते दैवतं भानौ पैत्रं चास्तमिते रवौ । द्विमुहूर्त्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोः" बौधा० । "भानावुदिते सत्युत्तरकालेऽह्नो मुहूर्त्तद्वयं दैवत्यम् । तस्मिन्नस्तमिते सति ततः पूर्व्वकालीनमह्नो मुहूर्त्तत्रयं पितृदैवत्यमतस्तावत्कालव्यापिनी या तिथिर्भवति सैव क्रमेण हव्यकव्ययोर्ग्राह्या" अत्राशङ्कापूर्व्वकं माधवेन समाहितम् । नन्वस्त्वेवं तथाप्युत्तरविद्धयास्तिथ्योर्ग्रहणे कियत्परिमाणमुदयेऽपेक्षणीयमिति विवेचनीयम् । तत्र बौधायनेन अल्पापीत्यभिधानात् निमेषमात्रं प्रतिभाति, व्यासेन उदयन्नेवेत्यभिधानात् तथैव प्रतिभाति । भविष्यत्पुराणे तु घटिकामात्रं बौधायनवचनान्तरे द्विमुहूर्त्तमित्येवं विरोधमाशङ्क्य "अत्रोच्यते "पौर्व्वाह्णिकास्तु तिथयस्त्रिमुहूर्त्ताः फलप्रदाः" इ० या० वचनेन दैवे पूर्व्वाह्णव्याप्तायास्त्रिमुहूर्त्तमितायास्तिथेर्ग्रहणम् । त्रिमुहूर्त्तन्यूनायास्तिथेः पूर्व्वाह्णव्याप्त्यभावात् पूर्व्वाह्णस्य च पञ्चधा विभक्तस्य मुख्यत्वात् उदिते भानौ त्रिमुहूर्त्ता तिथिर्ग्राह्या । यत्तु "त्रिमुहूर्त्ता न कर्त्तव्या या तिथ्युदयगामिनी"ति तत् त्रिमुहूर्त्तव्याप्तेर्बाधकं प्रत्युतोद्बोधकमेव । तथा हि प्रतिषेधः सर्व्वत्र प्रसक्तिपूर्व्वकः, प्रसक्तिश्चात्र यथोक्तरीत्या पौर्व्वाह्णिकवाक्यात् त्रिमुहूर्त्तवेधविधायिपैठीनसिवाक्याद्वा भवति तस्य प्रसक्तं त्रिमुहूर्त्तत्वं समतिथौ बाधकाभावात्तथैव तिथिक्षये त्वधिकव्याप्तिर्विवक्षया प्रतिषिध्यते अतश्च तत्र चतुर्थमुहूर्त्तस्पर्शिनी तिथिर्ग्राह्या तिथिक्षयात् । तिथिवृद्धावपि मुहूर्त्तत्रयमेव मुख्यं मुहूर्त्तद्वयं त्वनुकल्पः । एतदेव सूचयितुं द्विमुहूर्त्तापीत्यत्र अपिशब्दः पठ्यते"। ततः प्रासङ्गिकमन्यत् समाधाय उपसंहृतम् यथा "प्रकृते तु सूर्य्योदये मुहूर्त्तत्रयव्यापिनी प्रतिपद्दानव्रतयोर्ग्रहीतव्या एवं सत्युदयमात्रव्याप्तिशास्त्रं घटिकामात्रव्याप्तिशास्त्रं च वैश्वानराधिकरणन्यायेनार्थवादरूपतया त्रिमुहूर्त्तव्याप्तिं प्रशंसति । अथवा यदा पूर्व्वेद्युरुदयकालं परित्यज्योपरि सर्व्वत्र व्याप्नोति परेद्युरुदयकालमात्रं व्याप्नोति तदानीमुदयानन्तरभाविन्यामुख्यायास्त्रिमुहूर्त्तव्याप्तेर्दिनद्वयेऽप्यभावेन द्वयोरपि दिनयोर्गौणकालत्वे सति किं ग्राह्यमिति वीक्षायां पूर्व्वदिने गौणकर्म्मकालव्याप्तेर्भूयस्त्वात्तत्रैव प्रक्रमः न्यायतः प्राप्तं केनापि निमित्तेन तत्प्रत्यूहे सति परेद्युः कर्म्मकालव्याप्तिसम्पादनाय पूर्णत्वमभिव्योदयविवक्षा

यस्य यः कालस्तत्कालव्यापिनी तिथिः। तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम्" कर्म्मणोविहितकालव्यापिन्या एव ग्राह्यत्वाभिधानेन यत् तिथिक्षयवशात् उभयदिने स्वल्पत्रिधाविभक्तदिनतृतीयांशरूपपूर्व्वाह्णाव्याप्तिस्तत् प्रतियोगिवैयधिकरण्यघटितव्याप्तेः प्रवेशनेन मुहूर्त्तकालव्याप्तावपि पूर्व्वाह्णव्यापकतया ग्रहणमित्येव रघुनन्दनस्याशयः। तथा च "आरभ्य तस्यां दशमीं च यावत्" इत्यादौ यथा पूजायान्नवमीनां प्रतियोगिवैयधिकरण्यघटितव्यापकताप्रवेश एवमत्रापि मुहूर्त्तव्यापकतानातोन्यूनदण्डादिव्यापने ग्राह्यता। भवति च द्विमुहूर्त्तव्यापिन्या अपि मुहूर्त्तव्यापितेति सर्व्वं सुस्थम्। तेन मुहूर्त्तन्यूनतायां न ग्राह्यता द्विमुहूर्त्तादिव्याप्तिस्तु मुख्येति। एवञ्च युग्मादिशास्त्रविषये कृष्णप्रतिपदादौ उभयदिने पूर्व्वाह्णमुहूर्त्तव्यापित्वेऽपि त्रिमुहूर्त्ताया एव ग्राह्यतेति विवेकः। एवमस्तगामिन्यामपि अस्तादर्व्वाक् त्रिमुहूर्त्तायास्तिथेः। पत् ग्राह्यतेत्यपि बोध्यम्।

**उदयगिरि** पु० उदय उदयस्थानं गिरिरिव। सूर्य्यादेरुदयस्थाने पर्व्वतवदाच्छादके भूवृत्तपादे "उदयगिरिवनालीबालमन्दारपुष्पम्" उद्भटः "उदयगिरिशिखरसंस्थिते प्रतप्तकनकनिकरपीतलोहिते सवितरि" सुश्रु०। उदयाचलादयोऽप्यत्र। "श्रितोदयाद्रेरभिसायमुच्चकैः" माघः। भूगोलपादस्यैव यथा सूर्य्याद्याच्छादकत्वम् तथा सिद्धान्तग्रन्थे स्थितम्। यद्यपि सूर्य्योदयस्य देशविशेषे विशेषस्थाने एव सम्भवः तथापि निरक्षदेशावधिकएव देशे मुख्यत्वम् "लङ्कापुरेऽर्कस्य यदोदयः स्यात् तदा दिनार्द्धं यमकोटिपुर्य्याम्। अधस्तदा सिद्धपुरेऽस्तकालः स्याद्रोमके रात्रिदलं तदैव। यत्रोदितोऽर्कः किल तत्र पूर्व्वा तत्रापरा यत्र गतः प्रतिष्ठाम् तन्मध्यतोऽन्ये च ततोऽखिलानामुदक्स्थितो मेरुरिति प्रसिद्धम्" सिद्धान्तशिरोमणौ तथैव व्यवस्थापितम्।

तथा च लङ्कादिपुरीचतुष्टयस्य भूवृत्तपादान्तरस्थितत्वेन द्वितीयपुर्य्युपरिस्थे सूर्य्यादौ प्रथमं दृश्यता तत्पूर्व्वादिस्थदेशेषु ततः परम्। पश्चात् स्थितदेशेषु च ततः पश्चात् दृश्यता एवञ्च भूवृत्तपादेनाच्छादने तदतिक्रमे दर्शनयोग्यत्वादुदयः। ततश्च यत्र देशे यदा दर्शनं तत्र तदा तद्देशापेक्षया सूर्य्यादेर्भूबिम्बपादोपरिस्थितत्वेन तत्स्थानस्य उदयगिरित्वम् यत्र चादर्शनं तद्देशवासिनामस्तगिरित्वं शास्त्रेषु कल्पितम्। एवञ्च निरक्षदेशावधि भूवृत्तपादान्तरेषु स्थितलङ्कापुरवासिनां यमकोटिरेवोदयस्थानमेवमन्यत्र कल्प्यम्। लिङ्गपुराणे तु अन्याः पुरीरुक्त्वा तत्रोदयादिव्यवस्थामाह "मानसोपरि माहेन्द्री प्राच्यां मेरोः स्थिता पुरी। दक्षिणे भानुपुत्रस्य वरुणस्य तु वारुणे। सौम्ये सोमस्य विपुला तासु दिग्देवताः स्थिताः। अमरावती संयमनी सुखा चैव विभा क्रमात्। लोकपालोपरिष्टात्तु सर्व्वतो दक्षिणायने। काष्ठाङ्गतस्य सूर्य्यस्य गतिर्या तां निबोधत। दक्षिणां प्रक्रमेद्भानुः क्षिप्तेषुरिव धावति। पुरान्तगो यदा भानुः शक्रस्य भवति प्रभुः। सर्व्वैः सांयामनैः सौरो ह्युदयो दृश्यते द्विजाः!। स एव सुखवत्यान्तु निशान्तस्थः प्रदृश्यते। अस्तमेति तदा सूर्य्यो विभायां विश्वदृग्विभुः। यथा प्रोक्तोऽमरावत्यां यथाऽसौ याति भास्करः। तथा संयमनीं प्राप्य सुखाञ्चैव विभां खगः। यदा पराह्णस्त्वाग्नेय्यां पूर्व्वाह्णो नैरृते द्विजाः!। तदा त्वपररात्रश्च वायुभागे सुदारुणः। ऐशान्यां पूर्व्वरात्रस्तु गतिरेषास्य सर्व्वत" इति। व्याख्यातञ्च छा० उ० आनन्दगिरिणा "तथा चोपरिष्टादमरावत्यास्तिष्ठन्मध्याह्नं तत्रेशकोणस्थानां तृतीययाममाग्नेयकोणस्थानामाद्ययामं संयमिन्यामुदयं च करोति सविता। एवं यदा याम्ये मध्याह्ने तिष्ठति तदैन्द्रे अस्तमयः, आग्नेये तृतीययामः, नैरृतिकोणे प्रथमो यामः, वारुणे उदयः। यदा च वारुणे मध्याह्नस्तदा याम्येऽस्तमयः, निरृतिकोणे तृतीयो यामः, वायव्ये प्रथमयामः, सौम्ये उदयः। यदा च सौम्ये मध्याह्नस्तदा वारुणेऽस्तमयः, वायव्ये तृतीययामः, ईशानकोणे प्रथमो यामः, ऐन्द्रे उदयः। तथाग्नेयकोणे वर्त्तमानस्तत्रस्थानां मध्यं दिनम्, यमेन्द्रपुर्य्योरपराह्णतृतीययामौ, नैरृतेशानकोणयोरुदयास्तमयौ च करोति" एतच्च मानसापेक्षयैवोदयास्तमयकीर्त्तनाच्च पूर्व्वोक्तेन विरुद्धम् "अथ यदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्ता ऊर्द्ध्व उदेताऽर्वागस्तमेता इत्यादि" छा० उ० भाष्ये "पश्चादुत्तरत ऊर्द्ध्वमुदेता विपर्य्ययेणास्तमेता। पूर्व्वस्मात्पूर्व्वस्माद्द्विगुणोत्तरोत्तरेण कालेनेत्यपौराणं दर्शनम्। सवितुश्चतुर्द्दिशमिन्द्रयमवरुणसोमपुरीषूदयास्तमयकालस्य तुल्यत्वं हि पौराणिकैरुक्तम्। मानसोत्तरस्य मूर्द्धनि मेरोः प्रदक्षिणावृत्तेस्तुल्यत्वादिति" इत्याशङ्क्य अत्रोक्तः परिहार आचार्य्यैरमरावत्यादीनां पुरीणां द्विगुणोत्तरोत्तरेण कालेनोद्वासः स्यात्। उदयश्च नाम सवितुस्तन्निवासिनां प्राणिनां चक्षुर्गोचरतापत्तिस्तदत्ययश्चास्तमयं न परमार्थत उदयास्तमने स्तः। तन्निवासिनाञ्च प्राणिनामभावे तान् प्रति तेनैव

विवाहस्तां मातुलकन्योद्वाहस्तु शिष्टैरपि क्रियते तस्य स्मृतिविरुद्धत्वेऽपि किञ्चित् श्रौतं लिङ्गमास्थाय तेषां तथाचरणमिति बहवः। तस्य श्रौतलिङ्गस्यान्यार्थपरता पराशरभाष्यादौ दर्शिता। अतएव द्वारकाकृष्णपदलिप्सुदेशवासिनां तथाचरणे भाग०१०स्कन्दे। "यद्यप्यनुस्मरन् वैरं रुक्मी कृष्णावमानतः। व्यतरत् भागिनेयाय सुतां कुर्वन् स्वसुः प्रियम्"। "रोहिण्यामनिरुद्धाय पौत्रीं रुक्म्याददद्धरेः। रोचनां बद्धवैरोऽपि स्वसुः प्रियचिकीर्षया जानन्नधर्मं तद्यौनं स्नेहपाशवशानुगः"। अधर्मं जानन्नित्युक्तेन तस्याधर्मत्वम्। "मातुलस्य सुतामूढ्वेति" प्रागुक्तवचनाच्च तस्याधर्मत्वम् सुव्यक्तमेव। स च विवाहोऽष्टविधः "ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः। गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः" मनुः एतेषा लक्षणं तत्तच्छब्दे दृश्यम्। "येन भार्य्या कृता पूर्वं कृतोद्वाहा परस्य वै" हरिवं०।

**उद्वाहन** न० उद्+वह–णिच्–ल्युट्। १पुत्रादेरुद्वाहसम्पादने २उन्नयने ३स्थानान्तरनयने। उद्वाह्यते स्थानान्तरं नीयतेऽनेन उद्+वह–णिच्–करणे ल्युट्। ४उद्धारणसाधने "उद्घाटनं घटीयन्त्रं सलिलोद्वाहने प्रहेः" अमरः। उद्+वह–स्वार्थे णिच्–भावे ल्युट्। ५विवाहे। वाहनस्य वृषाकर्षणस्योपरि वाहनं कर्षणं यत्र। ६द्विहल्ये क्षेत्रे यत्र प्रथममेकवारं कृष्ट्वा पुनः कर्षणं क्रियते तादृशे क्षेत्रे हेम०। [ टके (कड़ि) हेम०।

**उद्वाहनी** स्त्री उद्+वह्यते स्वार्थे णिच्–कर्मणि ल्युट्। वरा-

**उद्वाहिक** त्रि० उद्वाहः प्रयोजनमस्य ठक् संज्ञापूर्वकविधेरनित्यत्वात् न वृद्धिः। विवाहसाधने मन्त्रादौ "नोद्वाहिकेषु मन्त्रेषु विधवावेदनं क्वचित्" मनुः। वृद्धौ औद्वाहिकोऽप्यत्र त्रि०।

**उद्वाहित** पु०स्त्री उद्वाहो जातोऽस्य तारका० इतच्। जातविवाहे "बाले वृद्धे तथैवाक्षं गते च दैत्यमन्त्रिणि। उद्वाहितायां कन्यायां दम्पत्योरेकनाशनम्" राजमा०।

**उद्वाहिनी** स्त्री उद्वाहः उद्धरणं साध्यतयाऽस्त्यस्याः इनि ङीप्। रज्ज्वां मेदिनिः।

**उद्विग्न** त्रि० उद्+विज–कर्त्तरि क्त। उद्वेगयुक्ते, "निमग्नोद्विग्नसंक्षोभैः पपौ दोर्भेव मेदिनी" भट्टिः। दुःखपरिहारासमर्थतया २आकुलचित्ते, ३क्षुभिते च।

**उद्वीक्षण** न०उद्+वि+ईक्ष–भावे ल्युट्। १ऊर्द्ध्वदृष्टौ। करणे ल्युट्। २तत्साधने नेत्रे "सखीजनोद्वीक्षणकौमुदीमुखम्" रघुः।

**उद्वीत** त्रि० उद्+वि+इ–क्त। विशेषेणोद्गते। (अयलापिङ्ग्वीवा) समन्तात् प्लाविते "ततो युधिष्ठिरानीकमुद्वीतार्णवनिस्वनम्" भा० द्रो० १६अ०।

**उद्वृत्त** त्रि०उद्गतो वृत्तात् निरा०स०। १दुर्वृत्ते। उद्+वृत-क्त। २उत्क्षिप्ते ३भुक्तोज्झिते। ४अधिके। "उद्वृत्तोहि ग्रन्थः समधिकफलमाचष्टे" व्या० न्याय:। "कल्पक्षयोद्वृत्तमिवार्णवाम्भः" भा० आ० प०७। ५क्षुभिते च "उद्वृत्तनक्रात् सहसोन्ममज्ज" रघुः।

**उद्वेग** पु० उद्+विज–घञ्। १व्याकुलचित्ततायाम् २विरहजन्ये दुःखोद्गमे, "मनोभिः सोद्वेगैः प्रणयविहतिध्वस्तरुचयः" किरा०। "सहसोद्वेगमियं व्रजेदिति" रघुः। "शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या" मेघ०। "योऽजिह्वाग्रं बाधते उद्वेगं जनयति शिरो गृह्णाति नासिकाञ्च स्रावयति स कटुकः" सुश्रु०। "सङ्क्षोभेष्वप्यनुद्वेगो माधुर्य्यं परिकीर्त्तितम्" सा०द०। ३भये च। ४गुवाकफले न०। उद्गतो वेगोऽस्मात्। ५निश्चले ६स्तिमिते ७शीघ्रगामिनि च त्रि०।

**उद्वेजन** त्रि० उद्+विज–भावे ल्युट्। १उद्वेगे अमरः "परदाराभिमर्षेषु प्रवृत्तान् नृन् महीपतिः। उद्वेजनकरैर्दण्डैश्छिन्नयित्वा प्रवासयेत्" मनुः तस्मै साधु छ। उद्वेजनीय उद्वेजके त्रि० "परिहरेदुद्वेजनीयाश्च कथाः" सुश्रु०।

**उद्वेजित** त्रि० उद्+विज–णिच्–क्त। कृतोद्वेगे "उद्वेजिता वृष्टिभिराश्रयन्ते" कुमा०।

**उद्वेदि** त्रि०उद्गता वेदिर्यत्र प्रा० ब० गतलोपः। उन्नतवेदिके। "विमानं नवमुद्वेदि चतुःस्तम्भप्रतिष्ठितम्" रघुः

**उद्वेप** पु०उद्+वेप–भावे घञ्। १उत्कम्पने। कर्त्तरि अच्। २तद्युक्ते त्रि०। ततः तेन निर्वृत्तमित्यर्थे संकुला० अच् औद्वेप तन्निर्वृत्ते त्रि०। स्त्रियां ङीप्।

**उद्वेल** त्रि० उत्क्रान्तो वेलाम् अत्या० स०। १वेलातिक्रान्ते २मर्य्यादातिक्रान्ते "भयप्रलयोद्वेलादाचख्युर्नैर्ऋतोदधेः" रघु

**उद्वेष्टन** न० उद्+वेष्ट–ल्युट्। १कलपादयोर्वेष्टने, २उपवेष्टने च। "वक्त्रे मधुरता तन्द्रा हृदयोद्वेष्टनं भ्रमः" "हृदयोद्वेष्टनं तन्द्रा वाचाभ्युतिरत्रोचकः" सुश्रु०। उद्गतं वेष्टनात् निरा०त०। ३उन्मुक्तबन्धने त्रि०। "कयाचिदुद्वेष्टनवान्तमाल्यः" रघुः कुमारश्च

**उद्वोढृ** पु० उद्+वह–तृच्। परिणेतरि। "उद्वोढापि भवेत् पापी संसर्गात् कुलनायिके!। वेश्यागमनजं पापं तस्य पुंसो दिनेदिने" महानि०त०।

**उभ्रस** उञ्छे भ्वा० पर० सक० सेट्। उभ्रसति औभ्रसीत्

ता। नहि नरैः ग्रन्थगृहीतोन्नतिः स्पष्टोपलभ्यते। प्रसिद्धा तु युक्तगृहीतोन्नतिः। अत उक्तं मासान्तपादे प्रथमेऽथ वेति। "वप्रोत्रो करिकल्प विभ्रकरीमभ्युन्नतिं, गच्छतः"। "लोकेनोन्नतिमायाति" इति च सा॰द॰

**उन्नतीश** पु॰ ६त॰। गरुड़े त्रिका॰।

**उन्नद्ध** त्रि॰ उद्+नह–क्त। १उद्बद्धे। उत्कटे च। "अहङ्कारेण उन्नद्धमस्तम्भोऽभ्युन्नतेजसा" भा॰१स्क॰। उन्नद्धं उत्कटम्"। श्रीधरः।

**उन्नमन** न॰उद्+नम–ल्युट्।१उन्नतौ। णिच्–ल्युट् न वृद्धिः। १उत्तोलने सुश्रुतोक्ते २यन्त्रकर्म्मभेदे च। तानि चतुर्विंशतिः यथोक्तं तत्रैव। "यन्त्रकर्म्माणि तु निर्घातनपूरणबन्धनव्यूहनवर्त्तनचालनविवर्त्तनविवरणपीडनमार्गविशोधनविकर्षणाहरणाकुञ्चनोन्नमनविनमनभञ्जनोन्मथनाचूषणैषणदारणर्जूकरणप्रक्षालनप्रधमनप्रमार्जनानि चतुर्विंशतिः"। उन्नमनञ्च व्रणरुधिरस्रावसाधनं यथोक्तं तत्रैव "सन्धिगतः पीड्यमानो न प्रवर्त्तते आकुञ्चनप्रसारणोन्नमनविनमनप्रधावनात् आसनप्रवादैश्च सुवति"।

**उन्नमित** त्रि॰उद्+नम–णिच्–क्त। १उत्तोलिते, २अर्द्धीकृते च "अथ प्रयत्नोन्नमितानमत्फणैः" कुमा॰ "कश्चिदुन्नमिताननौ" रघुः। [ मण्डितं ततृ' माघः

**उन्नम्र** त्रि॰ उद्+नम–रन्। उन्नते "उन्नम्रताम्रपटमण्डप

**उन्नय** पु॰ उद्+नी–"क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते"इत्युक्तेः अच्। कूपादितो जलादेरुत्तोलने अमरः।

**उन्नयन** न॰ उद्+नी–ल्युट्। १वितर्के, २ऊर्द्ध्वप्रापणे च। "अनादिष्टांसेदोन्नयनश्रुतेः कात्या॰" ६,५,२४ उन्नयन श्रुतिश्च। "अतोऽचिद्रेभ्य उन्नयन्त्यतोमनुष्येभ्यः" शत॰ब्रा॰ ४,५,६,२, "चमसोन्नयनकाले वाहुल्य दक्षोन्मद्य तन्नमसेनोन्नयेत्" कात्या॰ १०,६,२१, "तेभ्य एवोन्नयनमभ्यभि सोमानुन्नयन्तीति श्रुतेः" कात्या॰२२,१०, ५, "उन्नयन्त्यस्मात् अपादाने ल्युट्"। २पूतभृत्पात्रे। "उन्नयने च" कात्या॰२५,११,१४, तदेव भवति उन्नयनमादित्यन्नयनम् पूतभृदुच्यते" कर्कः। उन्नमित नयनं येन प्रा॰ब॰। उन्नमितनेत्रे त्रि॰।

**उन्नस** त्रि॰उन्नता नासा यस्य अच् समा॰ नसादेशः। उन्नतनासिके। 'उन्नसं दधतो वक्त्रम्' भट्टिः।

**उन्नाद** पु॰ उद्+नद–घञ्। उच्चशब्दे "शरभोन्नादसंजुष्टम् नानामृगनिषेवितम्" भा॰व॰१५८अ॰।

**उन्नाभ** पु॰उन्नता नाभिर्यस्य अच् समा॰। सूर्य्यवंश्ये नृपभेदे "उन्नाभ इत्युद्धतनामधेयः"रघुः अशंज्ञायान्तु न अच्। उन्नाभिरित्येव त्रि॰। उन्नता नाभिः प्रा॰स॰। उन्नतनाभौ पुंस्त्री॰।

**उन्नाय** पु॰ उद्+नी–"अणोदोर्नियः" पा॰घञ्। १ऊर्द्ध्वनयने २वितर्के ३उद्ग्रये च "उन्नायामधिगच्छन्तः प्रज्ञावैबहुधा भृताम्" भट्टिः। [हेमच॰।

**उन्नाह** पु॰ उद+नह–घञ्। १उत्तोल्यबन्धने २काञ्जिके न॰

**उन्निद्र** त्रि॰उद्गता निद्रा मुद्रा यस्य। १विकसिते निद्रायाश्च मुकुलीभावरूपनेत्रनिमीलनार्थकत्वेन तथात्वम्। "उन्निद्रपुष्पचणकभ्रकपुष्पभासा" माघः। २निद्रारहिते च। "तामुन्निद्रामवनिशयनां सौधवातायनस्थाम्" मेघ॰। "शय्याप्रान्तविवर्त्तनैर्विगमयत्युन्निद्रएव क्षपाः" शकु॰। उन्निद्रता च जागरणं तच्च विप्रलम्भशृङ्गारे कामकृतदशविधावस्थाभेदः तासावस्थाः ४४७पृ॰ उक्ताः।

**उन्नीत** त्रि॰ उद्+नी–क्त। १ऊर्द्ध्वं नीते २वितर्किते च।

**उन्नेतृ** त्रि॰ उद्+नी–तृच् स्त्रियां ङीप्। १ऊर्द्ध्वनायिनि २उन्नायके च षोडशसु ऋत्विक्षु ३ऋत्विग्भेदे पु॰ स च अध्वाराकशब्दे ८५पृ॰ दर्शितः। तस्य च गीते चमसाधिष्ठ्यादपादुदकादुत्तारणात्तोतेऽनेत्र्ययनम् "उन्नेतैनानुनयति" "उन्नेतश्चमसेश्चमसेतश्चमसेतर्येनो अभ्युन्नयान इत्युच्चीयमानाजपन्ति" आश्व॰ श्रौ॰ ६,१२,१२,१४। "उन्नेता यथाश्रोक्तविधिना सर्वानुदकादुत्तारयति" "उन्नेतरित्येतं मन्त्रं जपन्ति" ना॰इ॰ "आहूतमुन्नेता द्रोणकलशमिडामिव प्रतिगृह्योपहवमिष्टाऽवेक्षेत" आश्व॰ श्रौ॰ ६,१२,१। "अथोन्नेता उपांशुसवनं प्रयच्छन्नथाहोन्नेतारमाहुज पावय" इति संप्रवच्छाति प्रतिप्रस्थाता संस्रवानुन्नेता चमसेनोदञ्चनेन वा"शत॰ब्रा॰ ४,२,५,१८,२१। ततः उद्गात्रा॰ अण् न वृद्धिः। उन्नेत्र उन्नेतृसम्बन्धिनि त्रि॰। "प्रतिप्रस्थातान्नीध्रोन्नेत्र" कात्या॰ २४,४,४६। इञौ औन्नेत्रमित्यपि तत्रैव त्रि॰।

**उन्नेय** त्रि॰ उद्–नी–यत्। १ऊर्द्ध्वनयनीये २उन्नायनीये च।

**उन्मज्जक** पु॰उद्+मस्ज–ण्वुल। "कण्ठदघ्ने जले स्थित्वा तपः कुर्वन् प्रवर्त्तते। उन्मज्जकः स विज्ञेयस्तापसोलोकपूजितः" इत्युक्तलक्षणे १तापसे। जलादेरुपरि २उत्प्लावके त्रि॰। [ (भाषा) प्लवने।

**उन्मज्जन** न॰ उद्+मस्ज–ल्युट्। मज्जनविपरीतव्यापारे

**उन्मण्डल** न॰ उन्नमं मण्डलम्। सि॰ शि॰ उक्ते दिनरात्र्योः क्षयवृद्धिज्ञापने मण्डलभेदे। विवाह तत्रैव।

"पूर्वापरक्षितिजसंगमयोर्विलग्नं याम्ये ध्रुवे पलखवैः क्षितिजादधःस्थे। सौम्ये कुजादुपरि चालखवैर्ध्रुवे तदुन्मण्डलं दिननिशोः क्षयवृद्धिकारि" शि०। "समवृत्तक्षितिजयोर्यौ पूर्व्वापरौ संपातौ तयोर्ध्रुवचिह्नयोश्च यद्वृत्तं बध्यते तदुन्मण्डलसंज्ञम्। दिनरात्र्योर्वृद्धिक्षयौ तद्वशेन भवत" प्रमि०। सूर्य्यसिद्धान्ते रङ्गनाथेन च स्पष्टमुक्तं यथा "प्राक्पश्चिमाश्रिता रेखा प्रोच्यते सममण्डलम्। उन्मण्डलं च विषुवन्मण्डलं परिकीर्त्यते" सू०। "प्राक्पश्चिमाश्रिता पूर्व्वपश्चिमसम्बद्धा साधिता रेखा समवृत्तमुच्यते। सैव रेखोन्मण्डलं विषुवन्मण्डलम्। चः समुच्चये। उभयसंज्ञकं कथ्यते। अत्रोपपत्तिः। क्षितिजपूर्वापरवृत्तसंयोगौ पूर्वापरे तन्मूलं पूर्वापरसूत्रमिति। पूर्वापरवृत्तस्य भूमावूर्ध्वाधरानुकारिवृत्तत्वेनादर्शनाद्वृत्ताकारतयैव दर्शनाच्च पूर्वापरवृत्तमपि तन्मूलम्। पूर्वापरवृत्तस्य सममण्डलत्वेनाभिधानात् तद्रेखा सममण्डलसंज्ञोक्ता। अथ स्वनिरक्षदेशक्षितिजवृत्तस्योन्मण्डलाख्यस्य तत्र योगयोः संलग्नत्वात् तन्मध्यसूत्रत्वेन पूर्वापरसूत्रस्यापि सत्त्वात् पूर्वापरसूत्रमुन्मण्डलसंज्ञम्। एतेनान्यदेशक्षितिजसंज्ञया स्वदेशक्षितिजसंज्ञा सुतरां सिद्धेति पूर्वापरसूत्रस्य क्षितिजवृत्तसंज्ञा द्योतिता। पूर्वापरस्थानयोः क्षितिजवृत्तस्य संलग्नत्वादुक्तस्थितवृत्तस्य क्षितिजानुकारित्वाच्च" रङ्ग०। "उद्गमादयोऽप्यत्र। परोऽथ वोदक्सगते रवौ द्युतिः" सि० शि०। प्रा०ब०। २अर्द्धमण्डले त्रि०।

**उन्मण्डलकर्ण** पु० सि०शि० उक्ते छायया दिनज्ञानार्थे उन्मण्डलस्थार्कस्य छायाकर्णे। तदानयनं तत्रैव यथा "द्युतायनांशार्कबृहद्भुजज्यया चरात्मतिथ्यभ्रभुवो" (१०१५ १०) हृताः परः। पलश्रुतिघ्नः पलभाविभाजितः परोऽथ वोदक्सगते रवौ श्रुतिः" सि०। "अर्कस्य सायनांशस्य बृहती भुजज्या साध्या। न लघुमण्डलज्यैवेयः। तया ज्यया पूर्णाग्नितिथिभूम्यग्रांशिनो (१०१५१०) भाज्याः। यल्लब्धमसौ पराख्यः। स परः पलकर्णेन गुण्यः पलभया भाज्यः। फलमुन्मण्डलगतस्यार्कस्य छायाकर्णो वा भवति" प्रमि०।

**उन्मण्डलशङ्कु** पु० सि०शि०उक्ते चरदलप्रदर्शनार्थे उन्मण्डलशङ्कौ। "अपादिवृत्तं कथिता च कोटिरुद्वृत्तना दोः श्रवणोऽपमज्या। उद्वृत्तना कोटिरथापमवृत्तं भुजस्तच्छ्रवणः क्षितिज्या। वृत्तं यदुक्तं समवृत्तवद्यत् तद्वृत्तस्थानाः कोटिकर्णौ। अपादिवृत्तं भुज एवमष्टौ क्षेत्राण्यमून्यवगमानि तावत्" सि०।"अत्र किल निरक्षदेशे यदेव विषुवन्मण्डलं तदेव सममण्डलम्। तथा क्षितिजादन्यदुन्मण्डलं नाम वलयं नास्ति। तत्र ध्रुवौ च क्षितिजासक्तौ। अथ निरक्षदेशाद्द्रष्टा यथा यथोत्तरतो गच्छति तथा तथोदग्ध्रुवमुन्नतं पश्यति। तथा यैर्भागैर्ध्रुव उन्नतस्तैरेव भागैरक्षांशैः खस्वस्तिकाद्दक्षिणतो विषुवन्मण्डलं नतं पश्यति। विषुवन्मण्डलस्य तिर्यक्स्थितत्वात् तदाश्रितान्यहोरात्रवृत्तानि स्वस्थाने तिरश्चीनानि भवन्ति। अतः साक्षे देशे खगोलवलयानां तिरश्चीनखगोलवलयानां च संपातात् त्र्यस्राणि क्षेत्राण्युत्पद्यन्ते। तान्यत्रोपयोगित्वात् कथ्यन्ते। अक्षभा नाम पलभा पलछाया सा भुजः। द्वादशाङ्गुलः शङ्कुः कोटिः। अक्षकर्णस्तत्र कर्णः" प्रमि० उद्वृत्तनाप्यत्र। एवमुन्मण्डलादिशङ्कुरप्यत्र।

**उन्मत्त** पु० उद्+मद–करणे क्त। १धूस्तूरे "त्रिलैरक्षार्कवर्णाभूदधित्योन्मत्तपिष्टुभिः" सुश्रु०। २मुचकुन्दवृक्षे च। कर्त्तरि क्त। ३उन्मादवति, ४पिशाचावेशवति च त्रि०। "बालमूढास्वतन्त्रार्त्तमत्तोन्मत्तापवर्ज्जितम्" नारदः। "उन्मत्तेन वातिकाद्युन्मादयुक्तेन" मिता०। "उन्मत्तानाञ्च या गाथा शिशूनां चेष्टितं च यत्। स्त्रियो यत्र प्रभाषन्ते नास्ति तत्र व्यतिक्रमः" म०त० मत्स्यपु०। ४उद्धते च उन्मत्तगङ्गम्। अतिशयेन मत्तः। ५अतिमत्ते "मदोन्मत्तस्य भूपस्य कुञ्जरस्य च गच्छतः" पञ्चतन्त्रम्।

**उन्मत्तक** पु० उन्मत्त इव कन्। १तापसभेदे। अवधूतशब्दे ४२८ पृष्ठे विवृतिः। स्वार्थे कन्। २उन्मत्तार्थे। "क्रोधोऽथ पतितस्त्वञ्ज पङ्क इवोन्मत्तको जडः" याज्ञवल्क्यः।

**उन्मत्तगङ्ग** अव्य० उन्मत्ता उद्धता गङ्गा यत्र संज्ञायाम् अन्यपदार्थत्वे अव्ययी०। देशभेदे। "उन्मत्तगङ्गं नाम देशः" सि०कौ०।

**उन्मत्तगीत** त्रि० उन्मत्तेन गीतम् "इत्यद्भुतेन कृतमिति" पा० स्त०। उन्मत्तेन गीते एवम् उन्मत्तप्रलपिताद्यपि उन्मत्तेन प्रलपिताद्यर्थे त्रि०।

**उन्मथन** न० उद्+मथ–भावे ल्युट्। १उन्मर्द्दने २हिंसने। "अन्योन्यसूतोन्मथनादभूताम्" रघुः "वायुर्मोन्मथनं चापि भ्रमच्च क्रमतस्तथा" सुश्रु०। सुश्रुतोक्ते ३यन्त्रकर्म्मभेदे च उन्मथनशब्दे ११८०पृ० दृश्यम्। कर्त्तरि ल्यु। ४उन्मर्द्दनकारके त्रि०। "विपक्षचित्तोन्मथना नखव्रणाः" किरा०

**उन्मथित** त्रि० उद्+मथ-क्त। उद्धृष्टे मर्द्दिते।

**उन्मद** पु० उद्गतो मदोऽस्मात् प्रा० ब० गतलोपः।

१उद्गतमदे। "उन्मादद्विगमदरमसरमसंवदनमदलमाद्यतमाले" अनादेव "उदीरयामासुरिवोन्मदानाम्" रघुः "अद्योपि-लोलोन्मदराजहंसे" रघुः। स्त्री०। २उद्गतमदसाधने "मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे" माघ।

**उन्मदन** त्रि० उद्गतो मदनोऽस्य प्रा०ब० भूतलोप०। उद्गतकामे। "तदाप्रभृत्युन्मदना बभूव" कुमा०।

**उन्मदिष्णु** त्रि० उद्+मद–ताच्छील्ये इष्णुच्। उन्मादशीले।

**उन्मनस्** त्रि० उद्भ्रान्तं मनोऽस्य। १उत्कण्ठायुक्ते, २अन्यमनस्के च। "पयोधरेणोरसि काचिदुन्मनाः" माघः। "उन्मनाः प्रथमजन्मचेष्टितान्यस्मरन्नपि बभूव राघवः" रघुः वा क्यप्। उन्मनस्कोऽप्यत्र। भृशा० अभूततद्भावे क्यङ् सलोपश्च उन्मनायते उन्मनायमानः "भवदुन्मनायितम्"। च्वि–अभूततद्भावे सलोपश्च उन्मनीकरोति उन्मनीभवति उन्मनीस्यात्"।

**उन्मनी** स्त्री उन्मनस्+ङीष्। योगिनामवस्थाभेदे। "उन्मन्यवस्थाधिगमाय विद्वन्नुपायमेकं तव निर्दिशामि। पश्यन्मुदासीनदृशा प्रपञ्चं सङ्कल्पमुन्मूलय सावधानः" आचार्य्यः।

**उन्मन्थ** पु० उद्+मन्थ–भावे घञ्। वधे २हिंसने ३उन्मर्दने च।

**उन्मन्थन** न० न० उद्+मन्थ–ल्युट्। ऊर्द्ध्वतो दण्डादिना विलोडने। करणे ल्युट्। तत्साधने २दण्डादौ।

**उन्मर्दन** न० उद्+मृद–ल्युट्। १उद्वर्त्तने सुश्रुतोक्ते वायुप्रसादनार्थे २व्यापारभेदे। वायौ इत्युपक्रम्य सुश्रु० "स्वङ्मांसाद्यक्रमिरां प्राप्ते कुर्य्याद्वायुनिपीडनम्। लेपोपनाहानिकर्म बन्धनोन्मर्द्दनानि च" मुखोपद्रवनिवारणार्थे सुश्रुतोक्ते ३व्यापारभेदे च "वमनोन्मर्दनस्वेदवस्त्वनस्यपयःक्रियाः"। करणे ल्युट्। ४उन्मर्द्दनसाधने द्रव्यादौ। "अथैतान्युपकल्पयीत समाप्ते भावे मणिं कुण्डले वस्त्रयुग्मं छत्रमुपानहौ च दण्डं स्रजमुन्मर्दनमनुलेपनमाञ्जनमुष्णीषमित्यात्मने चाचार्य्याय च" आ०गृ० ३,८, "उन्मर्दनमभिषेकेऽवर्णार्थके" काल्या०१६,४,८। "उन्मर्दनचन्दनादि" कर्क।

**उन्मा** स्त्री उद्+मा–क्व। ऊर्द्ध्वमाने। "यष्टव्यास्युन्मासि माद्दलोऽसि" यजु० १५,६५; "उन्मा" उन्मानं तुलादि वेददी०।

**उन्माथ** पु० उन्मथ्यतेऽनेन उद्+मथ–करणे घञ्। १आमिषदानेन मृगादिबन्धनार्थं निवेशिते कूटयन्त्रे (फाँद) इति ख्याते। भावे घञ्। २विलोडनोत्थापने, ३हिंसने च। तत्रयानत्व पाक्षाकोऽग्रत्याक्षे ह्यकेतनः। प्रयोजयति

योन्माथं निखननं गते रवौ" भा०शा० ११८ अ०।

**उन्माद** पु० उद्+मद–भावे घञ्। रोगभेदे स च सुश्रुते दर्शितो यथा "अथात उन्मादप्रतिषेधमध्यायं व्याख्यास्यामः॥ मदयन्त्युद्धता दोषा यस्मादुन्मार्गमाश्रिताः। मानसोऽयमतो व्याधिरुन्माद इति कीर्त्तितः॥ एकैकशः समस्तैश्च दोषैरत्यर्थमूर्च्छितैः। मानसेन च दुःखेन स पञ्चविध उच्यते॥ विषाद्भवति षष्ठश्च यथास्वन्तत्र भेषजम्। स चाप्रवृद्धस्तरुणो मदसंज्ञां बिभर्त्ति च॥ मोहोद्वेगौ स्वनः श्रोत्रे गात्राणामपकर्षणम्। अत्युत्साहोऽरुचिश्चान्ने स्वप्ने कलुषभोजनम्॥ वायुनोन्मथनञ्चापि भ्रमश्च क्रमतस्तथा। यस्य स्यादचिरेणैव स उन्मादोऽधिगच्छति॥ रूक्षच्छविः परुषवाक् धमनीततोऽथ स्वासाहरः कृशतनुः स्फुरितारुणाक्षिः। आस्फोटयन् पठति गायति नृत्यशीलो विक्रोशति भ्रमति चाप्यनिलप्रकोपात्॥ तृट्स्वेददाहबहुलो बहुभुग्विनिद्रश्छायाहिमानिलजलान्तविहारसेवी। तीक्ष्णो हि मान्यनिचयेऽपि स वह्निदृष्टो पित्ताद्धि वा नभसि पश्यति तारकाश्च॥ छर्द्यग्निसादसदनारुचिकाससयुक्तो योषिद्विविक्तरतिरल्पमतिप्रचारः। निद्रापरोऽल्पकथनोऽल्पभुगुष्णसेवी रात्रौ भृशं भवति चापि कफप्रकोपात्॥ सर्वात्मके त्रिभिरपि व्यतिमिश्रितानि रूपाणि वातकफपित्तकृतानि विद्यात्। सम्पूर्णलक्षणमसाध्यमुदाहरन्ति सर्वात्मकं कश्चिदपि प्रवदन्ति साध्यम्॥ चौरैर्नरेन्द्रपुरुषैररिभिस्तथान्यैर्वित्रासितस्य धनबान्धवसंक्षयाद्वा। गाढं क्षते मनसि च प्रियया रिरंसोर्जायेत चोत्कटतरो मनसो विकारः॥ चित्रं स जल्पति मनोऽनुगतं विसंज्ञो गायत्यथो हसति रोदिति चापि मूढः। रक्तेक्षणो हतबलेन्द्रियभाः सुदीनः श्यावाननो विषकृतेन भवेत् परासुः॥ तिग्मं विषमन्नं मसुकमत्वादासं विबोधयेत्"। एतद्व्याख्यानच्छलेन तत्तद्विभागादि चोक्तं भावप्रकाशे "तत्र उन्मादस्य निरुक्तिमाह। "मदयन्त्युद्धता इत्यादि" सुश्रुतवाक्यम् यस्मादुद्धताः प्रवृद्धा दोषा उन्मार्गमाश्रिताः मदयन्ति चित्तं विक्षिपन्त्यस्मिन्। अतोऽयमुन्माद इति कीर्त्तितः। स उन्मादः मानसो व्याधिः मनोवैकल्यकरणात्। तस्यैवावस्थाभेदेन कथनान्तरमाह। "स चाप्रवृद्धस्तरुणत्यादि" सुश्रु० "उन्मादस्य विप्रकृष्टनिदानमाह। "विरुद्धदुष्टाशुचिभोजनानि प्रधर्षणं देवगुरुद्विजानाम्। उन्मादहेतुर्भयहर्षपूर्वो मनोऽभिघातो विषमाश्च चेष्टाः"। दुष्टं भक्ष्यरुचेनादिदूषितम्। अशुचि रजस्वलादिस्पृष्टम्। प्रधर्षणमभिभवः।

विषमाश्च चेष्टाः बलवद्विग्रहादयः। सन्निकृष्टं निदानमाह । "एकैकशः इत्यादि" सुश्रु० तस्य सम्प्राप्तिमाह । "तैरल्पसत्त्वस्य मलाः प्रदुष्टा बुद्धेर्निवासं हृदयं प्रदूष्य। स्रोतांस्यधिष्ठाय मनोवहानि प्रमोहयन्त्याशु नरस्य चेतः" । अल्पसत्त्वस्य स्वल्पसत्त्वगुणस्य । मलाः वातादयः । बुद्धेर्निवासं हृदयं प्रदूष्येति । एतेनाश्रयस्य दुष्ट्या तदाश्रिताया बुद्धेरपि दुष्टिरुक्ता । मनोवहानि स्रोतांसि हृदयाश्रितानि दश एतानि विशेषतो बोद्धव्यानि । यतश्चरकेण सकलशरीरस्रोतांस्येव मनोऽभिधानत्वेनोक्तानि । प्रमोहयन्ति विकृतं कुर्वन्ति । उन्मादस्य सामान्यं रूपमाह । "धीविभ्रमः सत्त्वपरिप्लवश्च पर्याकुला दृष्टिरधीरता च । अबद्धवाक्त्वं हृदयञ्च शून्यं सामान्यमुन्मादगदस्य लिङ्गम्" । धीविभ्रमः शुक्तिकायां रजतज्ञानम् । सत्त्वपरिप्लवः सत्त्वं मनस्तस्य चाञ्चल्यम् । अबद्धवाक्त्वम् असम्बद्धभाषित्वम् । शून्यं स्मृतिशून्यम् । वातिकोन्मादस्य निदानपूर्विकां सम्प्राप्तिमाह । "रूक्षाल्पशीतान्नविरेकधातुक्षयोपवासैरनिलोऽतिवृद्धः । चिन्तादिदुष्टं हृदयं प्रदूष्य बुद्धिं स्मृतिं चाप्युपहन्ति शीघ्रम्" । प्रदूष्य प्रकर्षेण दूषयित्वा । तस्यैव रूपमाह । "अस्थानहासस्मितनृत्यगीतवागङ्गविक्षेपणरोदनानि । पारुष्यकार्श्यारुणवर्णताश्च जीर्णे बलञ्चानिलजस्य रूपम्" । अस्थाने अनवसरे हासादीनि रोदनान्तानि । जीर्णे आहारे । बलं व्याधेः । पैत्तिकस्य निदानपूर्विकां सम्प्राप्तिमाह । "अजीर्णकट्वम्लविदाह्यशीतैर्भोज्यैश्चितं पित्तमुदीर्णवेगम् । उन्मादमत्युग्रमनात्मकस्य हृदि स्थितं पूर्ववदाशु कुर्यात्" । हृदि स्थितं पित्तं चितं सञ्चितम् पुनः अजीर्णकट्वम्लविदाह्यशीतैर्भोज्यैरुदीर्णवेगं सत् उन्मादं कुर्यात् पूर्ववत् हृदयं प्रदूष्य इत्यर्थः । तस्य रूपमाह "। अमर्षसंरम्भविनग्नभावाः सन्तर्जनाभिद्रवणौष्ण्यरोषाः । प्रच्छायशीतान्नजलाभिलाषः पीताभता पित्तकृतस्य लिङ्गम्" । अमर्षोऽसहिष्णुता । संरम्भः आरभटी आडम्बर इति यावत् । सन्तर्जनं परत्रासनम् । अभिद्रवणं पलायनम् । औष्ण्यं गात्रे । रोषो दाहविशेषः । प्रच्छायेत्यादि छायायां, शीतयोरन्नजलयोरभिलाषः । श्लैष्मिकस्य निदानपूर्विकां संप्राप्तिमाह । "सम्पूरणैर्मन्दविचेष्टितस्य सोष्मा कफो मर्मणि संप्रवृद्धः । बुद्धिं स्मृतिं चाप्युपहन्ति चित्तं प्रमोहयन् सञ्जनयेद्विकारम्" । संपूरणैर्भोजनादिभिः । मन्दविचेष्टितस्य व्यायामरहितस्य । सोष्मा कफ इति कफोऽप्युन्मादं करिष्यन् पित्तं सहायमपेक्षते व्याधिस्वभावात् । मर्मणि अत्र मर्मशब्देन हृदयमुच्यते । विकारमुन्मादरूपम् । तस्य रूपमाह । "वाक्चेष्टितं मन्दमरोचकश्च नारीविविक्तप्रियता च निद्रा । छर्दिश्च लाला च बलञ्च भुक्ते नखादिशौक्ल्यञ्च कफात्मके स्यात्" । वाक्चेष्टितं मन्दं वचनमल्पम् । नारीविविक्तप्रियता नारीप्रियता विजनप्रियता च । भुक्ते सति बलं व्याधेः । सान्निपातिकस्य निदानपूर्वकं लक्षणमाह । "यः सन्निपातप्रभवोऽतिघोरः सर्वैः समस्तैः स तु हेतुभिः स्यात् । सर्वाणि रूपाणि बिभर्त्ति तादृग्विरुद्धभैषज्यविधिर्विवर्ज्यः" स सान्निपातिक उन्मादः । सन्निपातपदेनैव सर्वात्मकत्वं लब्धम् । पुनः सर्वैरिति वचनं तद्रजःतमःप्रापणार्थम् । तेन रजस्तमोभिर्मिलितैरित्यर्थः । तेन वातादयो रजस्तमोभिर्मनोदोषैर्मिलिताः समस्तैश्च निदानैः कुपिता उन्मादं जनयन्ति । सर्वैर्हेतुभिः समस्तैर्मिलितैः स्यात् । यतोऽन्योव्याधिः सर्वैर्हेतुभिर्मिलितैरेव भवतीति नियमो नास्ति । अयन्तु व्याधिस्वभावात् सर्वैर्हेतुभिर्मिलितैः स्यात् । तादृगुन्मादः विरुद्धभैषज्यविधिः विरुद्धभैषज्यविधिरिति कोऽर्थः । त्रिदोषजे प्रत्येकं वातादिप्रत्यनीका कार्य्या । सा च परस्परविरोधिनी त्रिदोषं हन्ति किञ्चिदेव द्रव्यमामलकादि तत्रात्यायौगिकम् । अतएव विवर्ज्यः न चिकित्स्य इत्यर्थः"। मनोदुःखजस्य विप्रकृष्टं निदानमाह ।"चौरैर्नरेन्द्रपुरुषैररिभिरित्यादि" सुश्रु० । अन्यैर्हिंस्रादिभिः । गाढमतिशयेन । क्षते अभिहते प्रियया प्राप्तुमशक्यया रिरंसोः पुरुषस्य विकारः उन्मादरूपः । तस्य रूपमाह ।"चित्रं प्रजल्पतीत्यादि"सुश्रु०चित्रमाश्चर्यम् । मनोऽनुगतं गोप्यमपि । विसंज्ञो विगतज्ञानः । अतीव मूढः अतीवज्ञानशून्यः । अत्र विकल्पो बोद्धव्यः । विषजस्य रूपमाह । "रक्तेक्षण इत्यादि" सुश्रु० परासुः मृतः । अरिष्टमाह । "अवाङ्मुखस्तून्मुखो वा क्षीणमांसबलो नरः । जागरूको ह्यसन्देहमुन्मादेन विनश्यति" । अथ देवादिकृतस्योन्मादस्य सामान्यं लक्षणमाह । "अमर्त्यवाग्विक्रमवीर्यचेष्टो ज्ञानादिविज्ञानबलादियुक्तः । प्रकोपकालो नियतश्च यस्य देवादिजन्मा स मनोविकारः"। अमर्त्यवाग्विक्रमवीर्यचेष्टः न मर्त्यस्येव मनुष्यस्येव वागादयो यस्य सः । विक्रमः पराक्रमः । वीर्यं शौर्यम् । ज्ञानादिविज्ञानबलादियुक्तः । ज्ञानं बुद्धिः । आदिपदेन तन्द्रेदा मेधाभिधारणादयो गृह्यन्ते । विज्ञानं शि-

त्यादिविषयकं ज्ञानम् । चेष्टा पाटवम् । आदिपदेनाभि-मानादि स्वह्यते । नियतः वक्ष्यमाणतिथ्यादिभिः । मनो-विकारः उन्मादः । तत्र देवाविष्टस्य लक्षणमाह । "स-न्तुष्टः शुचिरतिदिव्यमाल्यगन्धो निस्तन्द्रोऽवितथसंस्कृत-प्रभाषी । तेजस्वी स्थिरनयनो वरप्रदाता ब्रह्मण्यो भवति नरः स देवजुष्टः"। अतिदिव्यमाल्यगन्धः अतिशयो दिव्य-माल्यस्येव गन्धो यस्य सः । निस्तन्द्रः निद्रारहितः । अ-वितथं सत्यम् । ब्रह्मण्यः ब्राह्मणभक्तः। दैत्याविष्टमाह । "संस्वेदी द्विजगुरुदेवदोषवक्ता जिह्माक्षो विगतभयो विमार्गदृष्टिः । सन्तुष्टो भवति न चान्नपानजातैर्दुष्टात्मा भवति स देवशत्रुजुष्टः"; विमार्गदृष्टिः कुमार्गरतः । दुष्टा-त्मा दुष्टस्वभावः । गन्धर्वाविष्टमाह । "हृष्टात्मा पुलिन-वनान्तरोपसेवी स्वाचारः प्रियपरिगीतगन्धमाल्यः । नृ-त्यन् वै प्रहसति चारु चाल्पशब्दं गन्धर्वग्रहपरिपीडितो मनुष्यः" । हृष्टात्मा हृष्टजीवात्मा । पुलिनं तोयोत्थितं तटम् वनान्तरं वनमध्यम् तयोः सेवी । स्वाचारः अनिन्दिताचारः । प्रियाणि परि समन्ततोभावेन गीत गन्धमाल्यानि यस्य स तथा । चारु चाल्पशब्दमिति नृ-त्यनक्रियाया विशेषणम् । यक्षाविष्टमाह । "ताम्राक्षः प्रियतनुरक्तवस्त्रधारी गम्भीरो द्रुतगतिरल्पवाक् सहिष्णुः। तेजस्वी वदति च किं ददामि कस्मै यो यक्षग्रहपरिपी-डितो मनुष्यः" । पित्राविष्टमाह । "प्रेतानां स ददाति संस्तरेषु पिण्डान् शान्तात्मा जलमपि चापसव्यवस्त्रः । मांसेप्सुस्तिलगुडपायसाभिकामस्तद्भक्तो भवति पितृग्र-हाभिजुष्टः"। प्रेतानां मृतानां पितॄणाम्। ददाति ददा-ति । अपसव्यवस्त्रः दक्षिणस्कन्धस्थितोत्तरीयः । नागाविष्ट-माह । "यस्तूर्व्यां प्रसरति सर्पवत् कदाचित् सृक्किण्यौ स्वयमपि जिह्वयावलेढि । क्रोधालुर्गुडमधुदुग्धपायसेप्सुर्विज्ञेयः स खलु भुजङ्गमेन जुष्टः" । प्रसरति सर्पवत् उरसा चलति । सृक्किण्यौ ओष्ठप्रान्तौ । राक्षसाविष्टमाह ।"मां-सासृग्विविधसुराविकारलिप्सुर्निर्लज्जो भृशमतिनिष्ठुरोऽति-शूरः । क्रोधालुर्विपुलबलो निशाविहारी शौचद्विड् भवति स राक्षसैर्गृहीतः" । अतिनिष्ठुरोऽतिनिर्दयः ब्रह्मराक्षसाविष्टमाह । "देवविप्रगुरुद्वेषी वेदवेदाङ्ग-विच्छुचिः । आत्मपीडाकरोऽहिंस्रो ब्रह्मराक्षससेवितः । अहिंस्रः अहिंसाशीलः । पिशाचाविष्टमाह । "उद्धस्तः कृशपरुषो चिरप्रलापी दुर्गन्धो भृशमशुचिस्तथातिलोलः । बह्वाशी विजनवनान्तरोपसेवी व्याचेष्टन् भ्रमति रुदन्

पिशाचजुष्टः" । उद्धस्तः नग्नः । दिगम्बर इति विदेहवचनात् । ( सु०सुश्रु० उद्धस्त इति पाठः ) कृशो निर्मांसः । परुषो रूक्षः । अतिलोलः सर्व-स्मिन् अन्नपाने लोलुपः । व्याचेष्टन् विरुद्धमाचेष्टन् । यद्वा हिंसाक्रीडापूजार्थं गृह्णन्ति । अतएवोक्तम् । "अशुचिं भिन्नमर्यादं क्षतं वा यदि वाऽक्षतम् । हिंस्युः हिंसाविहारार्थं सत्कारार्थमथापि वा । तत्र हिंसार्थं गृहीतस्य लक्षणमाह । "स्थूलाक्षो द्रुतमटनः सफेनवामी निद्रालुः पतति च कम्पते च योऽति । यश्चाद्रिद्विरद नगादिविच्युतः स्यात् सोऽसाध्यो भवति तथा त्रयोद-शेऽब्दे । यश्चाद्र्यादि यः पर्वतादिपतितः सन् ग्रहैर्गृ-ह्यत इत्यर्थः । आदिपदेन भित्तिप्रासादादयो गृह्यन्ते त्रयोदशेऽब्दे सर्व एव देवादिगृहीतोऽसाध्यः । देवादीना आवेशसमयमाह ।"देवग्रहाः पौर्णमास्यामसुरा सन्ध्ययो र्दिप्र । गन्धर्वाः प्रायशोऽष्टम्यां यक्षाश्च प्रतिपद्यपि । पितरः कृष्णपक्षे च पञ्चम्यामपि चोरगाः । रक्षःपिशा-चा रात्रौ च चतुर्दश्यां विशन्ति हि" । कृष्णपक्षे अमा-वास्याम् । प्रायशःपदादन्यत्रापि । तिथ्यभिधानप्रयोजनं लक्षणार्थं तत्र तिथौ बलिदानार्थञ्च । ननु यदि देवा-दयो विशन्ति तदा विशन्तस्ते दृश्यन्ते कथं नेत्यत आह । "दर्पणादीन् यथा छाया शीतोष्णं प्राणिनो यथा । स्व-मणिं भास्करार्चिश्च यथा देहञ्च देहधृक् । विशन्ति न च दृश्यन्ते ग्रहास्तद्वच्छरीरिणम्" । दर्पणादीत्यादि शब्देनाम्बुप्रभृति निर्मलद्रव्यं गृह्यते । छाया प्र-तिबिम्बम् । स्वमणिं सूर्यमणिम् । देहधृक् जीवात्मा" । भा०प्र० । एतानि च वाक्यानि सुश्रुतोत्तरतन्त्रस्थानि । तत्र हि "गुह्यानागतविज्ञानमनवस्था सहिष्णुता । क्रिया वाऽमानुषी यस्मिन् स ग्रहः परिकीर्त्यते" इति ग्रह-शब्दं परिभाष्य "असंख्येया ग्रहगणा ग्रहाधिपतयश्च ये । व्यज्यन्ते विविधाकाराभिद्यन्ते ते तथाष्टधा देवास्तथा शत्रुगणाश्च तेषां गन्धर्वयक्षाः पितरो भुजङ्गाः । रक्षांसि वा चापि पिशाचजातिरेषोऽष्टधा देवगणो ग्रहाख्यः" इति विभज्य "संतुष्टः शुचिरित्यादिना तल्लक्षणानां लक्षणान्याह । तानि भा०प्र०सङ्ग्रहकृतोदाहृत्य व्याख्यातानीति बोध्यम् । अन्ते च मनुजदेहादीनां न कश्चित् प्रवेशः किन्तु तत्परि-चारकाणामेव देवाद्याचरवतां प्रवेश इत्युक्तं यथा सुश्रु० उत्त०।"तस्मिंस्तीव्रार्चिर्दया च दानं व्रतानि धर्मो नियमश्च सत्यम् । गुणास्तथाष्टावपि तेषु नित्या व्यस्ताः समस्ताश्च

यथाप्रभावम् । न ते मनुष्यैः सह संविशन्ति न वा मनुष्यान् क्वचिदाविशन्ति । ये वा विशन्तीति वदन्ति मोहात्ते भूतविद्याविषयादपोह्याः । तेषां ग्रहाणां परिचारका ये कोटीसहस्रायुतपद्मसङ्ख्याः । असृग्वसामांसभुजः सुभीमा निशाविहाराश्च समाविशन्ति । निशाचराणां तेषां हि ये देवगणसंस्मृता । ते तु तत्सत्त्वसंसर्गाद्विज्ञेयास्तु तदङ्गनाः । देवग्रहा इति पुनः प्रोच्यन्ते शुचयश्च ये । देववच्च नमस्यन्ते प्रत्यर्थ्यन्ते च देववत् । स्वामिशीलक्रियाचाराः क्रमश्च सुरादिषु । नैव तेषां दुर्विहितस्तासां स प्रसरः स्मृतः । सत्यवादपदत्तेषु हरसिंस्तेषां गणैः कृता । हिंसाविहारा ये केचिद्दिव्यं भावमुपाश्रिताः । भूतानीति कृता संज्ञा तेषां संज्ञा प्रवक्तृभिः । ग्रहसंज्ञानि भूतानि यस्मादेत्यनया भिषक् । विद्यया भूतविद्यात्वमतएव निरुच्यते”।

अथोन्मादस्य सामान्यचिकित्सा

‘वातिके स्नेहपानं प्राक् विरेकः पित्तसम्भवे । कफजे वमनं कार्यं परे वस्त्यादिकक्रमः । यच्चोपदेक्ष्यते किञ्चिदपस्मारे चिकित्सितम् । उन्मादे तच्च कर्त्तव्यं सामान्याद्दोषदूष्ययोः । जलादिद्रुमशैलेभ्यो विषमेभ्यश्च तं सदा । रक्षेदुन्मादिनं यत्नात् सद्यः प्राणहरा हि ते । ते जलादयः’ । विशेषचिकित्सा भा०प्र०आदौ दृश्या । सचायं रोगः । महापातककर्म्मविपाकजः । “उन्मादस्त्वग्दोषो राजयक्ष्मेत्यादि” शु० त० नारदोक्तेः ‘चित्तसंमोह उन्मादः कामशोकभयादिभिः’ । सा०द० उक्ते २व्यभिचारिभावभेदे ।

**उन्मादक** पु० उद्+मद-णिच् ण्वुल् । —मा :नक्के धत्तूरादौ । [ उन्मादकारके त्रि० ।

**उन्मादन** पु०उद्+मद-णिच्-ल्यु । १कन्दर्पबाणभेदे त्रिका० ।

**उन्मादवत्** त्रि० उन्मादोऽस्त्यस्य मतुप् मस्य वः । उन्मादयुक्ते स्त्रियां ङीप् । [ न्मादिनं यत्नात्” सुश्रु० ।

**उन्मादिन्** त्रि० उद्+णिनि स्त्रियां ङीप् । उन्मत्ते “रक्षेदु-

**उन्मान** न०उद्+मा–भावे ल्युट् । ऊर्द्ध्वमाने तच्च प्रथितगुरुत्वेन पलादिमितपाषाणादिना तुलाधारफलके एकपार्श्वे स्थितेन अन्यपार्श्वस्थसुवर्णादेरुन्नमनादिना गुरुत्वविशेषज्ञापनव्यापारः (ओजनकरा) “ऊर्द्ध्वमानं किलोन्मानम्” वार्त्तिकोक्तेः २ऊर्द्ध्वतः प्रमाणे च । अभिजेयार्थे “प्रमाणे द्वयसज्दघ्नञ्मात्रचः” पा० “प्रथमश्च द्वितीयश्च ऊर्द्ध्वमाने मतौ मम” वार्त्तिकोक्तेः द्वयसच् दघ्नच् । ऊरुद्वयसः ऊरुदघ्नः “गजपतिद्वयसीरिति” माघः । सामान्यप्रमाणे तु मात्रजेव । ऊरुमात्रं प्रस्थमात्रम् । ४करणे ल्युट् । ५तुलादौ । ६द्रोणपरिमाणे पु० वैद्यकम् ।

**उन्मार्ग** त्रि०उत्क्रान्तः मार्गात् निरा०स० । मार्गातिक्रान्ते मार्गश्च पन्थाः रीतिश्च” “नाशयति च दिङ्मोहमिवोन्मार्गः” काद० । २विरुद्धपथे च “मदोन्मत्तस्य भूपस्य कुञ्जरस्य च गच्छतः । उन्मार्गं वाच्यतां यान्ति महामात्राः समीपगाः” पञ्चतन्त्रम् । उन्मादशब्दे उदा० ।

**उन्मिति** स्त्री० उद्+मद-क्तिन् । ऊर्द्ध्वमाने ।

**उन्मिष** त्रि०उद्+मिष–क । १प्रफुल्ले २किञ्चित्प्रकाशयुक्ते च

**उन्मिषित** त्रि० उद्+मिष-क्त । १प्रफुल्ले, विकसिते २किञ्चित् प्रकाशिते च ।“ व्यलोकयदुन्मिषितैस्तडिन्मयैः” कुमा० ।

**उन्मीलन** न०उद्+मील–ल्युट् । १विकाशे २चक्षुरादेः पुटविभेदे (ताकान) “ज्ञानाञ्जनशलाकाभिर्नेत्रोन्मीलनकारकः” भा०आ०८४अ० । “सन्मीलनं मीलनके तथैव” शि० शि० । भावे घञ् उन्मीलोऽप्यत्र पु० ।

**उन्मीलित** त्रि० उद्+मील–क्त । १विकसिते “ते चोन्मीलित मालतीसुरभयः प्रौढाः कदम्बानिलाः” सा०द० । २उद्घटिते च णिच्—कर्मणि क्त । ३प्रकाशिते “उन्मीलितं तूलिकयेव चित्रम्” कुमा० । ४भेदितसुदृढे नेत्रादौ “अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः” गुरुनतिमन्त्रः ।

**उन्मुक्त** त्रि० उद्+मुच–क्त । बन्धनरहिते

**उन्मुख** त्रि० उद्+ऊर्द्ध्वं मुखमस्य । १ऊर्द्ध्वास्ये २उद्युक्ते च । ‘उन्मुखः सर्वः’ दृष्टो मर्मज्ञता” रघु० । “तस्मिन् संयमिनामाद्ये जाते परिणयोन्मुखे” कुमा० । “विपुलतरोन्मुखलोचनावलम्बनम्” “दन्तालपन्नभिनवपयोदमुन्मुखाः” माघः । “असौ शरण्यः शरणोन्मुखानाम्” “या नीतपौरा स्वपदोन्मुखेन” । “मनोऽभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः” रघुः स्त्रियां ङीप् । “चूतयष्टिरिवाभ्यासे मधौ परभृतोन्मुखी” कुमा० “प्रतिपन्नापि कैकेय्या लक्ष्मीरिव गुणोन्मुखी” “पतिः प्रतीतः प्रसवोन्मुखीं प्रियाम्” “अद्रेः शृङ्गं हरति पवनः किंस्विदित्युन्मुखीभिः” “इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा” मेघ० ।

**उन्मुद्र** त्रि०उद्गता मुद्रा यस्मात् प्रा०ब० । १व्यक्तमुद्रे, २विकसिते च

**उन्मूल** नामधा०मूलत उत्पाटयति उद्+मूल–णिच् । उन्मूलयति ते “उन्मूलयन् महावृक्षान्” भा०व०१४६अ०

**उन्मूलन** न० उन्मूल+णिच्–ल्युट् । उत्पाटने उद्धृतमूलकरणे । “न पादपोन्मूलनशक्ति रंहः” रघु० ।

**उन्मूलित** त्रि० उन्मूलि—नामधा० क्त । उत्पाटिते "उन्मूलिता हलधरेण पदप्रघातैः" उद्भटः "दूरे फलानि हन्त भवता तन्मूलमुन्मूलितम्" उद्भटद्रू०"

**उन्मृजावमृजा** स्त्री उन्मृज अवमृज इत्युच्यते यस्यां क्रियायां मयू०स०। उन्मार्जनावमार्जनार्थनिर्देशक्रियायाम् ।

**उन्मृग्य** त्रि० उद्+मृग-क्यप् । "इक्षुमत्तोलमृग्य ग्ये । "इत्यनुमृग्या इव द्योराम" शत०ब्रा० १,४,१,२२, क्यप् । २अन्वितः मृग्येत्यर्थे अव्य० ।

**उन्मेय** त्रि० उद्+मा—यत् । १परिमेये "आचितः शकटोन्मेये" लिका० । २उन्मानमेये सुवर्णादौ च ।

**उन्मेष** पु० उद्+मिष-घञ् । १चक्षुरादेरुन्मीलने, किञ्चित्प्रकाशे च । "स्वकिरणपरिवेषोन्मेषशून्याः प्रदीपाः" रघुः । "दीर्घिकाकमलोन्मेषो यावन्मात्रेण साध्यते" कुमा० "विद्युदुन्मेषदृष्टिम्" मेघ० । भावे ल्युट् । उन्मेषणमप्यत्र न० "मन्मथोन्मेषणार्तिविस्तारणी योभैव कान्तिः" सा०द० ।

**उन्मोचन** न० उद्+मुच—ल्युट् । बन्धनात् उद्धृत्य विस्रंसणे । "उन्मोचनप्रमोचने उभे वाचौ वदामि" अ०५,३०,१,

**उप** अव्य०वप—क । १अधिकार्थे, २हीने, ३आसन्ने, ४सामीप्ये,५सादृश्ये, ६प्रतियत्ने सतो गुणान्तराधाने, ७व्याप्तौ, ८पूजायाम् ९शक्तौ, १०आरम्भे, ११दाने, १२दोषाख्याने, १३आचार्यकरणे १४अत्यये, १५निदर्शने च । गणरत्ने "उप सामीप्यसामर्थ्यव्याप्त्याचार्यकृतिक्षतिदोषदानक्रियावीप्सारम्भाध्ययनपूजनेषु" इति उपार्थानुक्त्वा क्रमेणोदाजहार तत्र सामीप्ये उपकूपम् । सामर्थ्ये उपकरोति । व्याप्तौ उपकीर्णम् । आचार्यकृतौ उपदिशति । क्षतौ उपरतः, दोषे उपघातः (इन्द्रियाणां स्वग्राह्यग्रहणासामर्थ्यम् दाने उपहरति । क्रियाभेदे उपचरति । वीप्सायां दैवं देवमुपचरति । आरम्भे उपक्रमते भोक्तुम् । अध्ययने उपाध्यायः । पूजने उपचरितः पिता पुत्रेण" इति । प्रतियत्ने (संस्कारे) "उपत्वा नेष्मे हविषमाहरेति" का०उ०सामीप्ये "उपोपविश्य प्राणान् संस्पृशन्" स०त०गो० । सादृश्ये उपदेवः उपधातुः । "उपोऽधिके च" पा० "१६आधिक्ये "उप च त्रयोदश मासः" शत०ब्रा० ६,२,२, अस्य हीनेऽधिक्ये च कर्मप्रवचनीयता तत्र हीनार्थयोगे तत्सम्बन्धिनि द्वितीया । उप हरिं सुराः—हरेर्हीना इत्यर्थः । अधिकार्थयोगे सप्तमी । उप परार्द्धे हरेर्गुणाः परार्द्धादधिका इत्यर्थः । सामीप्येऽव्ययीभावः उपकुम्भम् उपकूलम् । "उपसर्गाः क्रियायोगे" पा० क्रियायोगे उपसर्गता अन्यत्र गतिता ततः भवार्थे त्यकन् उपत्यका ।

**उपक** पु० उप+संज्ञायां कन् । ऋषिभेदे ततः नडा० फक् । औपकायनः तस्य अद्वन्द्वे द्वन्द्वे च बहुत्वे वा लुक् । अद्वन्द्वे औपकाः औपकायनाः । द्वन्द्वे उपकलमकाः औपकायनलामकायनाः । अनुकम्पितः उपेन्द्रदत्तादिः "प्राचामुपादेरडज्वुचौ" पा० वुच् "ठाजादावूर्ध्वं द्वितीयादचः" पा० इन्द्रदत्तलोपे । उपक २अनुकम्पिते उपेन्द्रदत्तके पु० । पक्षे अडच् उपडः । घात् ठच् घन् इलच् च । तत्र ठचि उपिकः घनि उपियः इलचि उपिलः । तत्रार्थे पु० अजादावित्युक्तेः कनि न लुक् । उपेन्द्रदत्तकः । एवमन्यस्यापि उपपूर्वकस्य संज्ञाशब्दस्य रूपं बोध्यम् । तेन तत्रापि उपकादिशब्दप्रवृत्तिः ।

**उपकण्ठ** त्रि०उपगतः कण्ठम् अत्या०स० । १निकटे, २कण्ठासन्ने च "तस्योपकण्ठे घननीलकण्ठः" कुमा० । "आकण्ठ चापं श्रवणोपकण्ठे" "उपकण्ठं महोदधेः" रघुः ३ग्रामान्ते ४अश्वानामास्कन्दितगतौ च न० । विभक्त्यर्थे सामीप्ये वा अव्ययी० ।५कण्ठ इत्यर्थे "रथाङ्गभर्त्तुरभिनववरस्य यस्याः पितेव प्रतिपादितायाः । प्रेमुर्णोपकण्ठं मुकुरकुभाजो रत्नावलीरम्बुविराजबन्धं" माघः । उपकण्ठम्—कण्ठे पक्षेऽन्तिके इत्यर्थः ६कण्ठसामीप्ये च अव्य०

**उपकनिष्ठका** स्त्री उपगता कनिष्ठिकाम् अत्या०स० । अनामाङ्गुलौ "अप्रच्छिन्नावनन्तर्गर्भौ प्रादेशमात्रौ कुशानामान्तर्यार्थे हात्वाङ्गुष्ठोपकानिष्ठिकाभ्याम्" आ० श्रौ० १,३,३ "अङ्गुष्ठोपकनिष्ठिकाभ्यामेकैकमस्यां संछादयन्" ४,५,४ ।

**उपकन्या** स्त्री उपगता कन्याम् अत्या० स० । कन्यासख्यादौ अस्य गौरा० पाठात् उपादिद्वयचुद्दत्वेऽपि नान्तोदात्तता ।

**उपकरण** न०उपक्रियतेऽनेन उप-कृ-ल्युट् । १प्रधानसाधकेऽङ्गे यथा भोजनादौ व्यञ्जनादि, शयने खट्वादि,स्नानेऽनुलेपनादि, पूजायां पुष्पादि यागे पश्वादि । "अश्वमेधस्य शुभं दद्यात् सर्वोपकरणान्वितम्" शु०त०नन्दिपु० । "अश्नावकाशान्न्यादकमन्नोपकरणव्ययाम्" या० स्मृ० । २नृपादीनां छत्रचामरादिपरिच्छदे च । उपगतः करणम् अत्या० स० । ३इन्द्रियानुगते त्रि० विभक्त्यर्थे सामीप्ये वाऽव्ययी० । ३करणे इत्यर्थे ४इन्द्रियसामीप्ये च अव्य० ।

**उपकर्ण** अव्य० विभक्त्यर्थे सामीप्ये वा अव्ययी० । १कर्णे इत्यर्थे २श्रोत्रसामीप्ये च । तत्र प्रायभवः ठञ् औपकर्णिकः तत्र प्रायभवे त्रि० "मःस्वामी मम कान्तासामोपकार्ण्यकबोधन०" भट्टिः ।

**उपकर्त्तृ** त्रि० उप-कृ-तृच स्त्रियां ङीप्। उपकारके आनुगुण्यकारके "उपकर्त्र्यारिणा सन्धिर्न मित्रेणापकारिणा" माघः। "हीनान्यनुपकर्त्तॄणि प्रवृद्धानि विकुर्वते" रघुः।

**उपकलाप** अव्य० विभक्त्यर्थे सामीप्ये वाऽव्ययी०। १कलापे इत्यर्थे २तत्सामीप्ये च ततो भवार्थे परिमुखा० ञ्य। औपकलाप्य तद्भवे त्रि०।

**उपकल्प** त्रि० उपगतः कल्पम् अत्या०स०। कल्पोपगते। गौरा० पाठात् ङीष्। इयं कल्पेऽपि मात्तोदात्तता।

**उपकल्पन** न० उप+क्लृप-णिच्-ल्युट्। १सम्पादने २आयोजने च 'वक्ष्यास्यत पर' सम्यगाहारस्योपकल्पनम्" सुश्रु० युच्। तत्रैव स्त्री। "एवं विज्ञाय मतिमान् भोजनस्योपकल्पनाम्" सुश्रु०।

**उपकादि** पु० द्वन्द्वेऽद्वन्द्वे च बहुत्वे गोत्रप्रत्ययलुगनिमित्ते पाणिन्युक्ते शब्दसमूहे। स च उपक लमक भ्रष्टक कपिष्ठल कृष्णाजिन कृष्णसुन्दर चूडारक आडारक गड्डक उदङ्क सुधायुक अबन्धक पिङ्गलक पिष्ट सुपिष्ट मयूरकर्ण खरीजङ्घ शलाथल पतञ्जल पदञ्जल कठेरणि कषीतक कायक्लेश निदाघ कलशीकण्ठ दामकण्ठ कृष्णपिङ्गल कर्णक पर्णक जटिलक बधिरक जन्तुक अनुलोम अनुपद प्रतिलोम अपजग्ध प्रतान अनभिहित कमक वटारक लेखाभ्र कमन्दक पिञ्जलक वर्णक मसूरकर्ण मदाघ कवन्तक कमन्तक कदामत्त।

**उपकार** पु० उप+कृ-भावे घञ्। प्रधानस्यानुगुण्यसंपादने, उपकृतौ "उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः" माघः। "कृतोपकारेव रतिर्बभूव" कुमा०। "उपकाराक्षमा स्यात कृतोऽय मम खेचरै" भा०व०१५०अ०। तस्योपकार्यारचितोपका(चा)रा' रघु०। उपकारश्च सहकारिभिः कारकस्य कार्योत्पादनार्थमानुगुण्यभेदः यथा दर्शादियागस्य प्रधानापूर्व्वसाधनेऽङ्गादीनां प्रयाजादीनां कल्लकापूर्व्वसाधनद्वारा तदानुगुण्यम्। स च बौद्धैः कल्पद्रुपताकपस्य बीजादेरङ्कुरजनस्य सम्पादनरूपातिशयाधानमुच्यते सर्व्व० दर्श०। "तथाहि सहकारिभिः सलिलपवनादिभिः पदार्थसार्थैराधीयमाने बीजस्यातिशये बीजमन्यादकमभ्युपेयम् अपरथा तदभावेऽप्यतिशयः प्रादुर्भवेत्। बीजस्यातिशयमादधानः सहकारिसापेक्षमेवादधत्ते अन्यथा सर्व्वदोपकारापत्तौ अङ्कुरस्यापि सदोदयः प्रसज्येत; तस्मादतिशयार्थमपेक्षमाणैः सहकारिभिरतिशयान्तरमाधेयं बीजे, तस्मिन्नप्युपकारे पूर्व्वन्यायेन सहकारिसापेक्षस्य बीजस्य जनकत्वे सहकारिसम्पाद्यबीजगतातिशयानवस्था प्रथमा व्यवस्थिता। अथोपकारः कार्य्यार्थमपेक्ष्यमाणोऽपि बीजादिनिरपेक्षं कार्यं जनयति तत्नापेक्षो वा। प्रथमे बीजादेरहेतुत्वमापतेत्। द्वितीये अपेक्ष्यमाणेन बीजादिना उपकारे अतिशय आधेय' एवं तत्र तत्रापीति बीजादिजन्यातिशयनिष्ठातिशयपरम्परापात इति द्वितीयानवस्था स्थिरा भवेत्। एवमपेक्ष्यमाणेनोपकारेण बीजादौ धर्म्मिण्युपकारान्तरमाधेयमित्युपकाराधेयबीजातिशयाश्रयातिशयपरम्परापातइति तृतीयानवस्था दुरवस्था स्यात्। अथ भावादभिन्नोऽतिशयः सहकारिभिराधीयत इत्यभ्युपगम्यते तर्हि प्राचीनो भावोऽनतिशयात्मा निवृत्तः अन्यश्चातिशयात्मा कुर्व्वद्रूपादिपदवेदनीयो जायत इति फलितम्।

**उपकारक** त्रि० उप+कृ-ण्वुल्। १उपकारकर्त्तरि। "आगन्तवोऽपि कदाचिदुपकारका दृश्यन्ते" हितो०। स्त्रीत्वे टापि अतइत्त्वे उपकारिका। सा च २नृपालये,३पटनिर्म्मिते गृहे च। ४कारणमात्रे त्रि०। "सर्गस्त्वगिन्द्रियग्राह्यत्वचः स्यादुपकारक" भाषा० विनि। उपकारिन् उपकारके त्रि०। "तदुपकारीणि शारीरकस्यादीनि" वेदा० सा०। "दातव्यमिति यद्दानं दीयतेऽनुपकारिणे" गीता "मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि" दक्षः। स्त्रियां ङीप्।

**उपकार्य्य** त्रि० उप+कृ-ण्यत्। १उपकार्य्ये यो्ये। २राजालये, ३पटनिर्म्मितराजसदने च स्त्री टाप्। "तस्योपकार्य्यारचितोपका(चा)रा" रघु। "तीरोपकार्य्यां गतमात्र एव" रघु "प्रतिविहितोपकार्य्यमार्य्यः" रघु राजभवने "रम्यां रघुप्रतिनिधिः स नवोपकार्य्याम्"। "उपकार्य्या राजसद्मन्युपचारचितेऽन्यवत्" इति विश्वोक्तेः ५उपचारव्याप्ते त्रि०।

**उपकिरण** न० उप+कॄ-ल्युट् नि० इत्वम्। १व्याप्तौ २समन्तात् विक्षेपे च "आस्तृकरोत्किरणं वा" कात्या० २५,१०,२४। समाख्यादौ अव्ययी०। ३किरणसामीप्यादौ अव्य०।

**उपकीचक** पु० उपगतः कीचकम् अत्या०स०। विराटनृपश्यालककीचकानुजे विराटसैन्यभेदे "समवेतेषु सर्व्वेषु तासूपकीचकाः। दृश्यतां यीम्रमसती यत्कृते कीचकोहृत"। ते च पञ्चाधिकशतमिताः कीचकस्यानापि प्रसिद्धा "एवं ते निहता राजन्! शतं पञ्च च कीचका। स च सेनापतिः पूर्वलिखितत् सूतसप्तशतम्' भा०वि०२२,२३अ०।

**उपकुञ्चि** स्त्री उप+कुञ्च-इ। कृष्णजीरके।

**उपकुञ्चिका** स्त्री उप+कुञ्च-ण्वुल् अतइत्त्वम्। १सूक्ष्मायां

(हुँते) २कृष्णजीरकायाञ्च । स्वार्थे कन् । ३कृष्णजीरके ।

**उपकुर्व्वाण** पु० उपकुरुते गुरोर्दक्षिणादानादिना उप+कृ-शानच् । समावर्त्तनयोग्ये स्वाध्यायग्रहणावधिकब्रह्मचर्य्यवति १ब्रह्मचारिणि “न पूर्व्वं गुरवे किञ्चिदुपकुर्व्वीत धर्म्मवित् । स्नास्यंस्तु गुरुणाऽऽज्ञप्तः शक्त्या गुर्व्वर्थमाहरेत्” मनुना स्नास्यतएव गुरूपकारविधानेन ततः पूर्व्वमुपाकारकर्त्तृत्वनिषेधेन चास्यैवोपकर्त्तृत्वात्तथात्वम् । ब्रह्मचारी हि द्विविधः नैष्ठिक उपकुर्व्वाणश्च । यो निरवधि मरणान्तम् उपनयनादूर्द्ध्वं गुरौ वसति स नैष्ठिकः । यस्तु स्वाध्यायग्रहणान्तं गुरौवसन् गुरुणानुज्ञातः गुरोरुपकारं कृत्वा स्नानगार्हस्थ्ये करोति स उपकुर्व्वाणः । ... मनुनोक्ता यथा “क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमासनम् । धान्यं शाकञ्च वासांसि गुरवे प्रीतिमावहेत्” । आश्व० गृ० ३,८,१,२ तु “अथैतान्युपकल्पयेत समावर्त्तमाने मणिं कुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रजमुन्मर्द्दनमनुलेपनमाञ्जनमुष्णीषमित्यात्मने चाचार्य्याय च” “यद्युभयोर्न विन्देताचार्य्यायैव” । एकादश द्रव्याण्युक्तानि एतच्चोपलक्षणं गुरोरभिलषितं दद्यादित्यत्रैव तात्पर्य्यम् अत एव या० स्मृ० “गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया” तद्वरदानमेवोक्तम् “गुरवे पूर्व्वोक्ताय वरमभिलषितं यथाशक्ति दत्त्वा स्नायात् तदशक्तौ तदनुज्ञयाऽदत्तवरोऽपि” मिता० । संज्ञायां कन् तत्रैव । “उपकुर्व्वाणकास्तु स्वाध्यायग्रहणार्थाः” छा० उ० भा० । ताच्छील्ये चानश् । २उपकारशीले त्रि० ।

**उपकुल्या** स्त्री उप+कुल–अघ्न्या० नि० । १पिप्पल्याम् (पिपुल) अम० “हरिद्रोपकुल्याविशालेत्यादि” सुश्रु० तत्पर्य्यायगुणादि भा० प्र० दर्शितं यथा
“पिप्पली मागधी कृष्णा वैदेही चपला कणा । उपकुल्योषणा शौण्डी कोला स्यात् तीक्ष्णतण्डुला । पिप्पली दीपनी वृष्या स्वादुपाका रसायनी । अनुष्णा कटुका स्निग्धा वातश्लेष्महरा लघुः । पित्तला रेचनी हन्ति श्वासकासोदरज्वरान् । कुष्ठप्रमेहगुल्मार्शःप्लीहशूलाममारुतान् । आर्द्रा कफप्रदा स्निग्धा शीतला मधुरा गुरुः । पित्तप्रशमनी सा तु शुष्का पित्तप्रकोपिनी । पिप्पली मधुसंयुक्ता मेदः कफविनाशिनी । श्वासकासज्वरहरी वृष्या मेधाग्निवर्द्धिनी । जीर्णज्वरेऽग्निमान्द्ये च शस्यते गुडपिप्पली । कासाजीर्णारुचिश्वासहृत्पाण्डुकृमिरोगनुत् । द्विगुणः पिप्पलीचूर्णाद्गुडोऽत्र भिषजां मते” ॥ उपगतः कुल्याम् अभिमुखः अत्या० स० । कुल्योपगते त्रि० । २सामीप्यादौ अव्ययी० । ३कुल्यासामीप्यादौ अव्य० ।

**उपकुश** पु० सुश्रुतोक्ते १मुखरोगभेदे । “मुखरोगाः सप्तसु आयतनेषु” इत्युपक्रम्य ओष्ठादीनि सप्तायतनानि उक्त्वा “दन्तमूलगतास्तु शीतादो दन्तपुप्पुटको दन्तवेष्टकः शौषिरो महाशौषिरः परिदर उपकुशोदन्तवैदर्भो वर्द्धनोऽधिमांसो नाद्यः पञ्चेति” दन्तमूलगतानुक्त्वा “वेष्टेषु दाहः पाकश्च तेभ्योदन्ताश्चलन्ति च । आघट्टिताः प्रस्रवन्ति शोणितं मन्दवेदनाः । आध्मायन्ते स्रुते रक्ते मुखं पूति च जायते । यस्मिन्नुपकुशः स स्यात् पित्तरक्तकृतागदः” । लक्षितः । “शाखोष्ठ्योभयतः कार्य्यं शिरश्चोपकुशे तथा” सुश्रु० । सामीप्यादौ अव्ययी० । ३कुश इत्यर्थे ३कुशसामीप्ये च अव्य० । उपगतः कुशम् अत्या० स० । ४कुशोपगते त्रि० ।

**उपकूप** त्रि० उपगतः कूपम् अत्या० स० । १कूपोपगते देशे सामीप्यादौ अव्ययी० । २कूपसामीप्ये ३कूप इत्यर्थे च अव्य० ।

**उपकूल** न० कूले कूलस्य समीपं वा अव्य० । १कूले इत्यर्थे । २तीरसामीप्ये च अव्य० । “उपकूलं स कालिन्द्याः पुरीं पौरुषभूषणः” रघुः ततो भवाद्यौ अण् “अव्ययीभावाच्चेति” पा० “परिमुखादिभ्य एवेति” वार्त्तिके नियमनान्न अञ् । औपकूलः तद्भवादौ त्रि० ।

**उपकृत** त्रि० उप+कृ–क्त । १कृतोपकारे यस्योपकारः कृतस्तस्मिन् । भावे क्त । २उपकारे न० “उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्” सा० द० । उपकृतमनेन इष्टा० इनि । उपकृतिन् येनोपकारः कृतस्तस्मिन् त्रि० स्त्रियां ङीप् ।

**उपकृष्ण** त्रि० उपगतः कृष्णम् अत्या० स० । १कृष्णोपगते उपाद्द्व्यच्कत्वेऽपि गौरा० पाठात् नान्तोदात्तता । सामीप्यादौ अव्ययी० । २कृष्णसामीप्यादौ अव्य० । [समर्थे च ।

**उपकॢप्त** त्रि० उप–कॢप–क्त । १नियते २विन्यस्ते ३उपभोगाय-

**उपकोसल** पु० कमलापत्ये ऋषिभेदे । “उपकोसलो ह कामलायनः सत्यकामे जाबाले ब्रह्मचर्य्यमुवास” छा० उ० “उपकोसलोनामतः कमलस्यापत्यं कामलायनः” भा० ।

**उपक्रम** पु० उप–क्रम–घञ् न वृद्धिः । १उपायज्ञानपूर्व्वकारम्भे, २प्रथमारम्भे “ज्योतिरुपक्रमास्तु तथाह्यधीयत एके” “समानाम्नायस्त्युपक्रमादवस्तत्वं चानुपोष्य” शा० सू० । “तत्र च प्रतिकुर्व्वन्ति यदि पश्यन्त्युपक्रमात्” भा० व० २१५ अ० । “उपक्रमोपसंहारौ—हेतु-

तात्पर्य्यनिर्णये" वेदान्तिमते तात्पर्य्यनिर्णायके २ हेतुभेदे तत्र उपक्रमोपसंहाराभ्यां द्वाभ्यामेव तात्पर्य्यं निर्णीयते नत्वेकैकेनेति बोध्यम्। करणे घञ्। ३सामाद्युपाये "सामादिभिरुपक्रमैः" मनुः। "उपक्रमैरस्खलितैश्चतुर्भिः" रघुः। कर्मणि घञ्। ४आरभ्यमाणे पु० तदादित्वविवक्षायाम् तदन्ततत्पुरुषस्य क्लीवता 'नन्दोपक्रमं द्रोणः' पा० भा० "रामोपक्रममाचख्यौ रक्षःपरिभवं नवम्" रघुः। करणे घञ्। ५चिकित्सायाम् सुश्रुते भूरिप्रयोगः।

**उपक्रमण** न० उप+क्रम–भावे ल्युट्। १आरम्भे करणे ल्युट्। २तत्साधने सुश्रुतोक्ते दीर्घायुष्यादिज्ञानपूर्व्वकचिकित्सायाम् ३भूमिकायां स्त्री ङीप्। स्वार्थे कन् अत इत्वम्। उपक्रमणिका। ग्रन्थप्रस्तावने मुखबन्धे।

**उपक्रमणीय** त्रि० उप+क्रम–अनीयर्। १आरम्भणीये। उपक्रमणे साधु–छ। २चिकित्साङ्गे दीर्घायुष्यादिज्ञानसाधने लक्षणभेदे। आतुरचिकित्सार्थं यथोपक्रमणं कर्त्तव्यं तद्वेदके ३ग्रन्थे च। तत्प्रकारादि सुश्रुते दर्शितं यथा। "अथात आतुरोपक्रमणीयमध्यायं व्याख्यास्यामः। आतुरमुपक्रममाणेन भिषजायुरेवादौ परीक्षेत। सत्यायुषि व्याध्यृत्वग्निवयोदेहबलसत्त्वसात्म्यप्रकृतिभेषजदेशान् परीक्षेत। तत्र महापाणिपादपार्श्वपृष्ठस्तनाग्रदशनवदनस्कन्धललाटं दीर्घाङ्गुलिपर्वोच्छ्वासप्रेक्षणबाहुं विस्तीर्णभ्रूस्तनान्तरोरस्कं ह्रस्वजङ्घामेढ्रग्रीवं गम्भीरसत्त्वस्वरनाभिमनुच्चैर्बद्धस्तनमुपचितमहारोमशकर्णं पश्चान्मस्तिष्कं स्नातानुलिप्तं मूर्द्धानुपूर्व्या विशुष्यमाणशरीरं पश्चाच्च विशुष्यमाणहृदयं पुरुषं जानीयाद्दीर्घायुः खल्वयमिति। तमेकान्तेनोपक्रमेत्। एभिर्लक्षणैर्विपरीतैरल्पायुर्मिश्रैर्मध्यमायुरिति। गूढसन्धिसिरास्नायुः संहताङ्गः स्थिरेन्द्रियः। उत्तरोत्तरसुक्षेत्रो यः स दीर्घायुरुच्यते। गर्भात् प्रभृत्यरोगो यः शनैः समुपचीयते। शरीरज्ञानविज्ञानैः स दीर्घायुः समासतः। मध्यमस्यायुषो ज्ञानमत ऊर्द्ध्वं निबोध मे। अधस्तादक्ष्णयोर्यस्य लेखाः स्युर्व्यक्तमायताः। द्वे वा तिस्रोऽधिका वापि पादौ कर्णौ च मांसलौ। नासाग्रमूर्द्ध्वञ्च भवेदूर्द्ध्वं लेखाश्च पृष्ठतः। यस्य स्युस्तस्य परममायुर्भवति सप्ततिः। जघन्यस्यायुषो ज्ञानमत ऊर्द्ध्वं निबोध मे। ह्रस्वानि यस्य पर्व्वाणि सुमहच्चापि मेहनम्। तथोरस्यवलीढानि न च स्यात् पृष्ठमायतम्। ऊर्द्ध्वञ्च श्रवणौ स्थानान्नासा चोच्चा शरीरिणः। हसतो जल्पतो वापि दन्तमांसं प्रदृश्यते। प्रेक्षते यश्च विभ्रान्तं स जीवेत्पञ्चविंशतिम्। अथ पुनरायुषो विज्ञानार्थमङ्गप्रत्यङ्गप्रमाणसारानुपदेक्ष्यामः। तत्राङ्गान्यन्तराधिसक्थिबाहुशिरांसि तदवयवाः प्रत्यङ्गानीति। तत्र स्वैरङ्गुलैः पादाङ्गुष्ठप्रदेशिन्यौ द्व्यङ्गुलायते। प्रदेशिन्यास्तु मध्यमाऽनामिका कनिष्ठिका यथोत्तरं पञ्चमभागहीना। चतुरङ्गुलायते पञ्चाङ्गुलविस्तृते प्रपदपादतले। पञ्चचतुरङ्गुलायतविस्तृता पार्ष्णिः। चतुर्दशाङ्गुलायतः पादः। चतुर्दशाङ्गुलपरिणाहानि पादगुल्फजङ्घाजानुमध्यानि। अष्टादशाङ्गुला जङ्घा जानूपरिष्टाद्द्वात्रिंशदङ्गुलमेवं पञ्चाशत्। जङ्घायामसमावूरू। द्व्यङ्गुलानि वृषणचिबुकदशननासापुटभागकर्णमूलनयनान्तराणि। चतुरङ्गुलानि मेहनवदनान्तरनासाकर्णललाटग्रीवोच्छ्रायदृष्ट्यन्तराणि। द्वादशाङ्गुलानि भगविस्तारमेहननाभिहृदयग्रीवास्तनान्तरमुखायाममणिबन्धप्रकोष्ठस्थौल्यानि। इन्द्रवस्तिपरिणाहांसपीठकूर्परान्तरायामः षोड़शाङ्गुलः। चतुर्विंशत्यङ्गुलो हस्तः। द्वात्रिंशदङ्गुलपरिमाणौ भुजौ। द्वात्रिंशदङ्गुलपरिणाहावूरू। मणिबन्धकूर्परान्तरं षोड़शाङ्गुलम्। तलं षट्चतुरङ्गुलायामविस्तारम्। अङ्गुष्ठमूलप्रदेशिनीश्रवणापाङ्गान्तरमध्यमाङ्गुल्यौ पञ्चाङ्गुले। अर्द्धपञ्चाङ्गुले प्रदेशिन्यनामिके। सार्द्धत्र्यङ्गुलौ कनिष्ठाङ्गुष्ठौ। चतुर्विंशतिविस्तारपरिणाहं मुखग्रीवम्। त्रिभागाङ्गुलिविस्तारा नासापुटमर्य्यादा। नयनत्रिभागपरिणाहा तारका। नवमस्तारकांशो दृष्टिः। केशान्तमस्तकान्तरमेकादशाङ्गुलम्। मस्तकादवटुकेशान्तो दशाङ्गुलः। कर्णावट्वन्तरं चतुर्दशाङ्गुलम्। पुरुषोरःप्रमाणविस्तीर्णा स्त्रीश्रोणिः। अष्टादशाङ्गुलविस्तीर्णमुरः। तत्प्रमाणा पुरुषस्य कटी। सविंशमङ्गुलशतं पुरुषायाम इति भवन्ति चात्र पञ्चविंशे ततो वर्षे पुमान् नारी तु षोडशे। समत्वागतवीर्य्यौ तौ जानीयात् कुशलो भिषक्। देहः स्वैरङ्गुलैरेव यथावदनुकीर्त्तितः। युक्तः प्रमाणेनानेन पुमान् वा यदि वाऽङ्गना। दीर्घमायुरवाप्नोति वित्तञ्च महदृच्छति। मध्यमं मध्यमैरायुर्वित्तं हीनैस्तथाऽवरम्। अथ सारान् वक्ष्यामि। स्मृतिभक्तिप्रज्ञाशौर्य्यशौचोपेतं कल्याणाभिनिवेशं सत्वसारं विद्यात्। स्निग्धं संहतश्वेतास्थिदन्तनखं बहुलकामप्रजं शुक्रेण। अकृशमुत्तमबलं स्निग्धगम्भीरस्वरं सौभाग्योपपन्नं महानेत्रञ्च मज्ज्ञा। महाशिरःस्कन्धं दृढदन्तहन्वस्थिनखमस्थिभिः। स्निग्धमूत्रस्वेदस्वरं बृहच्छरीरमायासासहिष्णुं मेदसा। अच्छिद्रगात्रं गूढास्थिसन्धिं मांसोप-

चितञ्च मांसेन। स्निग्धताम्रनखनयनतालुजिह्वौष्ठपाणिपादतलं रक्तेन। सुप्रसन्नमृदुत्वग्रोमाणं त्वक्सारं विद्यादित्येषां पूर्वं पूर्वं प्रधानमायुःसौभाग्ययोरपि। भवति चात्र सामान्यतोऽङ्गप्रत्यङ्गप्रमाणादथ सारतः। परीक्ष्यायुः सुनिपुणो भिषक् सिध्यति कर्मसु।

व्याधिविशेषास्तु प्रागभिहिताः सर्व एवैते त्रिविधाः साध्या याप्याः प्रत्याख्येयाश्च तत्रैतान् भूयस्त्रिधा परीक्षेत किमयमौपसर्गिकः प्राक्केवलोऽन्यलक्षण इति। तत्रौपसर्गिको यः पूर्वोत्पन्नं व्याधिं जघन्यकालजातो व्याधिरुपसृजति स तन्मूल एवोपद्रवसंज्ञः। प्राक्केवलो यः प्रागेवोत्पन्नो व्याधिरपूर्वरूपोऽनुपद्रवश्च। अन्यलक्षणो यो भविष्यद्व्याधिख्यापकः स पूर्वरूपसंज्ञः। तत्र सोपद्रवमन्योन्याविरोधेनोपक्रमेत बलवन्तमुपद्रवं वा प्राक्केवलं यथास्वं प्रतिकुर्वीत। अन्यलक्षणे त्वादिव्याधौ प्रयतेत। भवति चात्र। नास्ति रोगो विना दोषैर्यस्मात्तस्माद्विचक्षणः। अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत्।

प्रागभिहिता ऋतवः। शीते शीतप्रतीकारमुष्णे चोष्णनिवारणम्। कृत्वा कुर्य्यात् क्रियां प्राप्तां क्रियाकालं न हापयेत्। अप्राप्ते वा क्रियाकाले प्राप्ते वा न कृता क्रिया। क्रिया हीनाऽतिरिक्ता वा साध्येष्वपि न सिध्यति। या ह्युदीर्णं शमयति नान्यं व्याधिं करोति च। सा क्रिया न तु या व्याधिं हरत्यन्यमुदीरयेत्।

प्रागभिहितोऽग्निरन्नस्य पाचकः (त्वक्प्रश्ने) स चतुर्व्विधो भवति दोषानभिपन्न एको विक्रियामापन्नस्त्रिविधो भवति विषमो वातेन, तीक्ष्णः पित्तेन, मन्दः श्लेष्मणा, चतुर्थः समः सर्वसाम्यादिति तत्र यो यथाकालमन्नमुपयुक्तं सम्यक् पचति स समः, समैर्दोषैः। यः कदाचित्सम्यक्पचति कदाचिदाध्मानशूलोदावर्त्तातिसारजठरगौरवान्त्रकूजनप्रवाहणानि कृत्वा स विषमः। यः प्रभूतमप्युपयुक्तमन्नमाशु पचति स तीक्ष्णः, स एवाभिवर्द्धमानोऽत्यग्निरित्याभाष्यते स मुहुर्मुहुः प्रभूतमप्युपयुक्तमाशुतरं पचति पाकान्ते च गलताल्वोष्ठशोषदाहसन्तापान् जनयति। यः स्वल्पमप्युपयुक्तमुदरशिरोगौरवकासश्वासप्रसेकच्छर्दिगात्रसदनानि कृत्वा महता कालेन पचति स मन्दः। विषमो वातजान् रोगान् तीक्ष्णः पित्तनिमित्तजान्। करोत्यग्निस्तथा मन्दो विकारान् कफसम्भवान्। तत्र समे परिरक्षणं कुर्व्वीत विषमे स्निग्धाम्ललवणैः क्रियाविशेषैः प्रतिकुर्व्वीत तीक्ष्णे मधुरस्निग्धशीतैर्व्विरेकैश्च। एवमेवात्यग्नौ विशेषेण माहिषैश्च क्षीरदधिसर्पिर्भिर्मन्दे कटुतिक्तकषायैर्वमनैश्च। जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः। सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते। प्राणापानसमानैस्तु सर्वतः पवनैस्त्रिभिः। ध्मायते पाल्यते चापि स्वे स्वे स्थाने व्यवस्थितैः।

वयस्तु त्रिविधं बालं मध्यं वृद्धमिति। तत्रोनषोडशवर्षा बालास्तेऽपि त्रिविधाः क्षीरपाः क्षीरान्नादा अन्नादा इति तेषु संवत्सरपराः क्षीरपा द्विसंवत्सरपराः क्षीरान्नादाः परतोऽन्नादा इति। षोडशसप्तत्योरन्तरे मध्यं वयस्तस्य विकल्पो वृद्धिर्यौवनं संपूर्णता हानिरिति। तत्रा विंशतेर्वृद्धिराँत्रिंशतो यौवनमा चत्वारिंशतः सर्व्वधात्विन्द्रियबलवीर्य्यसम्पूर्णता। अत ऊर्द्धमीषत् परिहाणिर्य्यावत्सप्ततिरिति। सप्ततेरूर्द्ध्वं क्षीयमाणधात्विन्द्रियबलवीर्य्योत्साहमहन्यहनि वलीपलितखालित्यजुष्टं कासश्वासप्रभृतिभिरुपद्रवैरभिभूयमानं सर्व्वक्रियास्वसमर्थं जीर्णागारमिवाभिवृष्टमवसीदन्तं वृद्धमाचक्षते। तत्रोत्तरोत्तरासु वयोऽवस्थासूत्तरोत्तरा भेषजमात्राविशेषा भवन्त्यृते च परिहाणेस्तत्राद्यापेक्षया प्रतिकुर्वीत। भवन्ति चात्र। बाले विवर्द्धते श्लेष्मा मध्यमे पित्तमेव तु। भूयिष्ठं वर्द्धते वायुर्वृद्धे तद्वीक्ष्य योजयेत्। अग्निक्षारविरेकैस्तु बालवृद्धौ विवर्जयेत्। तत्साध्येषु विकारेषु मृद्वीं कुर्य्यात् क्रियां शनैः।

देहः स्थूलः कृशो मध्य इति प्रागुपदिष्टः। कर्शयेद् बृंहयेच्चापि सदा स्थूलकृशौ नरौ। रक्षणञ्चैव मध्यस्य कुर्व्वीत सततं भिषक्।

बलमभिहितगुणं दौर्ब्बल्यञ्च स्वभावदोषजरादिभिरवेक्षितव्यम्। यस्माद्बलवतः सर्व्वक्रियाप्रवृत्तिस्तस्माद्बलमेव प्रधानमधिकरणानाम्। केचित् कृशाः प्राणवन्तः स्थूलाश्चाल्पबला नराः। तस्मात् स्थिरत्वव्यायामैर्बलं वैद्यः प्रतर्कयेत्।

सत्त्वन्तु व्यसनाभ्युदयक्रियादिस्थानेष्वविक्लवकरम्। सत्त्ववान् सहते सर्व्वं संस्तभ्यात्मानमात्मना। राजसः स्तभ्यमानोऽन्यैः सहते नैव तामसः।

प्रकृतिं भेषजं चोपरिष्टाद्वक्ष्यामः (प्रकृतिं शारीरस्थाने, भेषजं तत्तत्प्रकरणे)।

सात्म्यानि तु देशकालजात्यृतुरोगव्यायामोदकदिवास्वप्नरसप्रभृतीनि प्रकृतिविरुद्धान्यपि यान्यबाधकराणि भवन्ति। यो रसः कल्पते यस्य सुखायैव निषेवितः। व्यायामजातमन्यद्वा तत् सात्म्यमिति निर्दिशेत्।

देशस्त्वानूपो जाङ्गलः साधारण इति। तत्र बहूदकनि-

महात्मानं गन्धर्वाप्सरसोत्तमम्। राजोपरिचरेत्येवं नाम तस्याथ विश्रुतम्। पुरोपवाहिनीं तस्य नदीं शुक्तिमतीं गिरिः। अरौत्सीच्चेतनायुक्तः कामात् कोलाहलः किल। गिरिं कोलाहलं तन्तु पदा वसुरताडयत्। निश्चक्राम ततस्तेन प्रहारविवरेण सा। तस्यां नद्यामजनयन्मिथुनं पर्वतः स्वयम्। तस्माद्विमोक्षणात् प्रीता नदी राज्ञे न्यवेदयत्। यः पुमानभवत्तत्र तं स राजर्षिसत्तमः। वसुर्वसुप्रदश्चक्रे सेनापतिमरिन्दमः। चकार पत्नीं कन्यान्तु तथा तां गिरिकां नृपः"। [ऊर्द्धभवे।

**उपरितन** त्रि० उपरि भवः ट्युल् तुट् च स्त्रियां ङीप्।

**उपरिमर्त्य** अव्य० वेदे वा० अव्ययी०। मर्त्यस्योपरीत्यर्थे "अधोदेवमुपरिमर्त्यं कृधि" ऋ० ८,१९,१२, "उपरि मर्त्त्य मर्त्त्यानामुपरि" इति भा०। लोके तु वा ईत०। मर्त्त्यापरीत्येव। अतएव "तदुपर्य्यपि वादरायणः" शा० सू०। "आत्मोपरिपातुकन्तु" नै० इत्यादौ वा षष्ठीसमासप्रयोगः।

**उपरिमेखल** पु० उपरि ऊर्द्ध्वा मेखला यस्य। गोत्रप्रवर्त्तके ऋषिभेदे तत्र गोत्रार्थे इञ् औपरिमेखलि तद्गोत्रे पुंस्त्री बहुषु तु अस्त्रियाम् यस्कादि० तस्य लुक्। उपरिमेखलाः

**उपरिबृहती** स्त्री वैदिके बृहतीच्छन्दोभेदे "चतुर्थं बृहती तृतीयो द्वादशकः। आद्यश्चेत् पुरस्ताद्बृहती द्वितीयश्चेन्न्यङ्कुसारिणी उपरिबृहती स्कन्धग्रीवा वा अन्त्यश्चेदुपरिष्टाद्बृहती" सर्वानुक्रमणिका० ५ अ०। एवमुपरिष्टाद्बृहतीत्यपि वैदिके बृहतीच्छन्दोभेदे।

**उपरिष्टात्** अव्य० ऊर्द्ध्व+नि० रिष्टातिल् उपादेशश्च। उपरिशब्दार्थे "उपरिष्टादाज्यस्याभिघारयति" शत० ब्रा० १,६,१,२१, "पुरुष उपरिष्टात् पशूनतितिष्ठति" १२,२,६,४, "तस्योपरिष्टाद् हंसस्य बलाका संन्यषीदत" भा० व० २०५ अ० "शिरसोपरिष्टादुभयतः कूर्चः" सुश्रु०।

**उपरिसद्** पु० उपरि सीदति सद—क्विप्। राजसूययज्ञे सोमनेत्रके दुवस्वन्नामके १देवभेदे। "सोमनेत्रेभ्यो देवेभ्य उपरिसद्भ्यो दुवस्वद्भ्यः स्वाहा" "ये देवा सोमनेत्रा उपरिसदो दुवस्वन्तस्तेभ्यः स्वाहा" यजु० ९,३५,३६। २ऊर्द्ध्वस्थे त्रि०

**उपरिसद्य** न० उपरि सद्यं सदनमुपवेशनम् सद—भावे बा० यत्। ऊर्द्ध्वोपवेशने अन्तरिक्षोपवेशने "उपरिसद्यं वा एष जयति योऽजयन्तरिक्षसद्याम्" शत० ब्रा० २,१,२२, उपरिसद्यम् अन्तरिक्षसद्यमाकाशे उपवेशनम्" भा०।

**उपरीतक** पु० "एकपादमूरौ कृत्वा द्वितीयं स्कन्धसंस्थितम्। नारीं कामयते कामी बन्धः स्यादुपरीतकः" रतिम० उक्ते शृङ्गारबन्धभेदे

**उपरुद्ध** त्रि० उप+रुध+क्त। १निरुद्धे २आवृते च "अलघुविलम्बिपयोधरोपरुद्धाः" माघः "उपरुद्धाः निरुद्धा आवृताश्च" मल्लि० ३प्रतिरुद्धे च। "वृत्तं हि राज्ञामुपरुद्धवृत्तम्" रघुः ४मृत्यादिविनयुक्ते च।

**उपरूपक** न० उपगतं रूपकं दृश्यकाव्यम् सादृश्येन अत्या० स०। नाटकभेदे तद्भेदाश्च अष्टादश यथाह सा० द० "नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम्। प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा। संलापकं श्रीगदितं शिल्पकञ्च विलासिका। दुर्मल्लिका प्रकरणी हल्लीशो भाणिकेति च। अष्टादश प्राहुरुपरूपकाणि मनीषिणः। विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्" तल्लक्षणानि तत्तच्छब्दे वक्ष्यन्ते

**उपरोध** पु० उप+रुध—घञ्। १आवरणे "शरत्प्रमृष्टाम्बुधरोपरोधम्" रघुः। २प्रतिबन्धे च "अन्येषामपि मैत्रोपजीविनां दृश्यपरोधं करोषि" भा० आ० ३अ०। "तपोधननिवासिनामुपरोधो मा भूत्" शकु० ३अनुरोधे च। भावे ल्युट् उपरोधनमप्युक्तार्थेषु न०।

**उपरोधक** न० उप+रुध—ण्वुल्। १वासगृहे शब्दरत्ना०। २उपरोधकर्त्तरि ३आवरके ४प्रतिबन्धके ५अनुरोधकर्त्तरि च त्रि० स्त्रियां टाप् अत इत्वम्।

**उपल** पु० उप+ला—आदाने क उपलीयते गिरिरनेन वा ली वा० ड, पल—गतौ अच् पलः आोः शिवस्य पलः बोधक इत्यपरे। १पाषाणे "रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णाम्" मेघ० "परिगृह्य शतघ्नीश्च सचक्राः सगुडोपलाः" भा० व० २८३अ० २वालुकायाम् "भिषगुपलप्रक्षिणी नना" ऋ० ९,११२,३। "उपलेषु वालुकासु प्रक्षिपन्ति" भा० ३रत्नमात्रे मेदि० "वलयार्पितासितमहोपलप्रभाः" "शुकाङ्गनीलोपलनिर्म्मितानाम्" "नीलोपलस्यूतविचित्रधातुः" माघः "मध्यमोपलनिभे लसदंशौ" किरा०। ४शर्करायां स्त्री। उपलाति वारि ला—दाने क वा रस्य लः। ५मेघे निरु०। लत्वाभावे उपरोऽपि मेघे

**उपलक्षक** त्रि० उप+लक्ष—ण्वुल्। १उद्भावके "मेधावी वाक्पटुः प्राज्ञः परचित्तोपलक्षकः। धीरो यथोक्तवादी च एष दूतो विधीयते" नीतिः उपादानलक्षणया स्वस्वेतरबोधके २शब्दे च यथा काकेभ्यो रक्ष्यतामन्नमित्यादौ काकशब्दः उपघातकत्वेन काकतदितरबोधकत्वात् उपलक्षकः।

**उपलक्षण** न० उपलक्ष्यते स्वं स्वेतरञ्चानेन उप+लक्ष—करणे

ल्युट्। स्वस्य स्वान्यस्य च अजहत्स्वार्थया लक्षणया बोधके शब्दे यथा काकेभ्योदधि रक्ष्यतामित्यत्र काकपदं स्वस्य स्वान्यस्य श्वादेश्च बोधकम्। तल्लक्षणञ्च स्वप्रतिपादकत्वे सति स्वेतरप्रतिपादकत्वम्। भवति चोक्तोदाहरणे उपघातकत्वेन क काकाकोभयवृत्तित्वं काकशब्दस्येति तथात्वम् ततश्च शक्यतावच्छेदकधर्मपरित्यागेन इतर धर्मरूपेण स्वस्वेतरबोधकं हि पदमुपलक्षणं भवति "स्वमपहृत्यं ब्राह्मणस्याप्युपलक्षणम्" सि॰कौ॰। उप+लक्ष–भावे ल्युट्। २तादृशज्ञाने। "क्षणमहत्यं नियोगोपलक्षणार्थम्" सि॰कौ॰। मृगभेदे राजनि॰।

**उपलधिप्रिय** पु॰ बालधिः प्रियोऽस्य पृषो॰। चमरनाम-

**उपलब्ध** त्रि॰ उप+लभ–क्त। १प्राप्ते, २ज्ञाते च। "आख्यायिकोपलब्धार्था" अमरः। क्तवतु। उपलब्धवत् प्राप्तरि ज्ञातरि च स्त्रियां ङीप् "उपलब्धवती दिवश्च्युतम्" रघुः।

**उपलब्धि** स्त्री उप+लभ–क्तिन्। १प्राप्तौ "इष्टा हि मे स्यात् स्वपदोपलब्धिः" रघु॰। २प्रत्यक्षादिज्ञाने च। "नाभाव उपलब्धेः" शा॰सू॰। योग्यानुपलब्धिः "अनपायिपदोपलब्धये" रघु।

**उपलब्धृ** त्रि॰ उप+लभ–तृच् स्त्रियां ङीप्। १प्राप्तरि २ज्ञातरि ज्ञानाश्रये ३आत्मनि पु॰। [पाषाणभेदे वृक्षे राजनि॰।

**उपलभेदिन्** पु॰ उपलं भिनत्ति भिद–णिनि ६त॰। पा-

**उपलभ्य** त्रि॰ उप+लभ–कर्म्मणि यत्। १प्राप्ये "आरम्भसिद्धौ समयोपलभ्यम्" रघु॰। २ज्ञेये च प्रशंसायां मुम् उपलम्भ्यः।

**उपलम्भ** पु॰ उप+लभ घञ् मुम् च। १लाभे, २ज्ञाने च। "कर्त्तृता तदुपलम्भतोऽभवत्" माघ॰। "ज्ञातौ सुतस्पर्शसुखोपलम्भात्" रघुः।

**उपलिङ्ग** न॰ उपमितं लिङ्गेन अशा॰स॰। लोकसिद्धसाधनभावेन लिङ्गेनानुमापकेन सदृशे अलौकिकसाधनभावके अरिष्टसूचके भूकम्पादौ उपद्रवे।

**उपलेप** पु॰ उप+लिप–घञ्। १गोमयादिना आलेपने "गात्रेषु सर्वेन्द्रियाणामुपलेपोऽवसादनमिति" सुश्रुतोक्ते २सर्वेन्द्रियावसादने च। "कासोपलेपस्वरभेदनिद्रातन्द्राप्रसादौगौरवविषोपसर्गाः" सादोपलेपबलकृत्" सुश्रु॰। भावे ल्युट् उपलेपन गोमयादिना आलेपने न॰ "मण्डलालेपनादिकं कर्म समाज्ञापयति" पञ्चत॰।

**उपवक्तृ** पु॰ उपवक्ति उपदिशति उपपश्यति वा उप+वच तृच्। यज्ञे कृताकृतावेक्षके ऋत्विग्भेदे १ब्रह्मणि २सदस्ये च "वेषि ह्यध्वरीयतामुपवक्ता जनानाम्" ऋ॰४,६,५, "उपवक्ताऽध्वर्युप्रभृतीनां सर्वेषां कर्मणामनुज्ञाता इत्थं प्रणयेत्यादिरूपस्य वाक्यस्य वक्ता सन् ब्रह्मासि, सर्वेषां कर्मणामवैकल्यार्थमुपद्रष्टा सदस्यो वासि" भा॰

**उपवङ्ग** पु॰ उपगतोवङ्गम् अत्या॰स॰। वङ्गदेशसमीपस्थे देशभेदे देशशब्दे विवृतिः। [वृक्षे राजनि॰

**उपवट** पु॰ उपमितो वटेन अशा॰स॰। वटवृक्षसदृशे प्रियासाल

**उपवन** न॰ उपमितं वनेन अशा॰स॰। वनतुल्ये कृत्रिमे आरोपितवृक्षसमूहे १उद्याने। "पाण्डुच्छायोपवनवृतयः केतकैः सूचिभिन्नैः" मेघ॰ "साकेतमालोपवना वृहन्ति," रघुः आरामशब्दे पृ॰ ८०१ विवृतिः वनस्य सामीप्यम् वने वा अव्ययी॰। २वनसामीप्ये ३वने इत्यर्थे च अव्य॰ "कुसुमयन् फलिनीरलिनीरवैर्मदविकाशिभिराहितहूहूतिः। उपवनं निरभर्त्सयत प्रियान्" माघः।

**उपवर्णन** न॰ उप+वर्ण–ल्युट्। सम्यक्कीर्त्तने स्वरूपलक्षणगुणादिभिः प्रतिपादने "अतिशयोपवर्णनं व्याख्यानम्" सुश्रु॰

**उपवर्त्तन** न॰ उपेत्य वर्त्तन्तेऽत्र उप+वृत–आधारे ल्युट्। जनपदे १विषये "तस्योपवर्त्तनेऽप्येको न श्रुतो गोत्रभित् क्वचित्" काशी॰ तदेकदेशे २सजलस्थले भरतः।

**उपवर्ष** पु॰ पाणिनिकात्यायनव्याडिप्रभृतीनामध्यापके ऋषिभेदे तत्कथा वृहत्कथायाम् द्रष्टव्या "वर्णा एव तु भगवानुपवर्षः" शा॰सू॰

**उपवर्ह** पु॰ उप+वृह–उद्यमने करणे घञ्। शिरोधाने (बालिश) हेम॰तत्र हि स्थापयित्वा शिर उद्यम्यते इति तस्य तथात्वम्। ल्युट्। उपवर्हणमप्यत्र न॰[राजनि॰।

**उपवल्लिका** स्त्री उप उत्कर्षे प्रादिस॰। अमृतस्रवलतायाम्

**उपवल्ह** पु॰ उप+वल्ह–प्राधान्ये घञ्। प्राधान्ये उत्कर्षे "तत् सर्वेषां भूतानां धारयतामेव धनमुपाहितं भवत्युपवल्हाय बिभ्यताम्" शत॰ब्रा॰१,४,२,१,

**उपवसथ** पु॰ उपेत्य वसन्त्यत्र उप+वस–आधारे अथ। १ग्रामे हेमच॰। "यद्याहिताग्निरुपवसथे म्रियते कथमस्य यज्ञः स्यात्" ऐत॰ "यजमानस्य समीपे वसन्ति देवा अस्मिन्निति आधारे अथ। २यागपूर्व्वदिवसे। तन्निर्वचनादिकं शत॰ ब्रा॰ १,११,१,७,२, दर्शितं यथा

"अथातोऽशनानशनस्यैव। तदुहाषाढः सावयसोऽनशनमेव व्रतं मेने मनो ह वै देवा मनुष्यस्याजानन्ति त एनमेतद्व्रतमुपयन्तं विदुः प्रातर्नो यक्ष्यत इति तेऽस्य विश्वे देवा गृहानागच्छन्ति तेऽस्य गृहेषूपवसन्ति स उपवसथः। तन्न्वेवानवक्लृप्तम्। यो मनुष्येष्वनश्नत्सु पूर्व्वो

श्नीयादथ किमु यो देवेष्वनश्नत्सु पूर्व्वोऽश्नीयात्तस्मादु नैवाश्नीयात् । तदु होवाच याज्ञवल्क्यः । यदि नाश्नाति पितृदेवत्यो भवति यद्यु अश्नाति देवानत्यश्नातीति स यदेवाशितमनशितं तदश्नीयादिति यस्य वै हविर्न गृह्णन्ति तदशितमनशितं स यदश्नाति तेनापितृदेवत्यो भवति यद्यु तदश्नाति यस्य हविर्न गृह्णन्ति तेनो देवान्नात्यश्नाति । स वा आरण्यमेवाश्नीयात्” “व्रतमसक्तादागतं तद्विसर्जनं समाप्य पूर्व्वेद्युर्यजमानेन व्रतानन्तरं यत् कर्त्तव्यं तद्वक्तव्यं प्रतिजानीते अथेति । यतो व्रतानन्तरमशनानशनापरनामकमारण्याद्यशनमेव यजमानेन कर्त्तव्यम् अतस्तदनन्तरमेव तस्य निरूपणं क्रियत इत्यर्थः । प्रतिज्ञा तस्याशनानशनपक्षस्य प्रशंसार्थम् । केवलानशनपक्षं निरसितुमुपन्यस्यति तदु हेति । तत्र किल्वशनाशननविषये अनशनं सर्व्वात्मना अशनत्यागम् । उपवसथनामनिर्व्वचनेन देवानामागमनं दर्शयति तेऽस्येति उपसमीपे यजमानस्य वसन्ति देवा अस्मिन्निति पूर्व्व दिवस उपवसथनामक इत्यर्थः । गृहे मनुष्येष्वागतेष्वनश्नत्सु पूर्व्वोऽश्नीयादिति यस्यासमवक्लृप्तिः किमु वक्तव्या ? अथाद्येन चेन्मुनिना निर्णीतोऽनशनपक्षः तर्हि स एव परमार्थः । कथमशनानशनपक्षः ? इति चेत् अनेन मुनिनैव स्वमतसमर्थनाय प्रत्येकपक्षौ दूषयित्वा याज्ञवल्क्येन सोपपत्तिना नोभयाविक्युक्तम् । यदीति अशनानशनलक्षणं यदीति । दैविके हि कर्म्मणि देवान् प्रत्युद्दिष्टस्यैव हविषः प्रथममनुपयोगः काममन्यस्य, पित्र्ये पुनरनियमात्पित्र्योऽन्यदपि अनुपयोज्यमिति पितृदैवत्यतामापादयतीति याज्ञवल्क्यस्याशयः । तत् किं दैविके कर्म्मणि प्रागपि भोक्तव्यमिति यत्नमाशयमजानानः पृच्छते तमाह यद्यु इति यदि तु अश्नाति तदा अपिशिषतो देवानतिक्रम्य स्वयं भुक्तवान् स्यात् । अशनानशनपक्षयोरुभयोरपि दोषश्चेत् का गतिरिति यद्द्रव्यमशितमप्यनशितवद्भवति तदश्नीयात् । यस्य द्रव्यस्य संबन्धि हविष्ट्वेन देवा न गृह्णन्ति तदशितमपि सदनशितवद्भवति । तथात्वे यथोदीरितदोषद्वयाभावमाह स यदिति । आरण्यपदार्थं प्राकृतदर्शपूर्णमासहविर्व्यतिरिक्तोपलक्षणम् भा० । तत्र विहितः ठञ् भावे अथ । वैदिके कर्मभेदे तच्च कर्म कात्या० ८,८,८, दर्शितम् । नवमाध्यायादौ “उक्तमौपवसथ्यं कर्म्मेति” कर्कः । [उपवासे अमरः ।

उपवस्त न० उप+वसु स्तम्भे उपष्टम्भादभोजने भावे क्त ।

उपवस्ति स्त्री उप+वसु—स्तम्भे भावे क्तिन् । उपष्टम्भे आलम्बने तेन जीवति वेतना० ठञ् । औपवस्तिक तदुपजीविनि त्रि० ।

उपवाक पु० उप+वच—घञ् कुत्वम् । उभेतर वचने परस्परालापे “नमस्वन्त इदुपवाकमीयुः” ऋ० १,१६४,८, “उपवाकमुपेतर वचन परस्परवचनम्” भा० । उपवाति उप+वा—भावे क्विप् तस्यै कं जलं यत्र । २यवे पु० “स क्तूनां रूपं बदरमुपवाकः करम्भस्य” यजु० १९०,२२, “सरस्वत्युपवाकैर्व्यानम्” १९,९०, “उपवाका यवाः” वेददी० “अथ नासिकयोर्लोमानि तान्युपवाकसक्तवश्च बदरसक्तवश्च श्रोत्रे एवास्येन्द्रौ ग्रहौ” शत०ब्रा० १२,९,१,५, अस्य यवैर्हि जलस्य शोषणात् तथात्वम् । ३इन्द्रयवे स्त्री ङीप् “बदरैरुपवाकीभिर्भेषजं तोक्मभिः” यजु० २१, ३०, तस्मिन् हितः यत् । उपवाक्य तत्साधने वस्त्री उप+वच—कर्म्मणि ण्यत् कुत्वम् । सम्भाषणीये “अयमग्निरभ्यस्य स्थविरा सनकात् प्रेज्ञा नमसोपवाक्यः” ऋ० १०,६९,१२, कत्वाभावे उपवाच्य स्तुते प्रशस्ये च “अद्दमिद्युो यथा विदे शीर्ष्णाशीर्ष्णोपवाच्यः” ऋ० २,१,१३२,

उपवाद पु० उप+वद—घञ् । अपवादे निन्दायाम् “पश्वपवादाश्च” कात्या० “पश्वपवादः पशुदाननिन्दा” कर्कः णिनि उपवादिन् । तत्कारिणि “तस्मान्नोपवादी स्यादुत ह्येवंवित्परो भवति” ऐत० “येऽस्याः कलहिनः पिशुना उपवादिनः” छा०उ० ।

उपवास पु० उप+वस—घञ् । भोजनाभावे भोजननिवृत्तौ स च वैधः अवैधश्चेति भेदात् द्विविधः । तत्र वैधस्य व्रतरूपत्वम् । तस्य संकल्परूपत्वं निरस्य एका०त० संकल्पजन्यत्वमुक्तम् यथा “दीर्घकालानुपालनीयः सङ्कल्पो व्रतमिति नारायणोपाध्यायानां स्वरसः । स्वकर्त्तव्यविषयो नियतः सङ्कल्पो व्रतमिति श्रीदत्तहरिनाथवर्द्धमानप्रभृतयः । सङ्कल्पस्य भावे मयैतत् कर्त्तव्यमेव, निषेधे न कर्त्तव्यमिति ज्ञानविशेषः अतएव सङ्कल्पः कर्म्म मानसमित्याभिधानिकाः । वस्तुतस्तु पूर्व्वोक्तवराहपुराणवचनेनैकादश्युपवासस्य व्रतत्वाभिधानात् “एकभक्तेन नक्तेन तथैवायाचितेन च । उपवासेन चैकेन पादकृच्छ्र उदाहृतः” इत्यादियाज्ञवल्क्याद्युक्तेषु एकभक्तनक्तायाचितभोजनोपवासादिषु पादकृच्छ्रादित्वाभिधानाच्च न सङ्कल्पो व्रतं किन्तु सङ्कल्पविषयतत्तत्कर्म्मैव व्रतमिति । व्रतानां सङ्कल्पसम्भवत्वमाह मनुः “सङ्कल्पमूलः

ऋग्वेदगतानां दशसङ्ख्याकानामुपनिषदां "वाङ् मे मनसीति" शान्तिः । १ईशावास्य २वृहदारण्यक ३जाबाल ४हंस ५परमहंस ६सुबाल ७मन्त्रिका ८निरालम्ब ९त्रिशिखी" १०ब्राह्मणमण्डल ११ब्राह्मणाद्वयतारक १२पैङ्गल १३भिक्षु १४।१५तुरीयातीताध्यात्म १६तारसार १७याज्ञवल्क्य १८शाट्यायनी १९मुक्तिकानां शुक्लयजुर्वेदगतानामेकोनविंशतिसङ्ख्याकानामुपनिषदां "पूर्णमदः" इति शान्तिः । १कठवल्ली २तैत्तिरीयक ३ब्रह्म ४कैवल्य ५श्वेताश्वतर ६गर्भ ७।८नारायणामृतविन्दु ९अमृतनाद १०कालाग्निरुद्र ११क्षुरिका १२सर्वसार १३शुकरहस्य १४तेजोविन्दु १५ध्यानविन्दु १६ब्रह्मविद्या १७योगतत्त्व १८दक्षिणामूर्त्ति १९स्कन्द २०शारीरका २१योगशिखा २२।२३एकाक्षराक्ष्य २४अवधूत २५कठरुद्र २६हृदय २७योगकुण्डलिनी २८पञ्चब्रह्म २९प्राणाग्निहोत्र ३०वराह ३१कलिसन्तरण ३२सरस्वतीरहस्यानां कृष्णयजुर्वेदगतानां द्वात्रिंशत्सङ्ख्यकानामुपनिषदां "सह नाववत्विति" शान्तिः । १केन २।३छान्दोग्यारुणि ४मैत्रायणी ५मैत्रेय ६वज्रसूचिक ७योगचूडामणि ८वासुदेव ९महत् १०संन्यासा ११व्यक्त १२कुण्डिका १३सावित्री ९४रुद्राक्ष १५जाबालदर्शन १६जाबालीनां सामवेदगतानां षोड़शसङ्ख्यकानामुपनिषदाम् "आप्यायन्त्विति" शान्तिः । १प्रश्न २मुण्डक ३माण्डूक्या४अथर्वशिरो५अथर्वशिखा ६वृहज्जाबाल ७नृसिंहतापनी ८नारदपरिव्राजक ९सीता १०शरभ ११महानारायण १२रामरहस्य १३रामतापनी १४शाण्डिल्य १५परमहंस १६परिव्राजका१७अन्नपूर्णा १७सूर्यात्म १८पाशुपत १९परब्रह्म २०त्रिपुरातपन २१देवी २२भावना २३भस्म २४जाबाल २५गणपति २६महावाक्य २७गोपालतपन २८कृष्ण २९हयग्रीव ३०दत्तात्रेय ३१गारुडानामथर्ववेदगतानामेकत्रिंशत्सङ्ख्याकानामुपनिषदां "भद्रं कर्णेभिरिति" शान्तिः" । पूर्वोत्तरवाक्ये नामभेदः नामान्तरपरतया समाधेयः । ३योगे च ।"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरम्" छा०उ० "उपनिषदा योगेन युक्तश्चेत्यर्थः" भा० "योगो देवतादिविषयमुपासनम्" आनन्दगि० ४धर्मे ५निर्जनस्थाने मेदि० ६समीपसदने त्रिका० । ७द्विजातिकर्त्तव्ये चत्वारिंशत्संस्कारमध्ये वेदव्रतभेदे तच्च व्रतं गोदानाख्यकेशान्तकर्म्मणः प्राक् कर्त्तव्यं यथाह आश्वलायनगृह्यकारिका "प्रथमं स्यान्महानाम्नी द्वितीयञ्च महाव्रतम् । तृतीयं स्यादुपनिषद्गोदानं च ततः परम्" ततश्च विप्रस्य जन्मतस्त्रयोदशे वर्षे महानाम्नीव्रतं, चतुर्द्दशे महाव्रतं, पञ्चदशे उपनिषद्व्रतं, षोडशे वर्षे गोदानम्, क्षत्रस्य ऊनविंशादिवर्षचतुष्के, वैश्यस्य एकविंशादिचतुष्के यथाक्रमं महानाम्न्यादिवेदव्रताख्यकर्म्मचतुष्टयं कर्त्तव्यम् । तत्र "चूड़ादिवच्चादिकमेव चाह्नम्" यथाह पी०धा० श्रीधरः । "तिथिनक्षत्रवाराश्च वर्गोदयनिरीक्षणम् । चौलवत् सर्वमाख्यातं सगोदानव्रतेषु च" यदा तु ईयादतीतकालानि महानाम्न्यादिव्रतानि स्युस्तदा समावर्त्तनेन सह कार्य्याणि "यद्वागार्भिक्रियासूक्तकालस्याप्यनन्तरागवत् । गौणकालत्वमिच्छन्तीत्याद्युक्तेः । उपनिषत्सु व्यज्यते अण् । औपनिषद वेदान्तमात्रवेद्ये परब्रह्मणि । "तन्त्वौपनिषदं पुरुषं वेद" छा०उ०। उपनिषदं वेत्ति अण् वेदान्ताभिज्ञे "शुद्धब्रह्मभाव इत्यौपनिषदा" कुसु० ।

**उपनिषादिन्** त्रि० उप+नि+सद्–णिनि स्त्रियां ङीप् । समीपे स्थायिनि "तद्विषयघस्तादुपनिषादिनीं करोति" शत० ब्रा० ६,४,१,६ ।

**उपनिष्कर** न० उप+निस्+कृ–करणे संज्ञायां च । स इति राजमार्गे अमरः। तत्र हि महतामपि सैन्यानामसंवादेन निष्क्रमणात्तथात्वम् । [अमरः ।

**उपनिष्क्रमण** न०उप+निस्-क्रम करणे ल्युट् । राजपथे ।

**उपनिहित** त्रि० उप+नि–धा–क्त ।१उपनिधित्वेन स्थापिते द्रव्ये उपनिधिशब्दे मिता० उदा० २स्थापिते च ।

**उपनीत** त्रि० उप+नी-क्त । १कृतोपनयनसंस्कारे "अथोपनीतं विधिवद्विपश्चित" रघु० । २ज्ञानलक्षणासन्निकर्षेण ज्ञाते च "उपनीतं विशेषणतयैव भासते मानसे तु नायं नियम" प्राचीनगाथा उपनयशब्दे दृश्या ३समीपे प्रापिते ४उपस्थापिते च ।

**उपनेतृ** पु० उप+नी–तृच् । १उपनयकर्त्तरि गुरौ २उपढौककर्त्तरि त्रि० स्त्रियां ङीप् । "नियमविधिजलानां बर्हिषां चोपनेत्री" कुमा० ।

**उपनेत्र** न०उपगतं नेत्रम् अत्या०स०। नेत्रसमीपे धार्य्ये काचादिनिर्म्मिते नेत्रतिमिरोपकारके द्रव्यभेदे ( चसमा )

**उपन्यास** पु० उप+नि+अस–घञ् । १वाक्योपक्रमे २वाक्यप्रयोगे उपचारच्छलशब्दे उदा० । "तस्माद्धर्मब्रह्मजिज्ञासोपन्याससुखेन" शारी०भा०। "मालविकायामयमुपन्यासः सङ्गच्छति" मालवि० । ३विचारे "शृणुष्वमुपन्यासं निबोधत" मनुः । "उपन्यासं विचारम्" कुल्लू० ।

त्वात् निवर्त्तकत्वमिति भेदः विस्तरस्तु तिथितत्त्वे दृश्यः। प्रागुक्त भवि० पु० वाक्यव्याख्यायाम् एका०त० रघु० "उपावृत्तस्य निवृत्तस्य पापेभ्यः पापकर्मभ्यः। सर्वेषा-मासु दोषेभ्य इति पठित्वा दोषेभ्योरागद्वेषमात्-सर्य्यादिनिषिद्धात्मधर्मेभ्य इत्यर्थमाहुः। गुणानाह गोत-मः। "दया सर्वभूतेषु क्षान्तिरनसूया शौचमनाया-सो मङ्गलमकार्पण्यमस्पृहा चेति"। दयादिलक्षणान्याह बृहस्पतिः। "परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा। आपन्नरक्षितव्यं हि दयैषा प्रकीर्त्तिता"। परे उदासीने। आपन्नदित्यत्र आपत्सु रक्षितव्यमिति कल्पतरौ पाठः। व्यासमाह दक्षः। "यथैवात्मा परस्तद्वद्द्रष्टव्यः सुखमि-च्छता। सुखदुःखानि तुल्यानि यथात्मनि तथा परे"। बृह-स्पतिः। "बाह्ये चाध्यात्मिके चैव दुःखे चोत्पादिते क्वचित्। न कुप्यति न वा हन्ति सा क्षमा परिकीर्त्तिता। न गुणान् गुणिनो हन्ति स्तौति मन्दगुणानपि। नान्यदोषेषु रमते साऽनसूया प्रकीर्त्तिता। अभक्ष्यपरिहारस्तु संसर्गश्चाप्य-निन्दितैः। स्वधर्मे च व्यवस्थानं शौचमेतत् प्रकीर्त्ति-तम्। शरीरं पीड्यते येन शुभेनापि कर्मणा। अत्यन्तं तन्न कुर्वीत अनायासः स उच्यते। प्रशस्ताचरणं नित्य-मप्रशस्तविवर्जनम्। एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वद-र्शिभिः। स्तोकादपि च दातव्यमदीनेनान्तरात्मना। अह-न्यहनि यत् किञ्चिदकार्पण्यं हि तत् स्मृतम्। यथोत्-पन्नेन सन्तोषः कर्त्तव्योऽप्यल्पवस्तुना। परस्याचिन्तयि-त्वार्थं साऽस्पृहा परिकीर्त्तिता"। देवीपुराणञ्च। "ब्र-ह्मार्च्चं तपः स्नानं तत्कथाश्रवणादिकम्। उपवास-कृतो ह्येते गुणाः प्रोक्ता मनीषिभिः।" सर्वभोगविवर्जितः गन्धमाल्यसुवस्त्रगीतादिसुखवर्जितः" अत्र दन्तधावने-ऽनिषिद्धमतत्त्वाद्य दूषितं तत्रैव। "अत्र प्रतिषिद्धाः इह शातातपोक्तविशेषात् प्रतिपद्यन्ते। "गन्धालङ्कारवस्त्राणि पुष्पमाल्यानुलेपनम्। उपवासे न दुष्येत दन्तधावनमञ्ज-नम्"। गौडीयस्मृतिः "उपवासे तथा श्राद्धे न खादेद्दन्त-धावनम्। दन्तानां काष्ठसंयोगो हन्त्यासप्तमं कुलम्" तत्र योगीश्वरः "तस्मात् सर्वप्रयत्नेन भक्षयेद्दन्तधावनम्" इत्यभि-धाय दन्तकाष्ठसंयोगं निषिध्य मन्त्रोदकादिना दन्तधावनमिति विरोधं परिजहारेति वदन्तो व्याचक्षुः तत्र शूद्रपा-तातपेन "सर्वे पर्वस्वपि नित्यं भक्षयन्तीनरः। तस्मात् सर्वप्रयत्नेन भक्षयेद्दन्तधावनम्" इत्यभिधाय तद्वचना-भिधानेन दन्तधावने दोषप्रोक्तः। अन्यथा पौनरुक्त्या-पत्तेः "अस्नानं दीर्घमन्त्रापि गन्धान् सुमनसस्तथा। पुराके चोपवासे च नित्यमेव विवर्जयेत्" इति हरिवंशात भिन्ना-चरायाम्। "गात्राभ्यङ्गं शिरोभ्यङ्गं ताम्बूलं चानुले-पनम्। व्रतस्थो वर्जयेत् सर्वं यच्चान्यद्बलरागकृत्" इत्य-नेनानुलेपनरागकृन्निषेधाच्च। अतएव प्रायश्चित्तविवेक-कृद्भिः कुङ्कुमसुपवासेन त्येतनेति"।

जीमूतवाहनेनापि उपवासे चेति पठित्वा चकारादल-ङ्कारादिरपीति व्याख्यातम्। तथाह्व्यासादि सर्वभोगसंत्र पदर्शकं तेन विलासार्थगन्धादिवर्ज्जनं काम्यम्। देव-लः "उपवासः प्रणश्येत दिवास्वापाच्च मैथुनात्। अत्य-म्बुपाने च नोपवासः प्रणश्यति" उपवासोऽपि नश्येतेति कल्पतरुपाठे अपिनाभ्यनुज्ञं समुच्चीयते इति विशेषः। अत्यैद्रूगतैः। अतये माषे सम्भाव्यमाने। मैथुने विशेषमाह देवलः। "उपवासे तथा यौनं हन्ति दृष्टकुलानि वै। स्त्रीणां संप्रेक्षणात् स्पर्शात्ताभिः सङ्क-थनादपि। ब्रह्मचर्य्यं विपद्येत न दारेष्वृतुसङ्गमात्" संप्रेक्षणात् संकथनादित्यत्र सरागत्वं संभाषणार्थः शाब्द-त्यात् स्पर्शोऽपि तथेति प्रायश्चित्तविवेकः। कात्याय-नोऽपि "रेतःसेकात्मकं भोगमत्तेऽप्यत्र त्रयः स्मृतः तथाह दक्षः। "स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्य-भाषणम्। सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च। एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः। अनुरागात् सततञ्च ब्रह्मचर्य्यविरोधकम्"।

अनुकल्पमप्रधानपक्षीयं यथोक्तम् अन्यान्यपि वर्ज्जानि काल्मा०उक्तानि यथा "कांस्यं मांसं मसूरांश्च चणकान् कोरदूषकान्। शाकं मधु परान्नञ्च त्यजेदुपवसन् स्त्रियम्" कूर्म्म पु०। "असकृज्जलपानञ्च दिवास्वापञ्च मैथुनम्। ताम्बूलचर्वणं मांसं वर्ज्जयेदुपवासरे" विष्णु-ध०। "पतितपाषण्डिनास्तिकसम्भाषणानृतालापाश्लीला-दिकमुपवासादिषु वर्ज्जयेत्" हारीतः। "शङ्करपीमान्त्य-जान् स्पृष्टि पतितं च रजस्वलाम्। न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे" कूर्म्म पु० "स्नानाञ्जनगन्धादिसेवनं परि-कीर्त्तितम्। अत्रस्थ वर्जयेत् सर्वं पाषाणाज्ञाभिकाञ्चनम्। गात्राभ्यङ्गं शिरोभ्यङ्गं ताम्बूलं चानुलेपनम्। व्रतस्थो-वर्ज्जयेत् सर्वं यच्चान्यन्न निराकृतम्" विष्णु र०। तन्त्र-कारस्तूपवासे "यानि कानि च पापानि ब्रह्महत्यादि-कानि च। अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे, इति भवि०पु०अन्नमात्रस्य निषेधेऽपि माषमसूरादिनिषेधोऽ-

देशमात्रो वा तत्करणप्रकारः "मूलादुपवेशं करोति" का० ४,१,१२, दर्शितः "प्रथमं तूष्णीं शाखामूलमरत्निप्रमाणा-धिकप्रमाणं छित्त्वा पृथक् कार्यं ततस्तस्मादुपवेशं क-रोति उपवेशश्चारत्निमात्रः प्रादेशमात्रो वा परायणोक्तः" कर्कः। स च हस्ताकृतिः "धृष्टिरसीत्युपवेशमादायाग्नेः पाश्च-इत्यङ्गारान् प्राचः करोति" कात्या० २,४,२६, व्या० "उप-वेशोऽङ्गारापोहनसाधनं हस्ताकृति काष्ठम्" कर्कोक्तेः "प्रता-पयितव्यति भजना वेदेनोपवेशेन वा" कात्या० २,५,२५,

**उपवैणव** न० उपवेणु—अण् उत्तरपदवृद्धिः। त्रिसन्ध्ये हेम०

**उपव्याख्यान** न० उप+वि+आ+ख्या—ल्युट्। फलमाहात्म्यो-पासनप्रकारादिकथने। "ओमित्युद्गायति तस्योपव्या-ख्यानम्" छा० उ० "तस्याक्षरस्योपव्याख्यानम् एवमुपास-नम्, एवं विभूति, एवं फलमित्यादिकथनम्" शा० भा०। "आदित्यो ब्रह्मेत्यादेशस्तस्योपव्याख्यानम्" "ओमित्ये-तदक्षरं सर्वं तस्योपव्याख्यानम्" इति च छा० उ०।

**उपव्याघ्र** पु० उपमितो व्याघ्रेण अवा० स०। १व्याघ्रतुल्ये क्षुद्रा-न्तके (चिताबाघ) चित्रकाख्ये पशुभेदे। सामीप्ये अव्ययी०। २व्याघ्रसमीपे अव्य०।

**उपव्युषस** अव्य० विगता उषाः व्युषाः प्रा० स० ततः विभक्त्यर्थे सामीप्ये वा अव्ययी० अच् समा०। विगतायामुष-सीत्यर्थे "उपव्युषं सपत्नीका दक्षिणा गच्छन्ति" कात्या० २१,३,११, "उषसि विगच्छन्त्याम्" कर्कः। २विगच्छन्त्या उषसः समीपे च।

**उपशम** पु० उप+शम—घञ् अवृद्धिः। १इन्द्रियाणां निग्रहे २तृष्णात्यागे, ३रोगोपद्रवशान्तौ च। "तेषां पैत्तिका-नां व्याधीनामुपशमो हेमन्ते, श्लैष्मिकाणां, निदाघे वाति-कानां घनात्यये स्वभावत एव त एते सञ्चयप्रकोपोप-शमाः" "तस्मादुपेत्य शनोलुष: प्रवृत्तस्योपशमार्थम्" इति च सुश्रु०। ४निवृत्तौ "जगत्युपशमं याते नष्टप्रायेऽ-वधारुचे" भा० व० २० अ०।

**उपशमन** न० उप+शम—भावे ल्युट्। उपशमार्थे "व्याधीना-मुपशमनार्थम्" सुश्रु०। उप+शम—णिच्—ल्युट्। अवृ-द्धिः २निवारणे। तस्मै हितम् छ। उपशमनीय रोग-शान्तिहेतौ आयुर्वेदे। कर्मणि अनीयर्। निवारणीये। "कटुकौषधिशमनीयस्य" वा० द०।

**उपशय** पु० उप+शी—अच्। १समीपशयने। "हेतुव्याधिविप-रीतविपर्यस्तार्थकारिणाम्। औषधान्नविहाराणा-मुपयोगं सुखावहम्। विद्यादुपशयं व्याधेः स हि सात्म्य-मिति स्मृतः" इति निदानोक्ते व्याधिहेतुविपरीतौषधा-दितः २हस्तावहोरयोगे। शयः हस्तः तस्मिन् तत्सामीप्ये वा अव्ययी०। ३हस्ते इत्यर्थे ४हस्तसमीपे च अव्य०।

**उपशरद्** अव्य० विभक्त्यर्थे सामीप्ये वा अव्ययी० अच् समा०। १शरदि इत्यर्थे २शरत्समीपे च

**उपशल्य** न० उपगतं शल्यम् अस्थिस्थानं (भागाड़) अत्या० स०। ग्रामान्ते "ग्रामस्य विधासोपशल्ये कमध्याक्रीडमाशाद्य" दशकुमा०। "उपशल्यनिविष्टैस्तैः" "अथोपशल्ये रिपुमग्नशल्यः" रघुः। उपचारात् २प्रान्तभागे च। "शै-लोपशल्यनिपतद्रथनेमिधारा" इति माघः।

**उपशान्ति** स्त्री उप+शम—क्तिन्। निवृत्तौ उपशमे। "वश-मार्त्तभयोपशान्तये" रघुः "वेदनोपशान्तिरसृक्प्रसादो-मार्दवञ्च" सुश्रु०। ["निशोपशायः कर्त्तव्यः" भट्टिः।

**उपशाय** पु० उप+शी—घञ्। यामिकभटानां पर्यायेण शयने।

**उपशायिन्** त्रि० उप+शी—णिनि। समीपशयनशीले "ब्र-ह्मचार्यग्निनित्यधारी औरहोऽग्निमुपशायी द्वादशरात्रं सङ्गान्त निरामन्त्रतः" कात्या० ४,१०,१६, "अग्निमुपशायी अग्निसमीप एव भूमिशयः" कर्कः। शीलार्थत्वात् नात्र कर्मणि षष्ठी। "आहूताध्यायी गुरुकर्मस्वचोद्यः पूर्वोत्थायी चरमं चोपशायी। मृदुर्दान्तो धृतिमानप्रमत्तः स्वाध्यायशील: सिध्यति ब्रह्मचारी" भा० आ० ८१ अ०।

**उपशिक्षा** स्त्री उप+शिक्ष—अ। अभ्यासविषये "उपशिक्षाया अभिप्रश्निनम्" यजु० ३०,१०, ल्युट्। उपशिक्षण तत्रार्थे न०।

**उपशिङ्घन** न० उप+शिघि—आघ्राणे ल्युट्। १आघ्राणे। णिच्-ल्युट्। २आघ्रापणव्यापारे च। (शोकान) "तीक्ष्णा-ग्रनावपीडाभ्यां तीक्ष्णगन्धोपशिङ्घनैः। वर्त्तिप्रयोगैरथ वा धमनाङ्गं प्रवर्त्तयेत्" सुश्रु०। तत्र शिङ्घनैः शिंहनैरिति वा पाठः प्रामादिकः गणपाठे शिघिधातोरेव पाठात् शिंघिधातोर्दन्त्यशिंहधातोश्चाभावाच्च।

**उपशिष्य** पु० उपगतः शिष्यम् अत्या० स०। शिष्यशिष्ये "स्वतःप्रमाणं परतःप्रमाणं शुकाङ्गना यत्र गिरो गिरन्ति। शिष्योपशिष्यैरुपगीयमानमवेहि तन्मण्डनमिश्रधाम" शङ्क०

**उपशुन** अव्य० शुनि, तस्य समीपे वा अव्ययी० अच् समा०। १कुक्कुर इत्यर्थे २कुक्कुरस्य सामीप्ये वा।

**उपशोभ** स्त्री उपगता शोभां सादृश्येन अत्या० स०। आरो-पितशोभायाम् "विहितोपशोभमुपयाति माधवे" माघः।

**उपशोषण** न० उप+शुष-णिच्—ल्युट्। १शोषणसाधने व्या-पारे। उपशोषयति कर्त्तरि ल्यु। २तत्कारके त्रि०

( कटुकः ) "विरस तक्रे द्रमेदोरसापथ्योपयोपयसेति" ( कषायः ) 'क्रेदोपयोपयसेति सुश्रु० । योषयस्त्वान्:-स्थितजलादेर्वातोष्मादिना नाशनम् ।

**उपश्रुत्** पु० श्रूयते श्रु+सम्प० क्विप् श्रुत् स्तुति उपगता श्रुत् यस्य यत्र । यत्र "आ नो यातमुपश्रुत्यश्विना ऋ० ८, ८, ५. 'उपश्रुति यत्र'' भा०

**उपश्रुति** स्त्री उप+श्रु–क्तिन् । १समीपश्रवणे "सुश्रुतिश्च मोपश्रुतिश्च मा हासिष्टाम्" अथ० १६.२,५. "सोमपा गिरामुपश्रुतिः" ऋ० १.१०,३. "उपश्रुतिः समीपे श्रवणम्" भा० श्रुतिः श्रवणम् समम्पे अव्ययो० । २श्रवणसमीपे "आ नो याह्युपश्रुत्युक्थेषु" ऋ० ८.३४,११. उपश्रुति श्रवणसमीपमायाहि" भा० "नक्तं निर्गत्य यत्किञ्चित् शुभाशुभकरं वचः । श्रूयते तद्विदुर्धीरा दैवप्रश्नमुपश्रुतिम्" इत्युक्तलक्षणे ३दैवं प्रति कृतशुभाशुभप्रश्नस्य तदाविष्टबालादिभिरुदाहृतोत्तरवाक्ये च "परिजनोऽपि बालाः सततमुपश्रुत्यै निर्जगाम" काद० । उपश्रुतिश्रवणप्रकारश्च विधानपा० यत्नकाण्डे दर्शितो यथा "उपश्रुतौ विधानं तु यथा कार्यं फलार्थिना । स्नात्वा यत्नकर्मान्ते सा पौरमुखजाः । अन्त्यजानां गृहे वाक्यं पूर्वरात्रे यदुच्यते । स्त्रिया वा बालकैर्वापि तथा मुग्धैः परस्परम् । विचार्य तद्वचनमादिष्टव्यं फलं बुधैः । निर्णेजकालये पश्येत् प्रतिपद्येव बुद्धिमान् । मद्यकृतसदने पश्येत् द्वितीयायां न संशयः । तैलविक्रयिणो गेहे पुष्कलस्य तथालये । शौण्डकसदने चैव किंशुकानां गृहे तथा । मद्यकारिगृहे चैव तथा वैश्यगृहेऽपि च । योगिजातिकुले पश्येत् तथा पौष्कलगेहके । सिन्दोलकगृहे पश्येत् कुम्भकारगृहे तथा । सर्वकारालये चैव बाणाविक्रयिजन्मनोः । तृतीयादितिथौ ज्ञेया क्रमेणोपश्रुतिर्भवेत् । अमायां शूद्रजातीनां गृहे पश्येदुपश्रुतिम्" । पश्येत् शुभाशुभमालोचयेत् । तत्र क्रमश्च । "उपास्य पश्चिमां सन्ध्यां चरवालाञ्छितं सुधीः । स्त्रितराव्य हिजान् गच्छेद् बहुपम्मिर्मदान्वितः । चन्द्रेणाहुविप्राङ्गः श्वेतमाल्यधरः शुचिः । श्वेतवस्त्रसमावृतो हतशेषविभूषणः । जतमानञ्जो भूत्वा मन्त्रेणानेन मन्त्रताम् । ओं ऐँ ह्रौँ श्रौँ महादेवि ! महादेवस्य वल्लभे ! । विमोहय जनान् सर्वान् जनान् वशगान् कुरु । वस्त्रेण वहनेन: सञ्जीवतेऽथवा तदूनदम् । अङ्गोपरि परिक्षिप्य मुक्तनेत्र: श्रुतिर्भवेत्" । "तदूनदे मङ्गलमन्यदान् यदि शृणुयात् । तच्छुभमशुभं वा विचार्यारे-

ह्यवम् । तेन परदेषु वसराम्बर्जयित्वान्यपतन्द्रादिदर्श्याः ज्ञेयाः । प्रयाहि तद्धाम गच्छ भवति अथार्जनार्थं दारार्थे वाभार्थो: सायपत्याः प्रयान्ताः तत्स्पिकाकार्थे दृष्टाः न याहि न गच्छ नास्ति भवत्यर्थो अयानस्थाय गमने दृष्टाः तच्छ्रवान् सस्वन् यात्रां निवर्तयेत् । अत्यल्कटकार्ये तु हिराचस्य जलदेवतां संस्मृत्य मङ्गलं निरत् गच्छेत् । वैन्यं पृथुं हैहयमित्यादि पठन् पुनरपि निविघ्नप्रयाणे त् जुतादिभिस्तदा सिद्धिविनायकमतोपयाचित संस्मृत्य गच्छेत् । तत्रापि निविघ्नश्चेत् गच्छेदेव" वि०पा० ।

**उपश्लेष** पु० उप ईषदर्थे एकदेशेन श्लेषः संबन्धः । आधाराधेययोरेकदेशसंबन्धे । यथा कटघटयोः । उपश्लेषे साधु ठक् । औपश्लेषिक आधारभेदे "औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा" सि०कौ० । भावे ल्युट् । उपश्लेषण तत्रैव न० "अत्याधानमुपश्लेषणम्" सि०कौ० ।

**उपश्लोकि** श्लोकैरुपस्तौति उप+श्लोक+णिच् नामधातुः उभ०सक० सेट् । उपश्लोकयति-ते उपाशुश्लोकत्-त उपश्लोकयाम्-बभूव-आस-चकार चक्रे उपश्लोकयन् उपश्लोकितः उपश्लोकयितुम् उपश्लोकनम् ।

**उपष्टम्भ** पु० उप+स्तम्भ-घञ् षा०त्वम् । १पतनप्रतिरोधे (थामान) २आलम्बने ३आडम्बरे च स्वार्थे कन् । तत्रार्थे ३आधिक्ये च । उपस्तम्भादि ल्युट् । उपष्टम्भक पतनप्रतिरोधके, स्त्रियां न० "सर्व एव हि प्रकारोऽन्त:प्राया उपष्टम्भक:" छ०उ० "उपष्टम्भकः षटकस्येव श्लक्ष्णादिबन्धः" भा० ।

**उपष्टुत्** त्रि०उप+स्तु-कर्मणि क्विप् षा०त्वम् । उपस्तुतमाने "यस्येव स्वाता उपष्टुत्" ऋ० ६,८७,६,

**उपसं(सङ्)क्रमण** न० उप+सम्+क्रम-भावे ल्युट् वा कः । १प्रविशेषे कस्यचित् वस्तुनः पूर्वाधारत्यागेन समीपस्थितवस्तुनि संक्रमणे "सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे" इत्यादौ विशिष्टे विधिनिषेधबाधे तद्धर्मविशेषणे उपसंक्रमणं भवतीत्युक्तं यथा शिखी विनष्टः पुरुषो न नष्ट इत्यत्र विशेषणभूतशिखायामेव नाशस्योपसंक्रमणम् । उपसंक्रमणे दीयते कार्यं वा व्युष्टा०अण् । औपसंक्रमण तत्र देये कार्ये त्रि० । स्त्रियां ङीप् ।

**उपसं(सङ्)ग्रह** पु०उपसंगृह्यते पादावत्र उप+सम्-ग्रह-आधारे अप् वा कः । १पादग्रहणपूर्वकमभिवादने उपसंगृह्यतेऽनेन करणे अप् । २उपकरणे "उपार्जित वैभवः

पर्य्यङ्के शोपसंपद्धे” भा०वि०१७अ०। भावे ल्युट्। २सम्यक् संपत्ते “बालानामुपसंपदः” राजा०

**उपसं(सङ्ग्र)ग्रहण** न० उप+सम्+ग्रह–आधारे ल्युट् वा ङः। पादग्रहणपूर्वकप्रणामे “उपसंग्रहणं कृत्वा द्रोणाय स विशांपते” भा०द्रो०७४अ० “गुरुवत्परिपूज्या कार्य्यमुपसंग्रहणं गुरोः” मनुः। २सम्यक् संग्रहणे च।

**उपसं(सङ्ग्रा)ग्राह्य** त्रि० उप+सम्+ग्रह–कर्मणि यत् वा ङः। पादग्रहणेन अभिवाद्ये “भ्रातुर्भार्य्योपसंग्राह्या सवर्णाऽहन्यहन्यपि। विप्रोष्य तूपसंग्राह्या ज्ञातिसम्बन्धियोषितः” मनुः। [२सम्यग्नियमे ३बन्धने च।

**उपसंयम** पु० उप+सम्+यम–घञ् अवृद्धिः। १उपसंहारे।

**उपसंयमन** न० उप+सम्+यम–णिच् ल्युट्। १सम्यग्बन्धने करणे ल्युट्। २तत्साधने।

**उपसंयोग** पु० सामीप्येन संयोगः। समीपसंबन्धे। “नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति उपसर्गाः” व्या०

**उपसंरोह** पु० उपगतः संरोहः प्रा०स०। समीपप्ररोहे “मध्यमार्गोपसंरोहः” सुश्रु०।

**उपसंवाद** पु० उपेत्य अङ्गीकृत्य संवादोवदनम्। पणबन्धे नाङ्गीकारपूर्वककथने उपसंवादाशङ्कयोश्च” पा०। “उपसंवादः पणबन्धः” सि०कौ०। स च “यदि भवानिदं कुर्य्यात् तर्हि इदमहं ते दास्यामीत्येवं वाक्यरूपः।

**उपसव्यान** न० उपसंवीयतेऽनेन उप+सम्+व्येञ्–संवृतौ करणे ल्युट्। परिधानवस्त्रे “अन्तरं बाह्ययोगोपसंव्यानयोः” पा०।

**उपसंहार** पु०उप+सम्+हृ–घञ्। १समाप्तौ, स च प्रस्तुतात् पश्चाद्विचारकर्त्तव्यभेदः “उपक्रमोपसंहारौ–हेतुस्तात्पर्य्यनिर्णये, इत्युक्तेः। समाप्तेरेव तदेकत्वं न तु प्रक्रमेकत्वमुक्तमुपक्रमपदे। २संग्रहे च। ३सम्यगाहरणे ४प्रकृतार्थस्यान्यतात्पर्य्यार्थसमर्पणे यथा गुणोपसंहारः। तच्छब्दे विवृतिः। ५साकल्येन सम्बन्धे “सर्वोपसंहारवत्त्वाव्याप्तेर्द्रष्टव्यत्वात्” सर्व०सं०।

**उपसंहारिन्** त्रि० उप+सम्+–हृ–णिनि। १उपसंहारके साकल्येन सम्बन्धेन व्याप्ते अनुपसंहारिशब्दे उदा०।

**उपसङ्ख्यान** न० उपरि सूत्रोक्तादतिरिक्तार्थः संख्यायते अनेन उप+सम्+ख्या–करणे–ल्युट्। सूत्रानुक्तसाधकवार्त्तिकादिभिः कथने वाक्यभेदे। “प्रकृत्यादिभ्य उपसंख्यानमित्यादि” वार्त्तिके भूरिप्रयोगः। इत्युपसंख्यानमेतदेव” २,११२,माधव्या० मल्लिनाथः।

**उपसत्ति** स्त्री उप+सद–भावे क्तिन्। १नैकट्येन सम्बन्धे २अनुगतत्वे ३सम्बन्धमात्रे च। करणे क्तिन्। ४सेवायाम् मेदि०।

**उपसत्तृ** त्रि० उप+सद–तृच्। १आसन्ने निकटस्थिते २अनुगते ३सेवके च। “मा च रिषदुपसत्ता ते अग्ने!” “सजग्ने सदनमस्तु तुभ्यमुपसत्ता” यजु०२७,२,४, उपसत्ता सेवकः वेददी०।

**उपसद्** त्रि० उपसीदति उप+सद–क्विप्। १समीपस्थिते। “प्रकाशोद्यावोपसदम्” यजु०२०,६,करणे क्विप्। २इष्टिभेदे स्त्री। सा चेष्टिः “अथोपसद्” आश्व०श्रौ०४,८,१, आरभ्य प्रायणीयोपसदः” इत्यन्तेषु ११सूत्रेषु उक्ता दृष्टव्या। “अथोपसद्भिः प्रचरति” “यदोपसद्भिः प्रचरति अथैतानि हवींषि निर्वपति आग्नेयमष्टाकपालं पुरोडाशं सौम्यं चरुं वैष्णवं त्रिकपालं वा पुरोडाशं चरुं वा तेन यथेष्ट्यैवं यजते। तद् तथा न कुर्य्यात् कुरुते वा एष यो यज्ञपथादेत्येति वा एष यज्ञपथाद्य उपसत्पथादेति तस्मादुपसत्पथादेव नेयात्” शत०५,४,५,१६, “अथ दशपेये तं मध्याह्ने स्थापितं सोममाहृत्यासन्द्यामासन्द्यामित्यथवा प्रचरेयुः तदनन्तरमुपसद्यागः तत्राग्निसोमविष्णुदेवता कोपसत्प्रतिनिमित्तेन संस्तवयागसम्भिन्नानुक्तमार्गं तथायामाग्नेय सौम्यवैष्णवानामेव निर्वापं पूर्वमध्यति यदोपसद्भिरिति। तेन यथेष्टीति एकैकोपसत्स्थाने तेन एकेन हविषा यथेष्टि इष्टितन्त्रेण कुर्य्यात् उपसत्तत्वार्थमेतद्विस्तरं कर्त्तव्यमिति शाखान्तरीयः पक्षः तमिमं निराकरोति तद् तथेति। नेयात् न प्रच्युतोभवेत् तत उपसदः पृथक् कुर्य्यात् तदन्त एतानि संस्थापामन्त्रिमानि त्रीणि हवींषि चेष्टितन्त्रेण पृथक् कुर्य्यात् स एव दशपेयः क्रतः यमदग्निसोमवाग्व्योऽग्निष्टोमसंस्थोभवति” भा०। “उपसद्भिश्चरित्वा मासमेकमग्निहोत्रं जुहोति” श्रुतिः। “उपसदुपसदामेतत्सिन्वोरात्रीः यजु० १९,१४, “उपसद्भु रौहिणौ कुर्य्यात्” कात्या०४,६,४४,“उपान्तुपसदः। ७,२,२२,। ज्योतिष्टोमे ३प्रवर्ग्योपसदिष्टावाभिष्टौ ४गार्हपत्यादिभिरेऽग्नौ च। “गार्हपत्योदक्षिणाग्निस्त्रीवा हवनीयकः। एतेऽग्नयस्त्रयो मुख्याः शेषाश्चोपसदस्त्रयः” अग्नि पु०गणभेदनामाध्याये। उपसद् तस्यन्नोऽध्यायिन् विशक्ता०अण्। औपसद तदधिकृत्य कृताध्याये अनुवाके च पु०।

**उपसद** पु० उपसीदत्यस्मिन् उप+सद–घ वा० घञर्थे क। उपसद्यागे “अथ यदश्नाति यत् पिबति यद्रमते तदुपसदै

रैति” शा०उ०। “यद्रमते रतिश्चानुभवति इत्यादि संयोगात्तदुपसदैः समानतामेति उपसदाश्च पयोव्रतनिमित्तं सुखमपि अल्पभोजनीयानि चाहानि आसन्नानीति प्रवासोऽशनादीनामुपसदाञ्च सामान्यम्” शा०भा०। “पयोव्रतत्वं पयोभक्षणत्वम् यद्धे यान्यहान्यभोजनीयानि तानि प्रसिद्धानि उपसत्सु क्रियमाणासु प्रवासः शास्त्रविशेषः अशनादिष्वपि सोऽस्तीति प्रसिद्धनिमित्तकत्वनिमित्तत्वं क्लेशहेतुत्वञ्च सामान्यम्” आ०गि०

**उपसदन** न० उप+सद–ल्युट्। १सेवायामुपसेवने २आनुगत्यादिना प्राप्तौ “तत्रोपसदनं चक्रे द्रोणस्येषुस्त्रकर्मणि” भा० व० १०८ अ० “प्रतिजग्राह च तान् सर्वान् द्रोणश्चैवं समब्रवीत्। रहस्येकः प्रतीतात्मा कृतोपसदनांस्तथा” आ० १३२अ०सामीप्ये अव्ययी०। ३निकटसमीपे अव्य०। “धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुङ्गव!। यज्ञोपसदनं ब्रह्मन् प्राप्तोऽसि मुनिभिः सह” रामा०। अत्राव्ययीभावस्यापि यज्ञेन समासः आर्षः।

**उपसदी** स्त्री उप+सद–बाहु० क गौ० ङीष्। सन्ततौ धारायाम्। “अग्रदेऽस्योपसद्यां मा च्छैत्सीत् प्रजाता च पशुभिश्चार्पितम् शत०१४,९,४,२१। अस्य यजमानस्य उपसद्यां सन्ततौ” भा०। सन्ततिश्च द्वेधा कालिकी दैशिकी च। तत्र समानानेककालिककार्य्यमात्रधर्मत्वं कालिकसन्ततित्वम्। विभिन्नकालीनघटपटादिकार्य्यमात्रवृत्तिधर्मघटत्वादौ सन्ततित्ववारणाय समानेति सामान्यस्यान्वयितावच्छेदकधर्मेण। तेन सत्त्वद्रव्यत्वादिना घटपटयोः समत्वेऽपि न क्षतिः। सत्त्वद्रव्यत्वादिकमादाय तद्वारणाय कार्य्यमात्रेति। एककालोत्पन्नेषु बहुषु घटेषु तद्वारणाय अनेककालिकेति। दैशिकसन्ततित्वञ्च समानानेकदेशिकार्य्यमात्रधर्मत्वमितिभेदः। तत्र कालिकसन्ततेः प्रवाहादिपदेन व्यपदेशः यथा ज्ञानप्रवाहः, दुःखप्रवाहः इत्यादि दैशिकसन्ततौ तु श्रेणिप्रभृतिशब्दव्यवहारः यथा वृक्षश्रेणी वृक्षपङ्क्तिरित्यादि। उभयसन्ततौ तु सन्ततिधारादिशब्दप्रयोगः यथा ज्ञानधारा सुखधारा दुःखसन्ततिरित्यादि एवं जलधारा तैलधारा तैलसन्ततिरित्यादि। तादृशधर्मश्च सुखत्वदुःखत्वज्ञानत्वादिकं वृक्षत्वतैलत्वादिकञ्च। उभयविधापि सन्ततिः पुनर्द्विविधा अविच्छिन्ना विच्छिन्ना च देशकालयोरव्यवधानेऽविच्छिन्ना यथा धारावाहिकस्थले ज्ञानादिधारा। तयोर्व्यवधाने विच्छिन्ना यथा विच्छिद्य विच्छिद्य जायमानदुःखानाम्। विच्छिन्नसन्ततिमादायैव सुखप्रवाहः। सुखदुःखसन्ततिरित्यादिव्यवहारः।

**उपसद्य** त्रि०उपसदं सेवामर्हति यत् उप+सद–कर्म्मणि बा० यत् वा। १सेवनीये २नैकट्येन प्राप्ये च “भरेषु हव्यो नमसोपसद्योगन्ता” ऋ० २,२३,१३। “उपसद्याय मीढुष आस्ये जुहुता हविः” ऋ० ७,१५,१।

**उपसद्वन्** त्रि० उप+सद–ङ्वनिप् स्त्रियां ङीप् वश्चान्तादेशः। १उपसन्ने २सेवके च। कर्म्मणि ङ्वनिप्। ३सेव्ये च। “नमस्ते अस्तु मीढुषे नमस्त उपसद्वने” आ०श्रौ०२,५,८।

**उपसद्व्रत** न० उपसत्सु विहितं व्रतम्। उपसद्विहिते पयोव्रते। “आपूर्य्यमाणपक्षस्य द्वादशाहमुपसद्व्रती भूत्वा” छ०उ०। ‘उपसत्सु व्रतमुपसद्व्रतमुपसदः प्रसिद्धाः ज्योतिष्टोमे। तत्र स्तनोपचयापचयद्वारेण पयोभक्षणं व्रतं तत्र च तत्कर्मानुपसंहारात् केवलमितिकर्त्तव्यतामुख्यं पयोभक्षणमात्रमुपादीयते। उपसद्व्रतो पयोव्रती सन्नित्यर्थः शा०भा०।

**उपसन्न** त्रि० उप+सद–क्त। १उपस्थिते, २निकटागते ३उपसेवके च ४आनुगत्येन नैकट्यप्राप्ते “अधीतु भगवांस्तस्मै उपसन्नोऽस्म्यधीहि भोः” भा०शा०२८९ अ०। “भगवन्नुदधौ मृतिजन्मजले सुखदुःखझषे पतितं व्यथितम्। कृपया शरणागतमुद्धर मामनुशाध्युपसन्नमनन्यगतिम्” “तस्मै स विद्वानुपसन्नाय—प्रोवाच तत्त्वतो ब्रह्मविद्याम्” श्रुतिः।

**उपसमाधान** न० उप+सम–आ–धा–ल्युट्। राशीकरणे, “निवासचितिशरीरोपसमाधानेत्यादि” पा०। “उपसमाधानं राशीकरणम्” सि०कौ०। २समिधः प्रक्षिप्य ज्वालने। “विवाहाग्निमुपसमाधाय पश्चादस्याः” आश्व०गृ०१,८,९, “उपसमाधाय समिधः प्रक्षिप्य प्रज्वाल्य” ना०वृत्तौ। अग्निमुपसमाधाय” गो०सू० “उपसमाधाय ज्वालयित्वेति” तत्त्वे च समापूर्व्वधाञ्धातोस्तथार्थदर्शनात् तथार्थत्वम्।

**उपसमिध(ध्)** अव्य० समिधः समीपे अव्ययी० वा अच्समा०। समिधः समीपे।

**उपसम्पत्ति** स्त्री उप+सम्+पद–क्तिन्। अभिनवत्वेन सम्पत्तौ। “प्रथमोऽचिरोपसम्पत्तौ” पा० “अचिरसम्पत्ती अभिनवत्वे” सि०कौ०। सम्पत्तिशब्दार्थभाव: सि०कौ०

**उपसम्पन्न** त्रि०उप+सम्–पद+क्त। १प्राप्ते २मृते च हेम०। “श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत्” मनुः।

**उपसम्भाषा** स्त्री उप+सम्+भाष–भावे अ। उपसान्त्वने। “भासनोपसंभाषाज्ञानयत्नेत्यादि” पा० “उपसम्भाषा उपसान्त्वनम्” सि०कौ०।

**उपसर** पु० उप+सृ "प्रजने सर्त्तेः" पा० अप्। गर्भग्रहणार्थं स्त्रीपशुषु पुंस्पशुगमने। "प्रजनं प्रथमगर्भग्रहणम्। गवामुपसरः" सि० कौ०। उपचारात् २नैरन्तर्य्येणाभिगमने "वीनामुपसरं दृष्ट्वा" भट्टिः "वीनामुपसरं नैरन्तर्य्येण निर्गमनम् दृष्ट्वा उपसर इव उपसरः नैरन्तर्य्यमात्रेणोपलक्षितत्वात् उपसरो हि स्त्रीगवीषु पुङ्गवानामभिगमनमुच्यते स च नैरन्तर्य्येण भवति" जय मङ्गलः।

**उपसरण** न० उप+सृ-ल्युट्। १उपसरणे २समीपगमने च। "यस्तूभयो वा भेषजवेगं प्रसह्य मत्त्यादिर्निहन्ति तस्योपसरणं कुर्वन्ति देवाः" "परिस्रावः प्रवाहिका हृदयोपसरणं विबन्धः" सुश्रु०। कर्मणि ल्युट्। २उपसर्त्तव्ये उपगम्ये च। "अथ खल्वायोः सत्त्वविदुपसरणानीत्युपासीत" छा० उ०। "उपसरणानि उपसर्त्तव्यानि उपगन्तव्यानि ज्ञेयानि" भा०।

/ **उपसर्ग** पु० उप+सृज-घञ्। १रोगविकारे २उपद्रवे, शुभाशुभसूचके ३दिव्यादिविकाररूपे उत्पाते, व्याकरणोक्तेषु "निपाताश्चादयो ज्ञेयाः प्रादयस्तूपसर्गकाः। द्योतकत्वात् क्रियायोगे लोकादवगता इमे" इत्युक्तलक्षणेषु क्रियायोगे ४प्रादिषु च। "उपसर्गाः क्रियायोगे" पा०। "यत्र प्रादीनामन्यत्र प्रयुक्तेष्वुपसर्गतेतिद्योतनाय योगग्रहणम्। तेन निर्गतः सेचको यस्मादिति वाक्ये निःसेचक इत्यादौ न षत्वम्" मल्लेन्दु०। ते च द्वाविंशतिविधा यथा, प्र, परा अप, सम्, अनु, अव, निस्, निर् दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप एते प्रादयः। निस् दुस् इति सान्तौ "निसस्तपतावनासेवने" पा० सूत्रे निस इति निर्द्देशात्। निष्टप्तं दुष्कृतमित्युदाहृत्य "इदुदुपधस्य रो विसर्जनीयः" इति भाष्योक्तेश्च 'निरःकुष इति' "सुदुरोरधिकरणे" इति च पा० निर्द्देशात् रान्तावपि" मनो०। निर्दुरोरभेदारोपेण कैश्चिद्विंशतिकथनं द्रष्टव्यम्। "तत्र त्रिधा प्रवृत्तिः "धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्त्तते। तमेव विशिनष्ट्यन्य उपसर्गगतिस्त्रिधा। क्रमेणोदाहरणानि यथा। आदत्ते प्रस्नुते प्रचलतीति। अपि च। "उपसर्गेण धात्वर्थो बलादन्यत्र नीयते। प्रहाराहारसंहारविहारपरिहारवत्"। "विभाषोपसर्गे" "द्व्यन्तरुपसर्गेभ्योऽप ईत्" पा०।

प्रादयस्तूपसर्गा न वाचकाः, वाचकाश्च चादयो निपाता वाचकत्वात् उपसर्गास्तु न तथा किन्तु द्योतका इति नैयायिकाः। वैयाकरणास्तु उभयेऽपि द्योतका इति मेनिरे तदेतत् वै० भू० दर्शितम् "प्रादयो द्योतकाश्चादयो वाचका इति नैयायिकमतमयुक्तम् वैषम्ये बीजाभावादिति चादिनिपातानां द्योतकत्वं समर्थयते। "द्योतकाः प्रादयो येन निपाताश्चादयस्तथा। उपास्येते हरिहरौ लकारो दृश्यते यथा" येन हेतुना प्रादयो द्योतकास्तेनैव हेतुना चादयो निपातास्तथा द्योतका इत्यर्थः। अयं भावः। ईश्वरमनुभवतीत्यादावनुभवादि प्रतीयमानो न धात्वर्थः भवतीत्यत्रापि तत्प्रतीत्यापत्तेः। नोपसर्गार्थः तथा सत्यप्रकृत्यर्थतया तत्राख्यातार्थान्वयापत्तेः प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः अनुगच्छतीत्यादौ अनुभवादिप्रत्ययापत्तेश्च। न विशिष्टार्थः गौरवात्। तथा च धातोरेव विद्यमानत्वादिवाचकस्य लक्षणया उपसर्गस्तात्पर्य्यग्राहक इत्यस्तु। तथा च तात्पर्य्यग्राहकत्वमेव द्योतकत्वमिति। तद्वच्चादिष्वपि तुल्यम् चैत्रमिव पश्यतीत्यादौ सादृश्यविशिष्टं चैत्रपदलक्ष्यम् इवशब्दस्तात्पर्य्यग्राहक इत्यस्य सुवचत्वादिति। अथ कुमारी व्याचष्टे। उपास्येते इति। अत्र उपासना किमुपसर्गार्थः? विशिष्टस्य? धातुमात्रस्य? वा। नाद्यः तथा सति स्वार्थफलव्यधिकरणव्यापारवाचकत्वरूपसकर्मकत्वस्याऽऽस्धातोरुपासनारूपफलवाचकत्वेनाभावादकर्मकत्वापत्तेस्ततः कर्मणि लकारो न स्यात्। न द्वितीयः गौरवात्। तृतीये त्वागतं द्योतकत्वं तात्पर्य्यग्राहकत्वाभावात् इति भावः। दृश्यते इत्यत्र कर्मणीति शेषः। तद्वच्चादिष्वपि तुल्यमित्याह। "तथान्यत्र निपातेऽपि लकारः कर्मवाचकः। विशेषणाद्ययोगोऽपि प्रादिवच्चादिके समः"। (अन्यत्र) साक्षात्क्रियते अलङ्क्रियते ऊरीक्रियते शिव इत्यादौ। अत्रापि धातोस्तदर्थे कर्मणि लकारसिद्ध्यर्थं तत्तदर्थवाचकत्वं वाच्यमित्युपसर्गस्थलेऽत्रागतत्वमभीप्सार्थः। यद्यपि कृधातोः सकर्मकत्वमस्त्येव तथाप्यर्थेषु सकर्मकता न स्यात्। अन्यथा वायुर्विकुरुते सैन्धवा विकुर्वत इत्यत्रापि स्यादिति भावः। अथोपासनासाक्षात्कारादि निपातार्थोऽस्तु "साक्षात्प्रत्यक्षतुल्ययोरिति" कोषस्मरणात् तदनुकूलो व्यापार एव धात्वर्थोऽस्तु समभिव्याहृतनिपातान्यतरार्थफलव्यधिकरणव्यापारवत्त्वं सकर्मकत्वमपि सुवचमिति दृष्टान्तदार्ष्टान्तिकावयुक्ताविति नेदं साधकमिति चेन्न नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयासम्भवेन निपातधात्वर्थयोरन्वयासम्भवात्। अन्यथा तण्डुलः पचतीत्यत्रापि कर्मतया तण्डुलानां धात्वर्थेऽन्वयापत्तेरिति। किञ्च प्रादीनां वाचकत्वे भूयान् प्रकर्षः कोदयोनिश्चय इतिकु-

यात् प्र. कीऽयोगिरित्यपि स्यात् ।। अव्ययते प्रादेरर्थ-वत्त्वात् तदन्वय इयत एव द्योतकता तेषां स्यादिति । बाधकान्तरमभिप्रेत्याह । विशेषणेति । शोभनः मनुष्य योद्रष्टव्य इति वक्तौभनस्य द्रष्टव्य इत्यस्यान्वयापत्ते सुख्यस-माधेयत्वादिति भावः। अपि च निपातानां वाचकत्वेप्राति-पदिकार्थयोर्विना षष्ठ्यादिक भेदेनान्वयासम्भवः । अन्यथा राजा पुरुष इत्यस्य राजसम्बन्धी पुरुष इत्यथापत्तेरित्य-भिप्रेत्याह स्यादीति । धवखदिरयोः समुच्चय इति बहुस्य च खदिरस्य चान्वेव स्यादिति भावः । ननु प्रातिपदिकार्थ योरभेदान्वयबोधे विभक्तिजन्योपस्थितिर्हेतुरिति कार्य-कारणभावो निपातातिरिक्तविषय एवेति नोक्तदोष इत्या-शङ्क्याह ।"पदार्थः सदृशान्वेति विभाग [illegible] प्र-पातेतरसङ्कोचे प्रमाणं किं विभावय" । (सदृशा) सदृशेन समानाधिकरणेनेति यावत् । (अन्वेति)अभेदेनेति शेषः । (विभागेन) असदृशेन असमानाधिकरणेनेति यावत् । अयमर्थः समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्ति निपातातिरिक्तविषयेति कल्पने मानाभावोगौरवञ्च । अ-न्यार्क निपातानां द्योतकत्वाद्न्वय एव नास्तीति नायं दोषः अतएव घटोनास्त्यादौ घटपदं तत्प्रतियोगिके लाक्षणिकमिति नैयायिकाः। अपि च निपातानां वाचकत्वे काव्यादावन्वयोन स्यादिति बाधकान्तरमाह । "शरैरुत्स-र्गैरिवोदीच्यान् उद्धरिष्यन् रसानिव । इत्यादावन्वयोन स्यात् पाश्च अवश्यं ततः" । अशोत्सवर्गैः शरैः रसवद्-वासुदीच्यानुद्धरिष्यन्नित्यर्थः । अवसूत्रोदिदृश्यानां त-स्सदृशपरत्वे इवशब्दस्य द्योतकत्वे च सङ्गच्छते । अन्यथा प्रथमानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिविरोधः । तथाहि । उत्सर्गैरिति करणे तृतीया । न चोत्सर्गक-रणम् इवार्थसदृशस्य करणत्वेऽपि तस्य करणत्वं नामेन बोधयितुं शक्यम् अप्रकृत्यर्थत्वात् । इवशब्दस्य वाच-कार्थकतया तदुत्तरतृतीयाया असम्भवात् । सम्भवे वा अवश्यप्रसङ्गात् । उत्सपदोत्तरतृतीयानन्वयप्रसङ्गाच्चेत्याह । सुपां चेति । सुपां अवश्यश्चेत्यर्थः । चकारादुत्सपदोत्तर-तृतीयानन्वयः समुच्चीयते इत्यादावित्यादिपदात् "वाग-र्थाविव सम्पृक्तौ वन्दे पार्वतीपरमेश्वरौ" इत्यत्र वागर्थयो-र्वैन्दिकर्मत्वाभावात्तदुत्तरद्वितीयाया अनन्वयः इवार्थस्य कर्मत्वान्वयबोधासम्भवश्च संगृह्यते । यदि च विशेषण-विभक्तिरभेदार्था साधुत्वमात्रार्था वा तदापि इवशब्दस्य वाचकत्वेऽनन्वय एव उत्सशब्दघटराणां समानाधिकरणपदो-

पस्थाप्यतया भेदेनान्वयायोगात् । बाधादभेदेनापि न सः । नह्युत्सानिसदृशाभिन्नः शर इत्यर्थ इष्टव्यः" ।

उत्पातरूप उपसर्गश्च त्रिविधः "अन्तर्भौमान्तरिक्षाद्दिव्या-न्नाशिक्याद्यात्प्रधर्मतः । नराणामपचाराच्च नियतमुपसर्गः प्रवर्त्तते । अतोऽपचारान्नियतमपवर्जन्ति देवताः । ताः सृजन्त्यद्भुतान् स्वार्थंहिंस्रमनामसभूमिजान् । तएव त्रिविधा लोके उत्-पाता देवनिर्म्मिताः । विचरन्ति विनाशाय रूपैः सम्भा-वयन्ति च" गर्गः । "उपसर्गस्तते चैव सद्यः शीघ्रं विनो-यते"पराश०। उपद्रवरोगकृतार्थोपसर्गा सुश्रु०उक्ताः "दैव-बलप्रवृत्ता ये देवद्रोहादभिशस्तका अथर्वकृता उपसर्गकृता-श्च तेऽपि द्विविधा विद्युदशनिकृताः पिशाचादिकृताश्च पुनश्च द्विविधाः संसर्गजा आकस्मिकाश्च" "उपसर्गादयोरोगा ये चाप्यागन्तवः स्मृताः" ज्वरं कृत्स्नोपसर्गाः प्रभूताः" सुश्रुतः उपद्रवशब्दे विवृतिः । "उपसर्गानिमांस्तु मङ्गा-चारोत्तमम्भवान् । तथा त्रिविधमुत्पातं भाद्रोत्तमं गणयेच्चन" देवीभा० । तत्र प्रभवति तन्त्रापा० तेन निर्वृत्तम् वा ठञ् । औपसर्गिक तत्र पर्य्याप्ते तेन निर्वृ-त्ते च त्रि० । औपसर्गिकात्यन्तलरक्तपोडाताम् सु०त०।

**उपसर्ज्जन** त्रि० उप+सृज-ल्युट् । १देशाद्युपद्रवे "निर्वाते भूमिचलने ज्योतिषाञ्चोपसर्ज्जने" मनुः । २अप्रधाने गौणे-विशेषणे "चोपसर्ज्जनस्य" "गोस्त्रियोरुपसर्ज्जनस्य"पा०। 'उपसर्ज्जनं प्रधानस्य धर्मतो नोपपद्यते" मनुः "उप-सर्ज्जनमप्रधानम्" कुल्लू० । "अनुपसर्ज्जनात्" "आचा-र्य्योपसर्ज्जनश्चान्तेवासी" पा० उपसृजत्यनेन करणे ल्युट् । ३संमार्गसाधने त्रि० स्त्रियां ङीप् । "अर्थैक उपसर्ज्जनी-भिरेभिः" शत०१,२,२,२, "पिष्टसमार्जनार्थानि अपश्च पिष्टसमार्ज्जनार्थाश्चोपसर्ग साधनानि उपसर्जन्यः" भा० 'प्रथमानिर्दिष्टमुपसर्ज्जनम्"पा०उक्ते । समासविधायकवा-क्ये ४प्रथमान्तपदनिर्दिष्टे ।"एकविभक्ति चापूर्वनिपाते" विग्रहवाक्ये नियतविभक्तिकं तदुपसर्जनसंज्ञम् इत्यर्थक पाणिनिसूत्रोक्ते ५शब्दभेदे च "उपसर्ज्जनं पूर्व्वम्"पा० समासे उपसर्ज्जनस्य पूर्व्वप्रयोगः यथा "द्वितीया श्रिते-त्यादि" पा०सूत्रे द्वितीयेति प्रथमान्तम् पदं तदेव प्राक्-प्रयोज्यम् यथा कष्टं श्रित इत्यादि वाक्ये कष्टश्रित इत्यादि

**उपसर्पण** न० उप+सृप—भावे ल्युट् । समीपगमने "न ताव-दयमुपसर्पणकालः" विक्र० । "मणिकोपसर्पणमाकर्ण्य-मित्यादि" सुश्रु० ।

**उपसर्पिन्** त्रि० उप+सृप—गतौ णिनि । समीपगन्तरि

"एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम्" मनुः। "शुक्रं मातामहं तेषां परपीडोपसर्पिणाम्" भा०अ०१०अ०।

**उपसर्य्या** स्त्री उपसृियतेऽसौ सृ-कर्मणि यत्। गर्भग्रहणयोग्यायाम् ऋतुमत्यां स्त्रीगव्यादौ। अप्रजनार्थे तु ण्यत् उपसार्य्यं प्राप्ये त्रि०।

**उपसि** अव्य० उप+सो बा० कि। समीपस्थाने "आसीन ऊर्ध्वामुपसि क्षिणाति" ऋ०१०,२७,१३। "उपसि समीपस्थाने" भा० "पि मे पुत्र उपसि प्रेतः" ऋ०५,४३,७।

**उपसीर** अव्य० सीरे हले तत्समीपं वा अव्य०। १हले इत्यर्थे २हलसमीपे वा। तत्र भवार्थे परिमुखा० ञ्य। उपसीर्य्यं तत्रभवे त्रि० आश्वा०सू०। हलोपगते त्रि० ततोभवार्थेऽणोऽ। औपसीर तद्भवे त्रि०

**उपसुन्द** पु० दैत्यभेदे तत्कथा भा० आ० "महासुरस्यान्वये हिरण्यकशिपोः पुरा। निकुम्भो नाम दैत्येन्द्रस्तेजस्वी बलवानभूत्। तस्य पुत्रौ महावीर्य्यौ जातौ भीमपराक्रमौ। सुन्दोपसुन्दौ दैत्येन्द्रौ दारुणौ क्रूरमानसौ। तावेकनिश्चयौ दैत्यावेककार्य्यार्थसम्मतौ। निरन्तरम् वर्त्तां समदुःखसुखावुभौ। विनान्योन्यं न भुञ्जाते विनान्योन्यं न गच्छतः। अन्योन्यस्य प्रियकरावन्योन्यस्य प्रियंवदौ। एकशीलसमाचारौ द्विधैवैकं यथा कृतौ। तौ विवृद्धौ महावीर्य्यौ कार्य्येष्वप्येकनिश्चयौ। त्रैलोक्यविजयार्थाय समाधायैकनिश्चयौ। दीक्षां कृत्वा गतौ विन्ध्यं तावुग्रं तेपतुस्तपः। तौ तु दीर्घेण कालेन तपोयुक्तौ बभूवतुः। क्षुत्पिपासापरिश्रान्तौ जटावल्कलधारिणौ। मलोपचितसर्वाङ्गौ वायुभक्षौ बभूवतुः। आत्ममांसानि जुह्वन्तौ पादाङ्गुष्ठाग्रधिष्ठितौ। ऊर्द्ध्वबाहू चानिमिषौ दीर्घकालं धृतव्रतौ। तयोस्तपःप्रभावेण दीर्घकालं प्रतापितः। धूमं प्रमुमुचे विन्ध्यस्तदद्भुतमिवाभवत्। ततो देवा भयं जग्मुरुग्रं दृष्ट्वा तयोस्तपः। तपोविघातार्थमथो देवा विघ्नानि चक्रिरे। रत्नैः प्रलोभयामासुः स्त्रीभिश्चोभौ पुनः पुनः। न च तौ चक्रतुर्भङ्गं व्रतस्य सुमहाव्रतौ। अथ मायां पुनर्देवास्तयोश्चक्रुर्महात्मनोः। भगिन्यो मातरो भार्य्याः सर्वेषामात्मजनस्तथा। प्रपात्यमाना विस्रस्ताः शूलहस्तेन रक्षसा। भ्रष्टाभरणकेशान्ता भ्रष्टाभरणवाससः। अभिभाष्य ततः सर्वास्तौ त्राहीति विचुक्रुशुः। न च तौ चक्रतुर्भङ्गं व्रतस्य सुमहाव्रतौ। यदा क्षोभं नोपयाति नार्त्तिमन्यतरस्तयोः। ततः स्त्रियस्ता भूतञ्च सर्वमन्तरधीयत। ततः पितामहः साक्षादभिगम्य महासुरौ। वरेणच्छन्दयामास सर्वलोकहितः प्रभुः। ततः सुन्दोपसुन्दौ तौ भ्रातरौ दृढविक्रमौ। दृष्ट्वा पितामहं देवं तस्थतुः प्राञ्जली तदा। ऊचतुश्च प्रभुं देवं ततस्तौ सहितौ तदा। आवयोस्तपसाऽनेन यदि प्रीतः पितामहः। मायाविदावस्त्रविदौ बलिनौ कामरूपिणौ। उभावप्यमरौ स्याव प्रसन्नो यदि नौ प्रभुः। ब्रह्मोवाच। ऋतेऽमरत्वं युवयोः सर्वमुक्तं भविष्यति। अन्यद्वृणीतं मृत्योश्च विधानममरैः समम्। प्रभविष्याव इति यन्महदभ्युद्यतं तपः। युवयोर्हेतुनानेन नामरत्वं विधीयते। त्रैलोक्यविजयार्थाय भवद्भ्यामास्थितं तपः। हेतुनानेन दैत्येन्द्रौ न वां कामं करोम्यहम्। सुन्दोपसुन्दावूचतुः। त्रिषु लोकेषु यद्भूतं किञ्चित् स्थावरजङ्गमम्। सर्वस्मान्नौ भयं न स्यादृतेऽन्योन्यं पितामह!। पितामह उवाच। यत्प्रार्थितं यथोक्तञ्च काममेतं ददानि वाम्। मृत्योर्विधानमेतच्च यथावद्वां भविष्यति। नारद उवाच। ततः पितामहो दत्त्वा वरमेतत्तदा तयोः। निवर्त्य तपसस्तौ च ब्रह्मलोकं जगाम ह। लब्ध्वा वराणि दैत्येन्द्रावथ तौ भ्रातरावुभौ। अवध्यौ सर्वलोकस्य स्वमेव भवनं गतौ" २११अ० "तावन्तरोत्समुत्सृज्य दैत्यौ कामगमावुभौ। देवानामेव भवनं जग्मतुर्युद्धदुर्मदौ। तयोरागमनं ज्ञात्वा वरदानञ्च तत् प्रभोः। हित्वा त्रिपिष्टपं जग्मुर्ब्रह्मलोकं ततः सुराः। ताविन्द्रलोकं निर्ज्जित्य यक्षरक्षोगणांस्तथा। खेचराण्यपि भूतानि जग्मतुस्तीव्रविक्रमौ। अन्तर्भूमिगतान् नागान् जित्वा तौ च महारथौ। समुद्रवासिनीः सर्वा म्लेच्छजातीर्विजिग्यतुः। ततः सर्वां महीं जेतुमारब्धावुग्रशासनौ। सैनिकांश्च समाहूय सुतीक्ष्णां वाक्यमूचतुः। राजर्षयो महायज्ञैर्हव्यकव्यैर्द्विजातयः। तेजो बलञ्च देवानां वर्द्धयन्ति श्रियं तथा। तेषामेवं प्रवृत्तानां सर्वेषामसुरद्विषाम्। सम्भूय सर्वैरस्माभिः कार्य्यः सर्वात्मना वधः। एवं सर्वान् समादिश्य पूर्वतीरे महोदधेः। क्रूरां मतिं समास्थाय जग्मतुः सर्वतोमुखौ। यज्ञैर्यजन्ति ये केचिद्याजयन्ति च ये द्विजाः। तान् सर्वान् प्रसभं हत्वा बलिनौ जग्मतुस्ततः। आश्रमेष्वग्निहोत्राणि मुनीनां भावितात्मनाम्। गृहीत्वा प्रक्षिपन्त्यप्सु विश्रब्धं सैनिकास्तयोः। तपोधनैश्च ये क्रुद्धैः शापा उक्ता महात्मभिः। नाक्रामन्त तयोस्तेऽपि वरदाननिराकृताः। नाक्रामन्त यदा शापा बाणा मुक्ताः शिलास्विव। नियमान् सम्परित्यज्य व्यद्रवन्त द्विजातयः। पृथिव्यां ये

तपःसिद्धा दान्ताः प्रमपराक्रमाः । तयोर्भुजाहृद्वले
वैनतेयादिवोरगाः । मथितैराश्रमैर्भग्नैर्विकीर्णकलशस्रवैः ।
शून्यमासीत् जगत् सर्वं कालेनेव हतं तदा । ततो राजन्
दुष्प्राप्यं विभिन्न महासुरौ । उभौ विनिश्चयं कृत्वा
विकुर्वाते वधैषिणौ । प्रभिन्नकरटौ मत्तौ भूत्वा कुञ्जर-
रूपिणौ । संलीनमपि दुर्गेषु निन्यतुर्यमसादनम् । सिंहौ
भूत्वा पुनर्व्याघ्रौ पुनश्चान्तर्हितावभौ । तैस्तैरुपायैस्तौ
क्रूरावृषीन् दृष्ट्वा निजघ्नतुः । निवृत्तयज्ञस्वाध्याया प्रनष्ट-
नृपतिद्विजा । उत्सन्नोत्सवयज्ञा च बभूव वसुधा तदा ।
हाहाभूता भयार्त्ता च निवृत्तविपणापणा । निवृत्तदेव-
कार्या च पुण्योद्वाहविवर्जिता । निवृत्तकृषिगोरक्षा
विध्वस्तनगराश्रमा । अस्थिकङ्कालसङ्कीर्णा भूर्बभूवोग्रदर्शना ।
निवृत्तपितृकार्यञ्च निर्वषट्कारमङ्गलम् । जगत् प्रति-
भयाकारं दुष्प्रेक्ष्यमभवत्तदा । चन्द्रादित्यौ ग्रहास्तारा
नक्षत्राणि दिवौकसः । जग्मुर्विषादं तत् कर्म दृष्ट्वा सुन्दो-
पसुन्दयोः । एवं सर्वा दिशो दैत्यौ जित्वा क्रूरेण कर्मणा ।
निःसपत्नौ कुरुक्षेत्रे निवेशमभिचक्रतुः" २११अ० । तत
स्तिलोत्तमाकृष्टिमुपवर्ण्य तस्यास्तत्समीपयानं तयोस्तदा-
सक्तत्वमुक्त्वा तत्रान्योन्ययुद्धे नान्योन्यवधः २१२अ०उक्तः
यथा "ततस्तिलोत्तमा तत्र वने पुष्पाणि चिन्वती । वेष-
माक्षिप्यमाधाय रक्तेनैकेन वाससा । नदीतीरेषु जातान् सा
कर्णिकारान् प्रचिन्वती । शनैर्जगाम तं देशं यत्रास्तां
तौ महासुरौ । तौ तु पीत्वा परं पानं मदरक्तान्तलो-
चनौ । दृष्ट्वैव तां वरारोहां व्यथितौ सम्बभूवतुः । ताव-
त्थायासनं हित्वा जग्मतुर्यत्र सा स्थिता । उभौ च
कामसम्मत्तावुभौ प्रार्थयतश्च ताम् । दक्षिणे तां करे सुभ्रूं
सुन्दो जग्राह पाणिना । उपसुन्दोऽपि जग्राह वामे
पाणौ तिलोत्तमाम् । वरप्रदानमत्तौ तावौरसेन बलेन
च । धनरत्नमदाभ्याञ्च सुरापानमदेन च । सर्वैरेतैर्मदै-
र्मत्तावन्योन्यं भ्रुकुटीकृतौ । मदकामसमाविष्टौ परस्पर-
मथोचतुः । मम भार्य्या तव गुरुरिति सुन्दोऽभ्यभाषत ।
मम भार्य्या तव वधूरुपसुन्दोऽभ्यभाषत । नैषा तव मम-
ति ततस्तौ मन्युराविशत् । तस्या रूपेण संमत्तौ विग-
तस्नेहसौहृदौ । तस्या हेतोर्गदे भीमे संगृह्णीतावुभौ तदा ।
प्रगृह्य च गदे भीमे तस्यां तौ कामलोहितौ । अहं पूर्व-
महं पूर्वमित्यन्योन्यं निजघ्नतुः । तौ गदाभिहतौ भीमौ
पेततुर्धरणीतले । रुधिरेणावलिप्ताङ्गौ द्वाविवार्कौ नभ-
श्च्युतौ" । सुन्दोपसुन्दन्यायः ।

**उपसूर्य्यक** न० उपगतं सूर्य्यं चन्द्रं वा संज्ञायां कन् । चन्द्रा-र्कसमीपे मण्डलाकारे परिधौ ।

**उपसृष्ट** न० उप+सृज-क्त । १मैथुने । २व्याकरणोक्ते प्राद्युपसर्गयुक्ते, "क्रुधद्रुहोरुपसृष्टयोः" पा० । ३विसृष्टे ४उपद्रुते च त्रि० । ५राहुग्रस्ते चन्द्रेऽर्के पु० "नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन । नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम्" मनुः ६बाधिते "उपसृष्टा इव क्षुद्राधिष्ठितभवना" काद० । ७व्याप्ते च "रोगोपसृष्टतनुदुर्वसतिं मुमुक्षुः" रघुः । [करणे ।

**उपसेक** पु० उप+सिच–भावे घञ् । जलादिसेचनेन आर्द्र

**उपसेचन** त्रि० उप+सिच-ल्यु । उपसेककर्त्तरि "तव श्रियो यास उपसेचनासः" ऋ०७,१०१,४,टच् । उपसेक्तृ-तमार्थे त्रि० "लोकेभ्य उपसेक्तारमवकाशे" यजु०३०,१२, स्त्रियां ङीप् । भावे ल्युट् । २उपसेके न० "दृहन्त्यु-भयपसेचनाय कम्" ऋ०१०,७६,७, "यवोदकपात्रोपसेचनात् कृत्वा" कात्या०८,५,२६, वा० कर्त्तरि ल्युट् । ३उपसेचक त्रि० स्त्रियां ङीप् "वेति त्वामुपसेचनी" ऋ०१०,२१,२, उपसेचनी उपरिक्षरणशीला आहुतिः भा० । करणे ल्युट् । ४तत्साधने

**उपसेवक** त्रि० उप+सेव–ण्वुल् । उपभोगादिना १सेवनासक्ते २भोगप्रसक्ते । "अदत्तादाननिरतः परदारोपसेवकः" वाम० ३उपेत्य सेवके च ।

**उपसेवन** न० उप+सेव–भावे ल्युट् । १उपभोगप्रसक्तौ । "नहीदृशमनायुष्यं लोके किञ्चन विद्यते । यादृशं पुरुषस्येह परदारोपसेवनम्" मनुः २समीपस्थित्या सेवने च । "निरताहं सदा वत्से ! भर्त्तृणामुपसेवने" भा०व०२१२ अ० ३तत्तत्कर्म्मणि आसक्तौ "अजीर्णाध्ययनाशादविदग्धाशोपसेवनात्" "एवंविधानां द्रव्याणामत्यर्थमुपसेवनात्" सुश्रु० भावे अ उपसेवा । तत्रार्थे स्त्री । "नोभिरन्यैश्च यानैश्च सख्या राज्ञोपसेवया" । "परदारोपसेवा च शारीरं त्रिविधं स्मृतम्" "विषयोपसेवा याऽजस्रम्" मनुः ।

**उपसेविन्** त्रि० उप+सेव–णिनि । उपसेवके "अभिवादनशीलस्य नित्यं वृद्धोपसेविनः । तेषां सततमज्ञानां विषयाम्नुपसेविनाम्" मनुः । "ये हितं वाक्यमुत्सृज्य विपरीतोपसेविनः" पञ्चत० । "कृष्णाया पुष्करयमाल-रोपसेवी" सुश्रु० स्त्रियां ङीप् ।

**उपसोम** पु० उपगतः सोमम् अत्या०स० । सोमोपगते सोमग्राविणि । अत्र तत्पुरुषत्वात् द्व्यच्कत्वाद्वाद्योदा-

स्तता । उपगत' सीमोऽनेन प्रा०ब०। तत्रार्थे सामीप्ये अव्ययी०। २सीमसामीप्ये अव्य० एतयोर्मन्तोदात्ततेति भेदः

**उपस्कर** पु० उप+कृ-भावे अप् हिंसने सुट्। १हिंसने उपस्करोति उप+कृ-अच् भूषणे समवाये प्रतियत्ने विकारे अध्याहारे च सुट्। २भूषके कटककुण्डलादौ ३मर्मादिते संहते। ४व्यञ्जनसंस्कारकपिष्टधन्याकादिद्रव्ये (मशला)। गृहसंस्कारके ५सम्मार्ज्जन्यादौ। ६विकृते अध्याहारेण ७कथके च "पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः"। "वध्यो भवति हुत्वाग्निं पञ्चकारी ह्युपस्करम्" मनुः।

**उपस्करण** न० उप+कृ-भावे ल्युट् हिंसने सुट्। १हिंसने। उप+कृ-भावे ल्युट् उपस्करशब्दोक्तभूषणादौ सुट्। २भूषणे ३संघाते ४सतोगुणान्तराधानरूपसंस्कारे ५विकारे ६वाक्याध्याहारे च। उभाभ्यां करणे ल्युट्। उक्ततत्तदर्थेषु सुट्। ७हिंसासाधने ८भूषणादिसाधने कटकादौ च न०।

**उपस्कार** पु० उप+कृ-भावे घञ् उपस्करशब्दोक्त भूषणादौ सुट्। १भूषणे २सङ्घाते ३प्रतियत्नरूपसंस्कारे ४विकारे ५अध्याहारे च। "साकाङ्क्षमनुपस्कारं विष्वग्गति निराकुलम्" किरा०।

**उपस्कीर्ण** त्रि० उप+कॄ-क्त हिंसने सुट्। हिंसिते

**उपस्कृत** त्रि० उप+कृ-क्त उपस्करशब्दोक्तभूषणादौ सुट्। १भूषिते २संहते ३संस्कृते ४विकृते ५अध्याहृते च। भावे क्तिन् उक्तार्थेषु सुट्। उपस्कृति उपस्कारशब्दार्थे स्त्री। उप+कॄ-भावे क्तिन् हिंसने सुट्। उपस्कीर्णि हिंसने स्त्री।

**उप(ष्ट)स्तम्भ** पु० उप+स्तम्भ घञ्। पतनप्रतिरोधने अवलम्बने "मूषिकस्योपस्त(ष्ट)म्भे केनापि कारणेनात्र भवितव्यम्" हितो०। नि०षत्वम्। उपष्टम्भ १उपष्टम्भशब्दार्थे २आलम्बने ३स्थितौ ४सहकारे च "स्थानात् बीजादुपष्टम्भात् निस्यन्दात् निधनादपि" पात० भा० गाथा। भावे ल्युट्। उपस्तम्भन तत्रैवार्थे न०। करणे ल्युट्। तत्साधने शकटाद्याधारकाष्ठे च "वरुणस्योत्तम्भनमसीत्युपस्तम्भनेनोपस्तभ्नाति" शत० ब्रा० ३,३,४,२५, "उपस्तभ्यते प्रतिबध्यते इत्युपस्तम्भनं शकटाद्याधारकाष्ठम्" भा० "देवानामित्युपस्तम्भनस्य पश्चादोमाम्" कात्या० २,१,१४, "शकटस्य काष्ठमोषा तदपस्य भूमिस्पर्शो मा भूदिति तदाधारत्वेन स्थापितं काष्ठमुपस्तम्भनम्" वेददी०। ततो ण्वुल्। उपस्त(ष्ट)म्भक

वा नि०षत्वम। उपस्त(ष्ट)म्भक त्रि० आधिक्याधायके त्रि

**उपस्तरण** न० उप+स्तॄ-ल्युट्। १आस्तरणे (विछान) २भूमेः सम करणे च। "पुनर्नवीकृत्य लेपनोपस्तरणैः" आ०ग०८०२, ३ आधारे ल्युट्। आस्तरणाधारे "अमृतोपस्तरणमसि" भोजनस्यादौ जलपानमन्त्रः 'अथाचमनीयमाचामति अमृतोपस्तरणमसीति' आ० गृ०१,२४,११, । 'स्तरणमाच्छादनम् उपस्तरणं भूमेः समीकरणम्' ना०वृत्तिः

**उपस्ति** पु० उप+स्त्यै इन नि०। इत्ये। "उपस्तिरस्तु सोऽस्माकम्" यजु०१२,१०१, "उपास्त्यायन्ति उपकारायोपद्रव निराकरणाय च समीपे संहतास्तिष्ठन्तीत्युपस्तयः इत्याः वेददी०।

**उपस्तिर्** त्रि० उप+स्तॄ-कर्म्मणि क्विप्। आस्तीर्य्यमाणे आस्तरणीये। "अभि शुक्रमुपस्तिरम्" ऋ०९,६२,२८,

**उपस्तुत** त्रि० उप+स्तु-क्त। समीपस्तुते अरण्योत्वस्तवेन स्तुते "चोदयाथ उपस्तुतश्चिदर्वाक्" ऋ०७,२७,२, "त्वं त्वमहयथा उपस्तुत पूर्वेभिरिन्द्र" ऋ०१०,९६,५।

**उपस्तुति** स्त्री उप+स्तु-क्तिन्। समीपस्तवे अरण्योत्वस्तुतिवाक्ये 'कर्मोपस्तुतिं भरमाणस्य' ऋ०१,१४८,२,

**उपस्तुत्य** त्रि० उप+स्तु-क्यप्। समीपे स्तवनीये। "उपस्तुत्यं महिजातं ते अर्व्वन्" ऋ०१,१६३,१,

**उपस्थ** पु०न० अर्द्धर्चादि। उप+स्था-क। १स्त्रीपुंसयोरिन्द्रियविशेषे तत्र पुमिन्द्रिये "स्नानमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः" याज्ञ०। स्त्रीन्द्रिये "दक्षिणेन पाणिना उपस्थमभिमृशेत् विष्णुर्योनिं कल्पयत्वित्येतयर्चा" गोभि०। "यितिष्ठन्तीं मातुरस्या उपस्थान्नानारूपा पशवो जायमानाः" अथ० १४,२,२५। "मुखदघ्नं ब्राह्मणस्योपस्थदघ्नं स्त्रियाः" शत०१२,८,१,११। उभयेन्द्रिये "हस्तौ पायुरुपस्थश्च वाक् पादौ चेति पञ्च वै। कर्मेन्द्रियाणि जानीयात्" याज्ञ०। "उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चकम्" मनुः "सर्वेषामानन्दानामुपस्थ एकायनम्" शत० ब्रा० १४,५,४,११। उपस्थश्च न तद्गोलकस्थानमात्रं किन्तु तत्स्थानाधिष्ठित प्रजापतिदेवताधिष्ठितशक्तिक आनन्दनव्यापारकारकः कर्म्मेन्द्रियभेदः। तत्र "ब्रह्मेन्द्रोपेन्द्रमित्रकाः" इति शा०ति०तस्य कमन्दशाख्यप्रजापतिदेवताकत्वमुक्तम् शत०ब्रा० उक्तवाक्ये चानन्दन व्यापारसाधनत्वमुक्तम् तस्यैवापाटवे क्लैव्यम्। इन्द्रियाणां भौतिकत्वमते तस्य पृथिवीरजोगुणोपदानकता आहङ्कारिकत्वमते गन्धतन्मात्रसहिताहङ्कारोपदानकता। स च स्वस्य

लिङ्गदेहान्तर्गत इति वेदान्तिनः व्याख्याताः। तेन जीवति वेतना० ८ञ्। औपस्थिक जारकर्मोपजीविनि जारभेदे पु०। वेश्यायां स्त्री। २उत्सङ्गे क्रोडे ३अन्तराले "आ ता-न् उपस्थेन इकस कोम" यजु० १६,८२। "वरीयजोभा पृणन्तो पितोरुपस्था" ऋ०१,१२४,५। "उपस्था उपस्थे उत्सङ्गेऽन्तरालदेशे वा" भा० "तस्याः कुमारमुपस्थ आ-दधु" गोभि० "उपस्थे उत्सङ्गे" सं०त० "भूया उपस्थेऽरपसत्वात्" ऋ०२,१४,७। "रथोपस्थ उपा-विशत्" गीता। उप+स्था घञर्थे भावे क। सर्वाङ्गुलीभिः भूमिमाश्रित्य ४स्थितौ "समस्तजङ्घोदरदलिभ्यां जानुभ्यां चोपस्थं कृत्वा" आश्व०श्रौ० ६,५,५। "उपस्थं कृत्वा भूमिमाश्रित्येत्यर्थः पादाङ्गुलीभिश्च भूमिमाश्रित्य वसुप-विशेत्" नारा०वृ०। "प्राङ्मुख उपविश्योपस्थं कृत्वा" आश्व०गृ० २,२,२,। उप+तिष्ठति स्था- क। "उप-स्थकृतस्तेशाश्विनं यजेत्" आ०श्रौ०६,५,५। ५समीप-स्थिते त्रि०।

**उपस्थपत्र** पु० उपस्थं स्त्रीचिह्नमिव पत्रमस्य। अश्वत्थे वृक्षे तत्पत्रस्य तदाकारत्वात्तथात्वम् अतएव नैष०(दमयन्त्यास-दङ्गवर्णने।अश्वत्थस्य चलपत्र नामता कारणत्वमुपेक्षितम्। "अङ्गेन केनापि विजेतुमस्या गवेष्यते किं? चलपत्र-पत्रम्। नो चेद्विशेषादितरच्छदेभ्यस्तस्यास्तु कम्पस्तु कुतो-भवेत्" उपस्थदलादयोऽप्यत्र। उपस्थपल्ले स्त्रीलक्षणे च तदङ्गस्य अश्वत्थदलाकारतोक्ता।

**उपस्थातृ** त्रि०उप+स्था–तृच्। १उपासके,२उपगते, च ३यथो-क्तकाले उपगते "अन्यत्रादौ क्रियाहेतौ नोपस्थाता निरुत्तरः। आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः" मिता०स्मृतिः। ४ऋत्विग्भेदे पु०।

**उपस्थान** न० उप+स्था–ल्युट्। १उपेत्य स्थितौ, २अनुस-न्धाने स्मरणे "तत्त्वज्ञानेऽपस्थानात् मनोयोगात् परिच्छ-यात्। कर्मणां सन्निकर्षाच्च सतां योगः प्रवर्त्तते"याज्ञ०। "कर्म्मसन्निहितं नैव बुद्धौ विपरिवर्त्तते। यस्मात्तु तदुप-स्थानमुपादेये गुणो भवेत्" भट्टवा०। ३उपसेवने उपासने "सूर्योपस्थाने विनियोगः"सन्ध्याप्रयोगः "तूष्णीं वोपस्थानम्" शत०ब्रा०४,१२,२०, ४उपसर्पणे। "तस्योक्त-मुपस्थानम्"आश्व०श्रौ०५,१२,२, "उपस्थानं प्रसर्पणम्" नारा०वृ०। ५आनतीकरणायोपगतौ "सुरद्विषश्चैव जगच्च सर्वमुपस्थाने समनन्ति प्रभावात्" भा०आ० ७६। ६समीपस्थाने "कुर्यात् यशांसाजनोपस्थानेषु मोक्षेत्"

पार०गृ०। उपस्थीयतेऽत्र आधारे ल्युट्। ७उपा-सनाधारे गृहादौ। "पार्थिवैर्भुभिः कास्मुपस्थानं दिहशुभिः" भा०स१४७ अ० "उपस्थानगृहैर्भूर्वन्त-भौमिश्च शोभितम्" भा०आ०१२८ अ० अनुसन्धानञ्च स्मरणम् तच्च चित्ते ऽनुभवाहितसंस्कारेणोपस्थित-त्वात् तथात्वम्।

**उपस्थानीय** त्रि० उप+स्था–"भव्येत्यादि" पा०नि० कर्त्तरि अनीयर्। १उपासके। कर्मणि अनीयर्। २उपास्ये त्रि०

**उपस्थापक** त्रि० उप+स्था-णिच् ण्वुल्। १स्मारके अनुभव जन्यसंस्कारेण चित्तेऽनुसन्धानसम्पादके। उपस्थितौ च समानविषयत्वं तन्त्रम् यद्विषयकोऽनुभवस्तद्विषयकः संस्कारस्तद्विषयिकैव स्मृतिरिति कार्य्यकारणभावः स च समवायेनैव, तेनान्यानुभवसंस्काराभ्यां नान्यस्य स्मरणम्। तत्र च सादृश्यादिज्ञानादि सहकारि कारणम् ततुसम-वहितसंस्कारस्यैव स्मृतौ हेतुत्वात्। उपेक्षात्मकज्ञानेन च संस्कारो न जन्यते। संस्कारश्च चरमफलनाश्यः तेन स्मृतधारायां न संस्कारान्तरकल्पनमिति वेदा०प०। कश्चिच्च दार्घकालरोगादिना जन्मान्तरेण वा तन्नाशः। जन्मान्तरन्तु कर्मविशेषाभावसहकृतमेव तन्नाशकम् तेन "जातिं स्मरति पौर्व्विकीम्" इत्यादिमन्वाद्युक्तकर्मविशेष-सत्त्वे न तन्नाशः। उपस्थापकञ्च यथा पदज्ञानं पदार्थस्य हस्तिज्ञानं हस्तिपकस्येत्यादि एकसम्बन्धिज्ञानस्यापर-सम्बन्धिस्मारकत्वनियमात् पदपदार्थयोश्च शक्तिसम्बन्धेन सम्बन्धितेति तथात्वम्।

भावे ल्युट्। उपस्थापन–उपस्थिति साधन व्यापारे उद्बो-धकसमवधाने तत्सहकारे। उपस्थापनं प्रयोजनमस्य प्र-प्रयत्न०ठ।उपस्थापनीय उपस्थापनसाधने उद्बोधकादौ त्रि० उप+स्थापि-कर्म्मणि अनीयर्। आर्य्ये त्रि०।

**उपस्थावरा** स्त्री उप+स्था–बा०कर्मणि वरच्। उपसेवनीये पुरुषमेधयज्ञाङ्गे देवताभेदे "सरोभ्योधैवरमुपस्थावराभ्यो-दाशम्" यजु० ३०,१६,

**उपस्थित** त्रि० उप+स्था–क्त। १समीपस्थिते, २समीपागते "तदनुपस्थितमग्निहोत्रं तस्मादुपस्थितमन्वनुपस्थिता इमाः प्रजाः प्रजायन्तेऽनुपस्थितो ह्येव स्त्रिया प्रजाया प्रजायते" शत०ब्रा० २,३,१, ११, "उपस्थिते-यं कल्याणी" रघुः। "इमंकुलीनमादाय मोहहत्ता-नुपस्थितान्" भट्टिः। ३प्राप्ते, उपस्थितपरित्यागे प्रमाणाभावात्" न्यायवाक्यम् "अनुपस्थितकल्पनाऽ

स्थाया" इति मेमां० ४वेदाप्रयुक्ते अनार्षे च। "अ-
नृत्वद्धुपस्थिते" पा०। "उपस्थितोऽनार्षः" सि०कौ०
"उद्बुद्धसंस्कारेण चित्ते उपगते ५स्मृते "तौ जौ गुरु-
णेयमुपस्थिता" वृ०र०उक्ते दशाक्षरपादके ६छन्दोभेदे
स्त्री "उपस्थितमिदं जसौ तसौ यदि गुरुः स्यात्" इति वृ०
र० उक्ते त्रयोदशाक्षरपादके ७छन्दोभेदे न०। ८सेविते
त्रि०। भावे क्त सेवने ९उपस्थाने न०। तेन जीवति
वेतना० ठक्। औपस्थितिक सेवनोपजीविनि त्रि०

**उपस्थिति** स्त्री उप+स्था-क्तिन्। १उपसेवने २उपगतौ
३स्मृतौ च "आसत्तिरव्यवधानेन पदजन्यपदार्थोपस्थितिः
सा० द०आसत्तिशब्दे उपसर्गशब्दे च उदा०।

**उपस्थूण** अव्य०स्थूणायां तत्समीपे वा अव्ययी०। १स्थूणा-
यामित्यर्थे २तत्समीपे च तत्र भवः परिमुखा०ञ्य। औप-
स्थूण्य तद्भवे त्रि०। उपगता स्थूणाम् अत्या०स०। ३स्तह-
स्थोपगते त्रि० ततो भवार्थे अण्, न ञ्य इति भेदः

**उपस्थेय** त्रि० उप+स्था-सेवार्थत्वात् कर्मणि यत्। उपसेव्ये
"वातसमं क्रत्वोपस्थेयं चेत्"कात्या०१७,१,२, "यदीदमै.
रन्द्रं विप्रैरुपस्थेयैरुपस्थितः" रामा०।

**उपस्नेह** पु० उप+स्निह-घञ्। स्निग्धस्य सैकाद्यवयवेन
क्लेदे "मूलयुक्त उपस्नेहात् प्रविश्य कुरुतेऽशरीम्"।
"अस्य मातुराहाररसवीर्यमभिवहन्ति तेनोपस्नेहेनास्या
भिवृद्धिर्भवति"। "सर्वशरीरावयवानुसारिणीनां रसव-
हानां तिर्य्यग्गतानां धमनीनामुपस्नेहो जीवयति" सुश्रु०।

**उपस्पर्श** पु०उप+स्पृश-घञ्। १स्पर्शे, २स्नाने च। उपस्पृ-
श्यन्ते इन्द्रियाण्यत्र आधारे घञ्। विधिना जलपान-
पूर्वकेमुखादिस्पर्शयुक्ते ३वैधाचमने तत्र हि "निःशब्दा-
पोहिरन्नेन्द्र उस्तमेतानुपस्पृशेत्। आस्यनासाक्षि कर्णांश्च
नाभिवक्षःशिरोऽंसकान्" छन्दो० आस्यनासिकादिस्पर्शो
विहित इति तस्य तथात्वम्। "तथेत्युपस्पृश्य पयः पवि-
त्रम्" रघौ आचमनार्थे उपातस्पृशतेः प्रयोगात्। भावे
ल्युट्। उपस्पर्शनम् तत्रार्थे न० "अथात उपस्पर्श-
नम्" कात्या०५,१०,२०

**उपस्रवण** न० उप+स्रु-भावे ल्युट्। सम्यक्स्रवणे उपरतं
स्रवणम् प्रा०स०। १विरतस्रवणे स्रवणनिवृत्तौ "पत्न्युद-
क्या दीक्षाद्यूर्पाणि निधाय सिकतास्वासीतोपस्रवणात्"
का०२५,११,१२, "ज्योतिष्टोमादौ दीक्षितस्य पत्नी रज-
स्वला दीक्षाद्यूर्पाणि मद्धादीनि निधाय सिकतासु आ-
सीत आ रजःस्रावविरमणात्" कर्कः।

**उपस्वत्व** न०उपगतमुत्पत्तिक्रमेण प्राप्तं स्वत्वं यत्र। स्वत्वा-
स्पदीभूतभूम्यादिभ्य उत्पन्नशस्यादिद्रव्ये। लोकव्यवहारः।
अन्यस्य द्रव्यस्य प्रतिग्रहार्जनाधीनं स्वत्वं न तु उत्पत्ति-
कालात्, अस्य तु तत्काले एव स्वत्ववत्त्वेन तथात्वम्।

**उपस्वावत्** पु० सत्राजितो नृपस्य पुत्रभेदे। "सत्राजितो
दश त्वासन् भार्यास्तासां शतं सुताः। ख्यातिमन्त-
स्त्रयस्तेषां भङ्गकारस्तु पूर्वजः। वातपतिश्चैव उ-
पस्वावांस्तथैव च" हरिवं०३८अ०

**उपस्वेद** पु० उप+स्विद-करणे घञ्। १वह्न्यादिसमीपस्था-
नात् जाते जर्लाणे "तयोरुष्णानि निदघ प्रस्रुटाः परि-
चारिकाः। सोपस्वेदेषु भाण्डेषु पञ्च वर्ष शतानि च" भा०
आ०१६अ० "सोपस्वेदेषु जम्बालमु तत्र हावालजलम्-
ष्मणा प्राप्तं यत्रभवतीति" नी०क० "अलाबुमध्याद्वितत्य
बीजं यत्नेन गोप्यताम्। सोपस्वेदेषु पात्रेषु हतपर्णेषु
भागशः" भा०व०१०६अ०। भावे घञ्। २उपतापे

**उपहत** त्रि०उप+हन-क्त। १तिरस्कृते "करोत्यखलोपहतं पृ-
थग्जनम्" किरा०। "उपहतं तिरस्कृतम्" मल्लि०। २दू-
षिते "किमेभिराशोपहतात्मवृत्तिभिः" कुमा० "आशया
उपहता दूषिता" मल्लि०। ३विनाशिते ४उत्पातग्रस्ते
अशुद्धद्रव्यसंयोगेन ५अशुद्धे च "मार्जारैर्मलैः सुराभिर्म-
द्यैर्वा यदुपहतं तदत्यन्तोपहतम्" विष्णुः। ६अभिभूते
"पथ्यमुपहत्य: सहसा" किरा०।

**उपहति** स्त्री उप+हन-क्तिन्। १उपघाते। २कार्यासामर्थ्ये
प्रयोजकापाटवे ३प्रतिहनने च।

**उपहत्नु** त्रि० उप+हन-क्नु। उपहन्तरि "मृगं न भीममु-
पहत्नुमुग्रम्" ऋ०२,३३,११,

**उपहन्तृ** त्रि० उप+हन-तृच् स्त्रियां ङीप्। उपघातके
(कटुकः) "स्तन्यशुक्रमेदसामुपहन्त्री चेति" सुश्रु०।

**उपहरण** न०उप+हृ-ल्युट्। १परिवेषणे २उपायनदाने च

**उपहर्त्तृ** त्रि० उप+हृ-तृच् स्त्रियां ङीप्। परवस्तु-
कर्त्तरि "अनुमन्ता विशसिता नियन्ता क्रयविक्रयी।
संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातकाः" मनुः।
२उपायनदातरि च।

**उपहव** पु०उप+ह्वे-अप् संप्र०गुणः। आह्वाने, "सोमा-
नुपसर्दं दृष्ट्वा तेऽन्योन्योपहवः गुहाम्" भट्टिः। "अ-
न्वयर्होतर्युपहवं काङ्क्षते" आ०श्रौ०५,७,४, "प्रति-
गृह्योपहवमिडाऽवेक्षेत" ६,१२,१,

**उपहव्य** पु० उपहूयतेऽत्र उप+ह्वे-बा०आधारे यत्। यज्ञ-

दशस्तोमकेषु पञ्चसु क्रतुषु मध्ये क्रतुभेदे। ते च क्रतवः कात्या० २२, दर्शिताः यथा। "सप्तदशाः पञ्च ६, "वक्ष्यमाणाः पञ्च क्रतवः सप्तदशस्तोमका भवन्तीत्यर्थ" कर्कः। "उपहव्योऽनिरुक्तो ग्रामकामस्य" ७ "उपहव्य इति विशेषसंज्ञा स ग्रामकामस्य भवति अंशकृतश्च" कर्कः। "अमृतेनाभिशस्यमानस्य" ८ "अलीकेनाभिशस्य मानस्याप्युपहव्यो भवति" कर्क "श्यावोऽश्वो दक्षिणा तं ब्रह्मणे ददाति" ६, इत्युपक्रम्याग्ने चत्वारस्तत्र दर्शिताः।

**उपहसित** न० उप+हस–भावे क्त। उपहासे (ठाट्टाकरा) निन्दासूचके हासभेदे। कर्मणि क्त। २हास्येन सूचितनिन्दे त्रि०।

**उपहस्त** पु० उपहस्ति भावे अच्। हस्तेन ग्रहणे प्रतिग्रहे तेन जीवति वेतना० ठञ्। औपहस्तिक तदुपजीविनि त्रि०।

**उपहस्ति** हस्तेन उपगच्छति उप+हस्त–णिच् नामधातुः उभ० सक० सेट्। उपहस्तयति ते उपा(ज)जीहस्तत त।

**उपहस्तिका** स्त्री उपगता हस्तम् अत्या० स०। संज्ञायां कन् अत इत्वम्। (बेटूया) वस्त्रादिनिर्म्मिते ताम्बूलाद्याधार पात्रभेदे। "उपहस्तिकायास्ताम्बूलं कर्पूरसहितमुद्धृत्य मह्यं दत्त्वा" दशकु०।

**उपहार** पु० उप+हृ–घञ्। (भेट) १उपढौकने उपायने "ततः सपर्य्यां सपशूपहाराम्" "रत्नपुष्पोपहारेण छायामानर्च्च पादयोः" रघुः कर्म्मणि घञ्। २उपढौकनाये उपायनद्रव्ये "बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्योपहारः" मेघ० उपगतः हारम् अत्या०स०। ३हारसमीपस्थे तदुपशोभके द्रव्ये। अव्ययी०। ४हारसमीपे अव्य०। उभयत्र "उरोभुवा कुम्भयुगेन जृम्भितं नवोपहारेण वयस्कृतेन किम्" नै०। "ज्योतिषां प्रतिबिम्बानि प्राप्नुवन्त्युपहारताम्" कुमा०। [प्रसक्तिं यत्र। कुन्तलदेशे हेम०।

**उपहालक** पु० हले प्रसृतः बा० वुण् उपगतो हालको हल-

**उपहास** पु० उप+हस–भावे घञ्। निन्दासूचके हास्ये (ठाट्टा) "फलमस्योपहासस्य सद्यःप्राप्स्यसि पश्य माम्" रघुः

**उपहास्य** त्रि० उप+हस–कर्म्मणि ण्यत्। उपहासेन निन्दनीये "गमिष्याम्युपहास्यताम्" रघुः।

**उपहित** त्रि० उप+धा–क्त। १निहिते २अर्पिते ३समीपस्थापिते ४आरोपिते च। "बलमुपहितशोभां तूर्णमायादयोध्याम्" भट्टिः। "पुष्पं प्रवालोपहितं यदि स्यात्" कुमा०। ५उपाधिसङ्कृते उपलक्षिते "अन्तःकरणोपहितं चैतन्यं जीवः अज्ञानोपहितचैतन्यमीश्वरः" वेदान्तप०।

**उपहूत** त्रि० उप+ह्वे–क्त संप्रसारणे दीर्घः। समाहूते आचितादित्वाद्दूतिपर्य्यक्तत्वेऽपि नान्तोदात्तता।

**उपहूति** स्त्री उप+ह्वे–क्तिन संप्रसारणे दीर्घः। आह्वाने "पटहप्रणादविहितोपहूतयः" माघः।

**उपहृत** त्रि० उप+हृ–क्त। १उपढौकिते उपहाररूपेण दत्ते "उपहृतपशुरुद्रः" सि० कौ०।

**उपहोम** पु० उपगतः होमं प्रधानहोमम् अत्या०स०। प्रधानयागसमीपे स्विष्टकृतः पूर्व्वं होतव्ये अग्निसोमादिदशदेवताके प्रत्येकं दशाहुतिके दशदक्षिणाके होमभेदे। स च शत०ब्रा० ११.४,३ ८, अवधि १७ पर्य्यन्तेषु दर्शितः। "सैतानुपहोमानपश्यन्" इत्युपक्रम्य "अग्निरन्नाद इत्यादि १ "सोमो राजेत्यादि २" "वरुणः सम्राडिति ३ "मित्रः क्षत्रमिति ४ "इन्द्रो बलमिति ५" बृहस्पतिर्ब्रह्मेति ६ "सविता राष्ट्रमिति ७ "पूषा भगमिति ८" "सरस्वती पुष्टिमिति ९" "त्वष्टा रूपाणामिति १०" इत्येतद्दश देवता उक्त्वा "तावएता दश देवता, हवींषि दशाहुतयो दश, दश दक्षिणाः" इति यथोक्तविशेषणतया दर्शितं।

**उपह्वर** उप+ह्वृ–आधारे घ। निर्जने रहस्योपगमाधारे "उपह्वरे पुनरित्यधिज्यं धर्मभिदम्" दशकु०। "यत्सोमुपह्वरे पिदत्" ऋ० ८, ६९, ६, "चरन्तमुपह्वरे नद्यः" ऋ० ८, ९६ १४, "उपह्वरे अत्यन्तगुह्यस्थाने" भा०। २अन्तिकस्थाने "ऊर्म्मीतरङ्गे जाङ्कव्याः समानीतामुपह्वरम्" भा० व० ३०८ अ० ३भूप्रदेशमात्रे च "उपह्वरे यदुपरा अपिन्वन्" ऋ० १, ६२, ६, "कौटिल्यलक्षणगतिवाचिनात् गतिमात्रं लक्ष्यते उपह्वरन्ति गच्छन्त्यस्मिन् घः इत्युपह्वरो भूप्रदेशः" भा०। कर्म्मणि घ। ४गन्तव्ये "उपह्वरेषु यदचिध्वम् १, ८७, २। "उपह्वरेषु गन्तव्येषु" भा० ५प्रान्तभागे। उपह्वरे गिरीणां संगथे च" ऋ० ८, ६, २८ "उपह्वरे प्रान्तभागे" भा०।

**उपह्वान** न० उप+ह्वे–ल्युट्। १आह्वाने २मन्त्रोच्चारणेनाह्वाने च "द्यावापृथिव्योरुपह्वाने षडवत्तम्" कात्या० ३, ४, १९, "आग्नीध्रे भक्षणं वषट्कारोपह्वानाभ्याम्" १०, ६, २२,

**उपांशु** अव्य० उप+अनुश–उ। १निर्जने "परिचेतुमुपांशु धारणाम्" रघुः। "उपांशु विजने" मल्लि०। २अप्रकाशे च। "जिह्वोष्ठौ चालयेत् किञ्चित् देवतागतमानसः। निजश्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः" इत्युक्तलक्षणे ३मन्त्रादेर्जपभेदे पु०। जपो हि त्रिविधः नरसिंह पु० उक्तः।

"त्रिविधो जपयज्ञः स्यात् तस्य भेदान् निबोधत । वाचिकश्च उपांशुश्च मानसश्च त्रिधा मतः । त्रयाणां जपयज्ञानां श्रेयान् स्यादुत्तरोत्तरः । यदुच्चनीचस्वरितैः स्पष्टशब्दवदक्षरैः । मन्त्रमुच्चारयेद्व्यक्तं जपयज्ञः स वाचिकः । शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयेत् । किञ्चिच्छब्दं स्वयं विद्यादुपांशुः स जपः स्मृतः । धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात् पदम् । शब्दार्थचिन्तनाभ्यासः स उक्तो मानसो जपः" । तेन स्वरादिव्यक्तवर्णोच्चारणयान् वाचिकः स्वयंग्रहणयोग्यः किञ्चिच्छब्दवान् उपांशुः । जिह्वोष्ठचालनमन्तरेण वर्णार्थानुसन्धानवान् मानसः" आ० त० । हारीतः "यदुच्चनीचस्वरितैः शब्दैः स्पष्टपदाक्षरैः । मन्त्रमुच्चारयेत् वाचा जपयज्ञस्तु वाचिकः । शनैरुच्चारयेन्मन्त्रं किञ्चिदोष्ठौ प्रचालयेत् । किञ्चिच्छ्रवणयोग्यः स्यात् स उपांशुर्जपः स्मृतः । धिया पदाक्षरश्रेण्या अवर्णमपदाक्षरम् । शब्दार्थचिन्तनाभ्यासस्तदुक्तं मानसं स्मृतम्" "तेषामुत्तरोत्तरफलतारतम्यमाह" मनुः "विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः । उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः" "उपांशुदेवतां यजत्यनिरुक्तं वा उपांशु इति शत० ब्रा० २,३,५,२, उक्ते ४ अनिरुक्तमात्रे ५मौने । "उपांशु वै रेतः सिच्यते" शत० ६,२,२,२, मैथुनकाले मौनविधानात् तस्योपांशुत्वम् । ६निगूढे च "अस्य त्वेकमुपांशु व्रतम्" भा० आ० ३अ० । परग्रहणायोग्यतया निगूढमित्यर्थः नील० क० ।

**उपांशुयाज** पु० यज–घञ् यज्ञाङ्गत्वात् प्रयाजादिवत् न कुत्वम् । उपांशु अनुष्ठेयो याजः । यज्ञभेदे तच्च शत० ब्रा० १,६,२,६१ दर्शयित्वा "एतेन वै देवाः उपांशुयाजेन वै यमसुराणामकामयन्त तमुपत्सर्य वज्रेण वषट्कारेणाघ्नंस्त एवैव एतेनोपांशुयाजेन पाप्मानं द्विषन्तं भ्रातृव्यमुपत्सर्य वज्रेण वषट्कारेण हन्ति तस्मादुपांशुयाजं यजते" तत्फलमुक्तम् । "उपांशुयाजमन्तरा यजति" प्रयाजादियागेतिकर्त्तव्यतायां श्रुतिः ।

**उपाक** पु० उप+अक–अच् । १परस्परं समीपगते सन्निहिते "आसुष्वयन्ती यजते उपाके" यजु० २९,११, उपाके परस्परसमीपगते" वेददी० । "आ भन्दमाने उषसा उपाके" ऋ० १,४,६, "आभन्दमाने उपाके" १,१४२,७, २अन्तिके च । "सूर उपाकचक्षसम्" ऋ० ८,६,२५, "उपाक इत्यन्तिकनाम" भा० ।

**उपाकरण** न० उप+आ+कृ–ल्युट् । १उपावर्त्तनमित्येवं स्तोत्र प्रैषे "नापव्याहरेदोपाकरणादुपावर्त्तध्वमित्येवाध्वर्युरुद्गातृभ्यः" शत० ब्रा० १,९,२,१२, "यदा उद्गातारः स्तोत्रं प्रारभेरन् तावदध्वर्युप्रैषणादनन्तरं नापव्याहरेत्" भा० "प्राग्वा च प्रवदितोः प्रातरनुवाकोपाकरणम्" कात्या० ९,१,१०, । "सोमे च पशुं पश्चात्तोपकरणात्" १,१,१७, उपावर्त्तध्वमित्ययं स्तोत्रप्रैषः उपाकरणशब्देनोच्यते कर्कः । तथा प्रैषणे हि स्तोत्रस्यारम्भणात्तस्य तथात्वम् । २यज्ञीयपशुसंस्कारविशेषे च "गोतमस्तोमः प्रथमं द्वितीयस्याह्नः पशोरुपाकरणकालेऽश्वमानीय बर्हिर्वेद्यावेवास्थापयेयुः" आश्व० श्रौ० १०,८,२ । "तमवस्थितमुपाकरणाय यदक्रन्दस्तत्थ्येकादशभिः स्तुत्य प्रणुवन्" ५ "पशुकल्पेन पशुं संस्थाप्य प्रोक्षणोपाकरणवर्ज्जं वपामुत्खिद्य जुहुयात्" आश्व० गृ० २,४,१५, १आरम्भे च । "अथातोऽध्यायोपाकरणम्" आश्व० गृ० ३,५,२, "उपाकरणमारम्भः" ना० ह० । उपाकर्म्म शब्दार्थे च तत्प्रकारकालादिकं वक्ष्यते

**उपाकर्म्मन्** न० उप+आ+कृ-करणे मनिन् । येन कर्मविशेषेण वर्षान्ते पुनर्वेदः पठितुमारभ्यते तादृशे, कर्मभेदे तच्च "अथातोऽध्यायोपाकरणम्" इत्युपक्रम्य आश्व० सू० दर्शितम् तत्कालकर्त्तव्यतादि च तत्रैवोक्तः विशेषस्तु नि० सि० उक्तो यथा "तत्र बह्वृचानां प्रयोगपारिजाते शौनकः । "अथातः श्रावणे मासि श्रवणर्क्षयुते दिने । श्रावण्यां श्रावणे मासि पञ्चम्यां हस्तसंयुते । दिवसे विद्धीतैतदुपाकर्म यथोदितम् । स्वाध्यायोपाकृतिं कुर्य्यात्तत्रोपासनवह्निना" अत्र पौर्णमासी उपसंहारन्यायेन यजुर्वेदपरेति हेमाद्रिः । अत्र हस्तयुक्ता पञ्चम्युक्ता कारिकयाऽपि "तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते" इति । केवलपञ्चम्यां हस्तयुतेऽन्यस्मिन् वा दिन इति तु हेमाद्रिः । उपासनवह्निनेति तु "कर्मद्वयमिदं केचिल्लौकिकाग्नौ प्रकुर्वते" इति कारिकोक्तलौकिकाग्निना विकल्प्यते । तत्र "अध्यायोपाकरणे" इति सूत्रात् शिष्यत्वेन तदधिकारित्वात् शाखाग्नौ "नाप्यस्याग्न्यन्वाधानमुपवासादि" इति निषेधाल्लौकिक एव । तदभावे स्मार्त्त इति निर्णयः । यद्यपि दीपिकायाम् । "वेदोपाकृतिरोषधिप्रजनने पक्षे सिते श्रावणे" इति शुक्लपक्षोऽपि सर्वेषां मुख्यकालत्वेनोक्तः । वक्ष्यमाणगार्ग्यवचनेन छन्दोगान् प्रति विहितस्य तस्याविरोधिता सर्वान् प्रति निवृत्तिश्च । तथापि श्रावणमाससम्बन्धस्य सर्वोक्तत्वात् कृष्णपक्षेऽपि कार्य्यमिति वृद्धाः । तथा च आश्व०

सूत्राणि "अथातोऽध्यायोपाकरणम्" "ओषधीनां प्रादुर्भावे" "श्रवणेन श्रावणस्य पञ्चम्यां हस्तेन वा"। अत्र श्रवणो मुख्योऽन्यो गौणः। तस्याहर्द्वययोगे हेमाद्रौ व्यासः। "धनिष्ठासंयुतं कुर्य्याच्छ्रावणं कर्म यद्भवेत्। तत्कर्म सकलं ज्ञेयमुपाकरणसंज्ञितम्। श्रवणेन तु यत् कर्म उत्तराषाढसंयुतम्। संवत्सरकृतोऽध्याय-स्तत्क्षणादेव नश्यतीति"। प्रयोगपारिजाते गार्ग्योऽपि। "उदयव्यापिनी त्वेव विष्ण्वृक्षं घटिकाद्वयम्। तत्कर्म सकलं ज्ञेयं तस्य पुण्यमनन्तकमिति" पूर्व्वेद्युरुत्तराषाढायोगे, परेद्युः श्रवणाभावे घटिकाद्वयन्यूने वा पञ्चम्यादौ कार्य्यम्। न तु पूर्व्वविद्धायां सङ्गवेऽपि, अपवादाभावात्। किन्तु परेद्युः सङ्गवास्पर्शे निषिद्धपूर्व्वपक्षे किं मानम्। सङ्गववाक्यं श्रवणवाक्यं वेति चेत् तर्हि श्रौतिकवाक्यादश्वपक्षवाक्याच्च मासनिश्चायाम-प्युपादानं स्यादिति महत्यापद्यत्यम्। एतेन पर्व्वाप्यौ-दयिकं व्याख्यातम् निषेधप्रवेशस्योभयत्र साम्यात्। श्रवणयुतदिने संक्रान्त्यादौ तु "उपाकर्म न कुर्व्वन्ति क्रमात् सामर्ग्यजुर्विदः। ग्रहसंक्रान्तियुक्तेषु हस्तश्रवण-पर्व्वसु" इति हेमाद्रौ निषेधात् पञ्चम्यादयो ग्राह्याः। अत्र ग्रहसंक्रान्तिदिने येषां प्राप्तन्तैः सर्व्वैरुपाकर्म न कार्य्यम् इत्येको वाक्यार्थः। तेनाथर्व्ववेदिनामपि निषेधः। अन्यथा हस्तादित्रये प्रत्येकं ग्रहसंक्रान्त्योः षड्वाक्य-कल्पनापत्तेः। मदनरत्नेऽपि "यदि स्यात् श्रावणं पर्व्व ग्रहसंक्रान्तिदूषितम्। स्यादुपाकरणं शुक्लपञ्चम्यां श्रावणस्य तु" स्मृतिः, स्मृतिमहार्णवे "संक्रान्तिर्ग्रहणं वापि यदि पर्व्वणि जायते। तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते"। तत्रापि प्रयोगपारिजाते वृद्धमनुकात्यायनौ। "अर्द्धरात्रादधस्ताच्चेत् संक्रान्तिर्ग्रहणं यदा। उपाकर्म न कुर्व्वीत परतश्चेन्न दोषकृदिति"। मदनरत्ने गार्ग्योऽपि। "यद्यर्द्धरात्रादर्व्वाक् तु ग्रहः संक्रमणं वा। नोपाकर्म तदा कुर्य्याच्छ्रावण्यां श्रवणेऽपि वा"। एतेन ग्रहणकाले श्रवणसत्त्वे एव निषेधो नान्यथेति मूर्खशङ्का-परास्ता, ग्रहविशिष्टानां हस्तश्रवणपर्व्वणां प्रत्येकं निषेधे तद्युक्तोपाकर्मनिषेधे च विशिष्टोद्देशे वाक्यभेदात् पञ्चम्यां संक्रान्तौ निषेधाभावापत्तेश्च। तेनार्द्धरात्रात् पूर्व्वं ग्रहणसत्त्वमात्रे उपाकर्मनिषेधो न तद्योगे। यत्तु "प्रतिपन्मिश्रिते नैव नोत्तराषाढसंयुते। श्रवणे श्रावणं कुर्य्याद्ग्रहसंक्रान्तिवर्ज्जिते" इति प्रतिपन्मिश्रितनिषेधकं वचनं तन्निर्मूलम्। हेमाद्रौ निगमः। "ग्रहयोगो गुरुं हन्ति संक्रान्तिः शिष्यघातिनी। तयोरन्यतरे जाता उपाकर्म्मणि वैष्णवे" अत्र च "वेदोपाकरणे प्राप्ते कुलीरे संस्थिते रवौ। उपाकर्म न कर्त्तव्यं कर्त्तव्यं सिंहयुक्तके" इति वचनं देशान्तरविषयम्। "नर्म्मदोत्तरभागे तु कर्त्तव्यं सिंहयुक्तके। कर्कटे संस्थिते भानावुपाकुर्य्यात्तु दक्षिणा" इत्या० वचनात् इति प्रयो० पा० उक्तम्। पराशरमाधवीयेऽप्येवम्। सामगानां सिंहस्थरवावुक्तिर्हस्तविषयमेवेदं, पुरोडाशचतुर्द्धाकरणवदुपसंह्रियत इति। न तु बह्वृचादिपरम्। तेषां सूत्रे चान्द्रश्रावणोक्तेः सौरे पञ्चम्ययोगात् सामान्येन सौरविशेषस्य बाधायोगादिति तु वयं पश्यामः। यत्तु कालादर्शे "अध्यायानामुपाकर्म श्रावण्यान्तैत्तिरीयकाः। बह्वृचाः श्रवणे कुर्युः सिंहस्थोऽर्को भवेद्यदि। सहस्यशुक्लपञ्चम्यां तद्वद्ग्रहणसंक्रमे। असिंहार्के प्रौष्ठपद्यां श्रवणेन व्यवस्थयेति" तन्मूलालिखनात् सूत्रविरोधाच्च चिन्त्यम्। सूत्रे हि श्रवणेन श्रावणस्येति चान्द्रमास एवोक्तो न सौरः तस्य पञ्चम्यभावात् श्रुतिलक्षणाभ्यामुभयपरत्वे इतरेतरविरोधाच्च। तेन सिंहस्थोऽर्को भवेद्यदि तदा कर्केऽपि ग्रहणसंक्रमे सति असिंहार्के शुक्लपञ्चम्यां श्रवणे वा बह्वृचाः, प्रौष्ठपद्यान्तैत्तिरीया इति व्याख्येयम् तेषां सौरमासाभावात्। श्रावणे मलमासादौ बह्वृचपरिशिष्टे "अब्दोषधयस्तस्मिन् मासि तु न भवन्ति चेत्। तदा भाद्रपदे मासि श्रवणेन तदिष्यत इति"। "तस्याप्यनुक्रमे तु "कुर्य्यादेव तदा शिष्यकमित्याचक्षते" इति सूत्रात्। अशक्तौ भवं वार्षिकम्। एतच्च शुक्रास्तादावपि कार्य्यम्। "उपाकर्म्मोत्सर्जनं च पवित्रदमनार्पणमिति" दमनारोपणे लिखितवचनात् "नित्ये नैमित्तिके जप्ये होमयज्ञक्रियासु च। उपाकर्म्मणि चोत्सर्गे ग्रहवेधो न विद्यते" इति प्रयोगपारिजाते हेमाद्रौ च संग्रहोक्तेः। पर्व्वणि ग्रहणे सति पूर्व्वं त्रिरात्रादिवेधाभावं वक्तुमिदम्। तेन पर्व्वणि ग्रहणेऽपि चतुर्द्दश्यां श्रवणे कार्य्यमिति हेमाद्रिः। प्रथमारम्भस्तु न भवति "गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्द्धकेऽपि वा। तथाधिमाससंसर्गे मलमासादिषु द्विज। प्रथमोपाकृतिर्न स्यात् कृता कर्म्मविनाशकृदिति" तत्रैव कश्यपोक्तेः। अत्र प्रथमारम्भे हविश्राद्धं कुर्य्यादिति। नारायणवृत्तौ एतच्चाधिमासे न कार्य्यम् "उपाकर्म्म तथोत्सर्गः प्रसवाहोत्सवाष्टकाः। मास-

हस्तौ पराःकार्य्या वर्जयित्वा तु पैतृकामिति” ज्योतिःपराशरोक्तेः “उत्कर्षः कालवृद्धौ स्यादुपाकर्म्मादिकर्म्मणि । अभिषेकादिवृद्धीनां न तत्कर्षो युगादिष्विति” कात्यायनोक्तेश्च । यत्तु “उपाकर्म्म च चोत्सर्गं च्चोर्तदिष्टं इत्यादिति” इति च्छन्दोगपरिशिष्टवचनं तत्सामगविषयम् तेषां सिंहार्के एवोक्तेः । एतच्चापराह्णे कार्य्यम् । “उपाकर्मापराह्णे स्यादुत्सर्गः प्रातरेव त्विति” “अध्यायानामुपाकर्म्म कुर्य्यात्तत्र तु पराह्णके । पूर्व्वाह्णे तु विसर्गः स्यादिति वेदविदो विदुरिति” हेमाद्रौ गोभिलोक्तेः । वस्तुतस्तु ‘भवेदुपाकृतिः पौर्णमास्यां पूर्व्वाह्ण एव त्विति’ प्रचेतोवचनात् पूर्व्ववाक्यं सामगविषयम् । तेषामपराह्णे एवोक्तेरित्यनुपदं वक्ष्यते । दीपिकापि । “अस्य तु विधिः पूर्व्वाह्णकालः स्मृत” इति । याजुषास्तु पर्व्वणि कुर्य्युः । तच्चापस्तम्बैरौदयिकं ग्राह्यम् । अन्यैस्तु पूर्व्वम् । “पर्व्वण्यौदयिके कुर्य्युः श्रावण्यां तैत्तिरीयकाः । बह्वृचाः श्रवणे कुर्य्युर्ग्रहसंक्रान्तिवर्जिते” इति गर्गोक्तेः “संप्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये । स्नानं कुर्व्वीत मतिमान् श्रुतिस्मृतिविधानतः” । पर्व्वण्यौदयिके पुनः । अतो भूतदिने तस्मिन्नोपाकरणमिष्यते” इति कालिकापुराणात् । “अथ चेद्दोषसंयुक्तं पर्व्वणि स्यादुपाक्रिया । दुःखशोकामयग्रस्ताराष्ट्रे तस्मिन् द्विजातयः” इति मदनरत्ने गर्गोक्तेः । अत्र सिक्वाभट्टीये विशेषः । “श्रवणः श्रावणं पर्व्व सङ्क्रान्तिर्ग्रहणं यदा भवेत् । तदैवौदयिकं कार्य्यं नान्यदौदयिकं भवेत्” । पराशरमाधवीयेऽपि गार्ग्यः “श्रावणी पौर्णमासी तु सङ्गवात्परतो यदि । तदैवौदयिकी ग्राह्या नान्यदौदयिकी भवेत्” । कर्मकालमाह कात्यायनः । “श्रावण्यां प्रौष्ठपद्यां वा प्रतिपत् पर्व्वसंयुक्तैः । विद्वा स्याच्छन्दसां तत्रोपाकर्मोत्सर्जनं भवेत्” । अत्र पौर्णमासी श्रवणहस्तयोरुपलक्षणं तेन तावपि सङ्गवव्याप्तौ ग्राह्यौ । “उदये षड्घटीस्पर्शे स्थिते पर्व्वणि वाकर्भे । कुर्य्युर्नभस्युपाकर्म्म ऋग्यजुःसामगाः क्रमात्” इति पृथ्वीचन्द्रः । “त्रिमुहूर्त्ते घटिकाद्वयमिति” पूर्व्वोक्तविरोधात् सामान्यवाक्यादौदयिकी कर्म्मपर्य्याप्ता ग्राह्या न पूर्व्वा । सङ्गवानन्तपूर्व्वविद्धापवादाभावात् भाद्रादौ कालान्तरे वास्तु न तु निषिद्धम् । न हि प्रौष्ठलाभे निषिद्धमाचरणीयं युक्तम् । अतएव परेद्युः सङ्गवव्याप्तौ पूर्व्वनिषेधः । तदभावे तु नेति मूलव्यवस्थाप्यपास्ता विधिवैयर्थ्यात् मासनिषेधे तथापत्तेश्च । पूर्व्वविद्धावचनबाधो हि वा युज्यते । एवं श्रवणेऽपि ज्ञेयम् । एतच्च बह्वृचाधिकारपरं तेन यथाग्निहोत्रादौ सायं प्रातः काल-

बाधे सामान्यस्य जीवनार्थकालस्य रनुगामग । यथा प्रौष्ठाश्वयुगादाभावे यागादिप्रकर्षनिषेधकारीदक्षेपः तथात्र सङ्गवाभावेऽनिषिद्धावश्यकर्म्मपर्य्याप्तौदयिके कालान्तरे वानुष्ठानं न तु कदापि निषिद्धे अपवादाभावे उत्सर्गस्यैव प्राप्तेः । कात्यायनादीनान्तु दिनद्वये पूर्व्वाह्णव्याप्तौ एकदेशस्पर्शे वा पूर्व्वैवेति हेमाद्रिः । घटिकाद्वयमिति पूर्व्वोक्तविरोधात् तेन प्रायश्चित्तमात्रपरमिदम् । यदपि “श्रावणी दीपनवमी दूर्व्वा चैव हुताशनी । पूर्व्वविद्धा प्रकर्त्तव्या शिवरात्रिर्बलेर्दिनमिति” ब्रह्मवैवर्त्तम् तद्बह्वृचपरिशिष्टविषयमिति हेमाद्रिः । मदनपारिजातेऽपि पूर्व्वविद्धायां श्रावण्यां वाजसनेयिनामुपाकर्मोक्तम् मदनरत्नेऽपि “पर्व्वण्यौदयिके कुर्य्युः श्रावण्यां तैत्तिरीयकाः” इति बह्वृचपरिशिष्टाद्बह्वृचान् प्रति कर्म्मविधानार्थं प्रवृत्ते तत्र तैत्तिरीयककर्म्मविध्ययोगात् पूर्व्वोक्तकालिकापुराणादौ सामान्यत औदयिकपर्व्वप्राप्तेस्तन्निषेधेन बह्वृचानां श्रवणविधानात्तैत्तिरीयकपदम् अनुवादस्तस्य च प्राप्त्यधीनत्वात् प्राप्तेश्च यजुर्व्वेदमात्रपरत्वात् सर्व्वयजुर्व्वेद्युपलक्षणार्थम् । अवयुत्यानुवादो वा । न तु विधायकम् । तेन विशेषविधिना उपसंहारः स्यात् । अनुवादत्वाल्लक्षणा न दोषः । अन्यथौदयिकपर्व्वविशिष्टोपाकर्म्मोद्देशेन कर्त्तृविधौ कर्त्तृविशिष्टे चौदयिकपर्व्वविधौ वाक्यभेदापत्तेः । तस्मात्तैत्तिरीयकपदाविवक्षया सर्व्वयजुर्व्वेदिनामौदयिकमेव पर्व्वोक्तम् । तत्र न तावत्परिशिष्टे बह्वृचान् प्रत्येव विधिः । धनिष्ठाप्रतिपद्युक्तत्वात् ‘त्वाष्ट्रर्क्षसमन्वितमित्यादि तद्दाहृते एव परिशिष्टे वेदान्तरधर्म्मविधीनां दर्शनात् । नाप्यनुवादोऽयम् कालिकापुराणाद्बह्वृचादीनामपि तदापत्तेः कुर्य्युरित्यस्य विधित्वेन तस्यैवार्थवादत्वेनैतत्प्राप्तानुवादित्वाच्च । न च तैत्तिरीयकाणां तत्र तद्विधिरस्ति येनानुवादः स्यात् । न च वाक्यभेदः । तैत्तिरीयकपदमात्रस्य कर्म्ममात्रस्य वा उद्देश्यत्वायोगेन कृविशिष्टार्थवद्दत्वर्णं आख्यातमुपनयीतेतिवज्ञागत्या विशिष्टोद्देश्यत्वात् । अन्यथोत्तरार्द्धे बह्वृचपदस्याऽप्यविवक्षापत्त्या श्रावणस्य सर्व्वसाधारण्यापत्तेः । तस्मात् हेमाद्रिमतमेव युक्तमिति दिक् । इदं च । शिष्यानध्यापयत आवश्यकेऽपि अनध्यापयतो नाधिकार इति कर्कः । श्रावण्यामपि यद्यपि ग्रहणादिदुष्टायां वातीयभिन्नैः प्रौष्ठपद्यां कार्य्यं तैस्तु श्रावणपञ्चम्याम् । “संक्रान्तिर्ग्रहणं वापि पौर्णमास्यां यदा भवेत् । उपा-

श्रुतिस्तु पञ्चम्यां कार्या वाजसनेयिभिरिति” स्मृतिमहार्णवे वाजसनेयिपञ्चम्यादिति हेमाद्रिः। इदं खलूक्तकालपरत्वात् बह्वृचपरमपि। शाङ्खायनैस्तु हस्ते कार्यम्। आपस्तम्बैराथर्वणैश्च प्रौष्ठपद्याम्। यत्तु बौधायनः “श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्येत्युक्ते। तत् प्रौष्ठपद्यामपि दोषे आषाढ्यां कर्त्तव्यमित्येवमर्थम्। तच्छाखीयविषयं वा। सामगास्तु श्रावणे हस्ते कुर्युः। “बह्वृचाः श्रावणे चैव हस्तर्क्षे सामवेदिनः” इति निर्णयामृते गोभिलोक्तेः। सोऽप्युत्तरः “धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्विताम्। श्रावणं कर्म्म कुर्वीरन् ऋग्यजुःसामपाठकाः” इति मदनरत्ने परिशिष्टोक्तेः। गर्गोऽपि “सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णेऽविवरे बहिः। छन्दोगाभिलिताः कुर्युरुत्सर्गं स्वस्वछन्दसाम्। शुक्लपक्षे तु हस्तेन उपाकर्म्मापराह्णिकमिति”। पुष्यर्क्षे पूर्वाह्णे उत्सर्गः आपराह्णिकमुपाकर्म्मेत्यन्वयः। अविवरे ग्रहादिदोषरहिते। अनयोर्विशेषः पूर्व्वमुक्तः। प्रयोगपारिजाते गोभिलः “उपाकर्म्मोत्सर्जनं च वनस्थानामपीष्यते। धारणाध्ययनाङ्गत्वाद्गृहस्थानां ब्रह्मचारिणाम्। उत्सर्जनं च वेदानामुपाकरणकर्म्म च। अकृत्वा वेदजाप्येन फलं नाप्नोति मानवः”। सर्वथा लोपे तु कृच्छ्र उपवासश्च “वेदोदितानां नित्यानामिति” मनुनाऽभोजनोक्तेः। एवमुत्सर्गेऽपि।

अथ प्रसङ्गाद्वेदोत्सर्ज्जनमुच्यते। तच्च पौषमासे रोहिण्यां तत्कृष्णाष्टम्यां वा कार्य्यम्। “पौषमासस्य रोहिण्यामष्टकायामथापि वा। जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिरिति” याज्ञ० उक्तेः। श्रावण्यां प्रौष्ठपद्यां चोपाकृतौ क्रमेण पौषशुक्लप्रतिपदि, माघशुक्लप्रतिपदि च कार्य्यम् “अर्द्धपञ्चमासानधीयीतेति” तेनैवोक्तेः। यत्तु हारीतः “अर्द्धपञ्चमान्मासानधीत्योर्द्ध्वमुत्सृजेत् एकार्द्धषष्ठान्वेति”। तदाषाढ्युपाकर्म्मविषयम्। बौधायनास्तु पौष्यां माघ्यां वा कुर्य्युः। “पौष्यां माघ्यां वोत्सृजेदिति” तत्सूत्रात्। तैत्तिरीयैस्तु तैष्यां कार्य्यं “तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेदिति” तत्सूत्रात्। बह्वृचैस्तु माघ्यां कार्य्यम् “अध्यायोत्सर्ज्जनं माघ्यां पौर्णमास्यां विधीयते” इति कारिकोक्तेः। कातीयास्तु भाद्रपदे कुर्युः। “उत्सर्गश्च तदा तिष्यतिथ्यां प्रौष्ठपदेऽपि वेति” कात्यायनोक्तेः। सामगास्तु सिंहार्के पुष्ये कुर्य्युः। तथा च सिंहे रवौ चेति गार्ग्यवचनं पूर्व्वमुक्तम्। सर्वैरुपाकर्म्मदिने वा कार्य्यम्। “पुष्ये तूत्सर्ज्जनं कुर्य्यादुपाकर्म्मदिनेऽथ वेति” हेमाद्रौ खादिर गृह्योक्तेः। यदा सिंहस्थे सूर्य्ये सति तन्मध्यस्थहस्तनक्षत्रात्प्राक् पुष्यः कर्कस्थो भवति तदा तस्मिन् पुष्ये उत्सर्गं कृत्वा तदुत्तरहस्ते उपाकर्म सामगाः कुर्युः। “मासि प्रौष्ठपदे हस्तात् पुष्यः पूर्वो भवेद्यदि। तदा तु श्रावणे कुर्य्यादुत्सर्गं छन्दसां द्विजः” इति तत्रैव परिशिष्टोक्तेः। अत्र द्वावपि सौरौ मासौ ज्ञेयौ तेषां सौरस्यैवोक्तेः। अत्र विशेषमाह कार्ष्णाजिनिः। “उपाकर्म्मणि चोत्सर्गे यथाकालं समेत्य च। ऋषीन्दर्भमयान् कृत्वा पूजयेत्तर्पयेत्ततः। संप्राप्ते श्रावणस्यान्त पौर्णमास्यां दिनोदये। स्नानं कुर्व्वीत मतिमान् श्रुतिस्मृतिविधानतः। उपाकर्म्मादिकं प्रोक्तमृषीणां चैव तर्पणम्। शूद्राणां मन्त्ररहितं स्नानं दानं प्रशस्यते”। “उपाकर्म्मण्युत्सर्गे च त्रिरात्रं पक्षिणीमहोरात्रं वानध्याय” इति मिताक्षरायामुक्तम्। अत्र नदीनां रजोदोषो नास्ति। “उपाकर्म्मणि चोत्सर्गे रजोदोषो न विद्यते इति” गर्गोक्तेः। “उपाकर्म्मणि चोत्सर्गे प्रेतस्नाने तथैव च। चन्द्रसूर्य्यग्रहे चैव रजोदोषो न विद्यते” छन्दो० उक्तेश्च उपाकर्म्मणि चोत्सर्गे युगादौ मृतवासरे। निषेधेऽपि दिने कुर्य्यात्तर्पणं तिलमिश्रितम्” स्मृतिः। “त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवम्। मङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्य्ययोरिति” सामान्यतो ग्रहणदिननवकनिषेधस्तु अनियतकालीनकर्म्मपरः न तु नियतकालीनकर्म्मपरः। “नित्ये नैमित्तिके जप्ये होमे यज्ञक्रियासु च। उपाकर्म्मणि चोत्सर्गे ग्रहदोषो न विद्यते इति नि० सि० धृतोक्तेर्नोपाकर्म्मणि ग्रहणवेधदोषः। आषाढ्यामपि उपाकर्म्मविधानात् आषाढीप्रयोजकत्वात् दशस्यापाठनामता वेदग्रहणस्य दशपूर्व्वकत्वात् तथात्वमिति बोध्यम्। करणे क्तिन् उपाकृतिरप्यत्र स्त्री कर्म्मकरणयोरभेदोपचारात् उपाक्रियाप्यत्र स्त्री।

**उपाकृत** त्रि० उप+आ+कृ—क्त। यज्ञे हननार्थं १कृतसंस्कारे पशौ, “अनुपाकृतमांसानि देवान्नानि हवींषि च” अभक्ष्योक्तौ मनुः। “पशुयागादौ मन्त्रकुलेन पशोः स्पर्शः उपाकरणं तद्रहितपशुरनुपाकृतः” कुल्लू०। “पशुश्चेदुपाकृतः पलायेत वायवे त्वमनुद्दिश्य तद्रूपं तद्वयसमालभेत” कात्या० २५,८,१ २स्तोत्रप्रैषेण प्रेषिते च “उपाकृत उद्गातार आहोत्प्रैषात्” कात्या० २,२,१८। ४आरब्धे च। भावे क्त। ५उपाकरणे ६यज्ञियपशुसंस्कारे ७आरम्भे च न०। ततः इष्टा० कर्त्तरि इनि। उपाकृतिन् उपा-

कारणकर्त्तरि त्रि० स्त्रियां ङीप् उपाकर्त्तिनी ।

**उपाग्नि** अव्य० अग्नेः समीपम् अव्ययी० नि० टच्समा० । नेत्रसमीपे "कुलतीरतूलशालाजसमव्ययीभावे" पा० अन्तोदात्तता अत्रैव अव्ययीभावे निर्देशात् नि० टच्समा०

**उपाख्या** स्त्री उप+आ+ख्या—भावे अ । १प्रत्यक्षे "द्वितीयाऽ-चानुपाख्ये" पा० । उप ख्या प्रत्यक्षं तदन्ये ऽनुमान-गम्ये इत्यर्थः । २शब्दादिभिर्निर्वचने च । "नामविज्ञान-युक्तानां निरुपाख्या निरञ्जना । केवल्या या गतिर्देवः परमो स गतिर्भवेत्" भा० अनु० २६ अ० । निरु-पाख्योऽभावः । तस्य च भावभिन्नत्वादिना यथा निरुक्ति-मशक्यत्वं तथाऽभावशब्दे उक्तम् "प्रतिसंख्याऽप्रतिसंख्या-निरोधावाकाशञ्चेति" शा०सू० भाष्ये "तदवस्तु अभाव-मात्रं निरुपाख्यम्" "न हि भावानां निरन्वयो निरु-पाख्योविनाशः सम्भवति" "निरोधद्वयमाकाशञ्चेति निरु-पाख्यम्" । "तत्र निरोधद्वयस्य निरुपाख्यत्वम् पुरस्ता-न्निराकृतमाकाशस्येदानीं निराक्रियते" "आकाशे च न युक्तो निरुपाख्यत्वाभ्युपगमः" इत्येवम् सौगतमतनिरा-करणे अभावपरतयाऽसकृदुक्तम् ।

**उपाख्यान** न० उप+आ+ख्या—ल्युट् । १पूर्ववृत्तकथने "रामोपाख्यानमत्रैवेति" भा०आ०१अ० । एवं नलोपा-ख्यानाद्योपाख्यानानि बहून्युपाख्यानानि तत्र सन्ति । "चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम् । उपाख्यानै-र्विना तावत् भारतं प्रोच्यते बुधैः" भा०आ० १अ० । २विशेषकथने । "सर्वाख्यानं श्रुतं ब्रह्मन् अतीव परमा-द्भुतम् । अधुना श्रोतुमिच्छामि दुर्गोपाख्यानमद्भु-तम्" "शृणु नारद वक्ष्यामि कथोपाख्यानमद्भुतम्" इति च ब्रह्मवै० । तत्र साधु कन् । उपाख्यानक तत्प्रति-पादके ग्रन्थभेदे स्वार्थे कन् । कथनमात्रे च । [गते च ।

**उपागत** त्रि० उप+आ+गम—क्त । १समुपस्थिते २अभ्युप-

**उपागम** पु० उप+आ+गम "यमः समुपनिविगणेषु" पा० अप् । १स्वीकारे २समुपगमने च ।

**उपाग्रहण** न० उप+आ+ग्रह—ल्युट् । संस्कारपूर्वकवेद-प्रारम्भे अमरटीकायां रायमु० ।

**उपाग्रहायण(णि)** अव्य० आग्रहायण्याः समीपं अव्ययी० वा० टच्समा० । आग्रहायणीसमीपे

**उपाङ्ग** न० उपमितमङ्गेन अवा०स० । १प्रधानस्याङ्गोपयोगिनि "साङ्गोपाङ्गैरहोरात्रम्" इत्यमरः २वेदाङ्गवज्ञे शास्त्रभेदे उपाङ्गानि शास्त्राणि च "पुराणन्यायमीमांसाधर्मशा-स्त्राणि । चत्वार्युपाङ्गानि" इत्युक्तानि तेषां अङ्गवत् वेदार्थस्य बहुल करणादुपाङ्गत्वम् । "स ङ्गोपाङ्गोपनिषदः" हरि० २५अ० "साङ्गोपाङ्ग श्चतुर्वेदाः सरहस्याः क्रमेण तु" विक्र-मो० । "यद्वेदशास्त्रं तच्चापि कृतकर्मासिन प्रतिष्ठितम् । तत्र पुत्रं महावाहो साङ्गोपाङ्गं महात्मनि" भा०अ०१०० अ० । अङ्गं देहस्तदुपयोगिनि ३प्रत्यङ्गे प्रत्यङ्गानि च अङ्गशब्दे ७२ पृ० दर्शितानि ४तिलके पु० जटाधरः ।

**उपाजिन** त्रि० उपगतोऽजिनम् अत्या०स० । चर्मोपगते उ-पात् अजिनान्ततत्पुरुषत्वात् अन्तोदात्तता । अजिनस्य समीपम् अव्ययी० । २चर्मसमीपे अव्य० । निरुदकादि-त्वात् अन्तोदात्तता । उपगतमजिनं येन प्रा०ब० । ३उपगतचर्मके त्रि० अत्र प्रकृतिस्वरः इति भेदः

**उपाजे** अव्य० उप+अज—बा० के वीसामाभावः । दुर्बलस्य बला-धाने, "उपाजे अन्वाजे" पा० कृञि परे तस्य गतित्वम् तेन समासे उपाजेकृत्य असमासे तु उपाजे कृत्वेति दुर्बलस्य बलमाधायेत्यर्थः" सि०कौ० । एतौ च विभक्तिप्रतिरूप-काव्यये इत्यन्ये

**उपाञ्जन** न० उप+अन्ज—ल्युट् । १लेपने "मार्ज्जनोपाञ्ज-नैर्वेश्म पुनः पाकेन मृण्मयम्" मनुः २गोमयादिनानु-लेपने च "सम्मार्जनोपाञ्जनेन सेकेनोल्लेखनेन च । गवाञ्च परिवासेन भूमिः शुध्यति पञ्चभिः" "ज्ञानं तपोऽग्निरा-हारो मृण्मनो वार्य्युपाञ्जनम् । वायुः कर्मार्क्कालौ च शुद्धेः कर्त्तॄणि देहिनाम्" मनुः उपाञ्जनमनुलेपनम्" कुल्लू० । आधारे ल्युट् । ३अञ्जनाधारे हस्तादौ च । "चतुर्थेक आहवनीयस्योपयमनीष्वाग्नीध्रीयस्याच्योपाञ्जने च" काल्या०८,६,२४, तृतीयं चतुर्भागमच्छोपाञ्जने अन्त-र्धरावनक्तात्यञ्जनार्थोक्ष्यपेषे पत्नीपाणावित्यर्थः" कर्कः । अन्तर्धराञ्जनप्रकारस्तत्रैव "दक्षिणया द्वाराऽऽनीता पत्नी पाणिभ्यां शेषं प्रतिगृह्याऽन्तर्धरावनक्ति "परागु देवस्तुति-रिति" "प्रतिप्रस्थात्रा समानीता पत्नी होमशेषेणाज्ये-नाक्षस्याक्ष्यस्त्रभागावपनक्त्यादिति सूत्रार्थः" वेददी० ।

**उपात्त** त्रि० उप+आ—दा क्त । १गृहीते, २प्राप्ते च "अयं केचिदुपात्तस्य दुरितस्य प्रपद्यते" काद०ल० । ३अन्तर्गतमदे गजे पु० हलायुधः ।

**उपात्यय** पु० उप+अति—इण्-अच् । १लोकशास्त्राचाराति-क्रमे, २व्यतिक्रमे, क्रमोल्लङ्घने, ३नाशे च । "परावनुपात्यय इणः" पा० क्रमप्राप्तस्यानतिपातोऽनुपात्ययः" सि०कौ० ।

**उपादान** न० उप+आ+दा—ल्युट् । १ग्रहणे "विज्ञानं मा-

शूद्रः शुद्रात् द्रव्योपादानमाचरेत्" मनुः। "स्यादात्मनोऽप्युपादानात्" सा० द०। २आत्मविषयेभ्य इन्द्रियाणां निवारणरूपे ३प्रत्याहारे, कर्म्मणि ल्युट्। कार्य्यजननार्थमुपादीयमाने कार्य्यान्विते ४कारणे, यथा मृदादि घटादेः स्वर्णादि अलङ्कारादेः जननार्थं गृह्यते। तच्च सर्व्वदा कार्य्येषु गतम्। "असदकरणादुपादानग्रहणात् सर्व्वसम्भवाभावात्। शक्तस्य शक्यकरणात् कारणभावाच्च सत् कार्य्यम्" सां० का०। "उपादानानि कारणानि तेषां ग्रहणं कार्य्येण सह सम्बन्ध उपादानैः कार्य्यस्य सम्बन्धादिति यावत् एतदुक्तं भवति कार्य्येण संबद्धं कारणं कार्य्यस्य जनकं सम्बद्धञ्च कार्य्यमसतो न सम्भवति तस्मात् सत् कार्य्यमिति" सां० कौ०। "उपादाननियमात्" "नकर्म्मण उपादानत्वयोगात्" सां० सू०। उपादानकारणञ्च कार्य्याभिन्नकारणमिति सांख्या वेदान्तिनश्च मन्यन्ते यथा मृत्तिकादयः घटादिकं प्रति, सुवर्णं कुण्डलादिकं प्रति, तन्तवः पटं प्रति, तत्तत्कार्य्याभिन्नत्वादुपादानकारणम्। नैयायिकास्तु उपादानकारणं समवायिकारणतया व्यवहरन्ते। "यत्समवेतं कार्य्यं भवति ज्ञेयं तत्र समवायि जनकं तत्" भाषा० तेषांमते उपादानशब्देनापि तस्य व्यवहारोऽस्त्येव "उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत्" भाषोक्तेः। तत्तदुपादानगोचरचिकीर्षाकृतिमत्त्वेन तैः ईश्वरस्य सर्व्वकर्तृत्वाभ्युपगमात् तच्च ईश्वरशब्दे चिन्तामणिग्रन्थे विवृतम्। सांख्यमतसिद्धे ५आध्यात्मिकतुष्टिभेदे च यथाह सां० का०। "आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः। बाह्या विषयोपरमात् पञ्च नव तुष्टयोऽभिमताः"। "या तु प्रकृतिविवेकख्यातिः सा प्रकृतिमात्रात् मा भूत् सर्व्वस्य सर्व्वदा तन्मात्रस्य सत्त्वात् प्रव्रज्याविशेषात् प्रव्रज्यातस्तु सा भवति तस्मात् प्रव्रज्यामुपाददीथाः कृतं ते ध्यानाभ्यासेनायुष्मन्! इति उपदेशे या तुष्टिः सोपादानाख्या नामाम्भ इत्युच्यते" सां० कौ०। स कालस्यैव अङ्कुरं प्रति प्रव्रज्यायाः साक्षात्कारं प्रति सहकारिकारणत्वेन वर्षणसहायत्वात् सलिलत्वम्। आत्मसाक्षात्काराय च कालादिर्हि उपादानतया तस्या उपादानत्वमिति बोध्यम्। तेन निर्वृत्तम् ठक्। औपदानिक स्वीकारमात्रजन्ये स्वत्वादौ यथा भिक्षादौ द्रव्ये ग्रहणमात्रादेव स्वत्वमुत्पद्यते। उपादानोपादेयभावः

**उपादानलक्षणा** स्त्री उपादानात् स्वार्थस्य ग्रहणात् लक्षणा। "मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये। स्यादात्मनोऽप्युपादानादेषोपादानलक्षणा" सा० द०। उक्ते अजहत्स्वार्थारूपे लक्षणाभेदे। यथा कुन्ताः प्रविशन्तीत्यादौ कुन्तपदस्य कुन्तधारिणि लक्षणाभ्युपगमेऽपि तत्र कुन्तरूपमुख्यार्थस्यापि विशेषणविधयाऽन्वयात्तथात्वम्।

**उपादिक** पु० उप+अद–इन् संज्ञायां कन्। कीटभेदे। उपोदिकायां स्त्री

**उपादेय** त्रि० उप+आ+दा–कर्म्मणि यत्। १ग्राह्ये ग्रहीतुं योग्ये विषये "उपादेयतारतम्यमेव" सा० द०। "भवे सौख्यं हित्वा यमसुखमुपादेयमनघम्" शान्तिश०। उपादानकारणे सम्बद्धे २तद्भवे कार्य्ये। ३विधेयत्वादिना उत्कृष्टे च "कर्म्माणि विहितं मैत्र बुद्धौ विपरिवर्त्तते। यत्राप्त तदुपस्थानमुपादेये गुणो भवेत्" भट्टका०। "उपादेये विधेये" ति० त० रघुनन्दनः।

उपादेयं ग्रहणयोग्यं तच्चानुकूलवेदनीयं सुखं तत्साधनञ्च "हेयोपादेयरहिते परिनिष्ठिते" भा० भा० वाक्ये "स यथा मत्स्यार्थी सशल्कान् सकण्टकान् मत्स्यानुपादत्ते स यावदुपादेयं तावदादाय निवर्त्तते" सर्व० दर्शने च प्रयुक्तम्।

**उपाधि** पु० उप+आ–धा–कि। अन्यथास्थितस्य वस्तुनोऽन्यथा प्रकाशनरूपे १कपटे, उपधिशब्दे उदा०। उपाधीयते स्वधर्म्मोऽनेन करणे घा० कि। स्वसामीप्यादिना अन्यस्मिन् स्वधर्म्मारोपसाधने विशेषणभेदे। २उपाधिभेदेऽप्येकस्य नानायोगः आकाशस्येव घटादिना" गतिश्रुतिरप्युपाधियोगादाकाशवत्" सां० सू०। "उपाधिना क्रियते भिन्नरूपः" इति श्रुतिः "कार्य्योपाधिरयं जीवः कारणोपाधिरीश्वरः" पञ्चद०। कार्य्यमन्तःकरणं कारणमज्ञानमिति वक्ष्यमाणोपाधिवादे उदा० ३उपलक्षणरूपे विशेषणे च। स च जात्यादिस्तद्भिन्नश्च पदार्थवृत्तिधर्म्मः। "पदार्थविभाजकोपाधिमत्त्वम्" मुक्ता०। पदार्थविभाजकाश्च द्रव्यत्वगुणत्वकर्म्मत्वसामान्यत्वविशेषत्वसमवायत्वभावत्वरूपाः तत्र द्रव्यत्वादयो जातिरूपाः सामान्यत्वादयस्तद्भिन्नाः तत्र नित्यत्वे सति समवेतत्वम् जातित्वम् परमसीमावर्त्तित्वे सति नित्यद्रव्यमात्रवृत्तित्वं विशेषत्वम्। नित्यत्वे सति सम्बन्धत्वम् समवायत्वम्। भावभिन्नत्वमभावत्वमन्योन्याश्रयभावात् अखण्डोपाधिरभावत्वमिति नव्याः। एवं प्रतियोगित्वादयोऽपि अखण्डोपाधयः तैः कल्प्यन्ते। "उपाधिभेदादेकापि साध्यादिव्यपदेशभाक्" भाषा० ४कुटुम्बव्यापृते। उपाधीयते नामसमीपे कर्म्मणि कि। ५उपनामनि यथा भट्टाचार्य्यमिश्रादयः उपाधीयतेऽमनोऽस्म

साधारे किं । (धर्मचिन्तायाम् व्यभिचारोन्नायके व्यावर्त्तके पदार्थभेदे च । "सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः हेतोरेकाश्रये येषां स्वसाध्यं व्यभिचारिणा भावा॰" उपाधिपदार्थनिरूपणप्रस्तावे प्रायेण बहुदेशे पठनपाठनाभावेन दुष्प्रापतया प्रचारो नास्तीति अनुमानचिन्तामणिग्रन्थे यथा उपाधिवादे तन्निरूपितं यथा च तस्य दूषकतायां बीजं निरूपितं तदत्र प्रदर्श्यते ।

"तत्रोपाधिः साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकः । अनौपाधिकत्वज्ञानस्य न व्याप्तिज्ञाने हेतुतो व्यापकत्वादिज्ञानेन नान्योऽन्याश्रयः । यद्वा व्यापकत्वं तन्निष्ठात्यन्ताभावाप्रतियोगित्वं तत्प्रतियोगित्वञ्चाव्यापकत्वं प्रतियोगित्वञ्च तदधिकरणाधिकरणत्वमिति वदन्ति तत्र साधनपक्षधर्मावच्छिन्नसाध्यव्यापकोपाधेरव्याप्तेः न च तयोरनुपाधित्वं दूषकताबीजसाम्यात् मित्रातनयत्वेन श्यामत्वसाधने शाकपाकजत्वस्य, प्रत्यक्षस्पर्शाश्रयत्वेन वायोः प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वस्य च यास्तेऽप्रयोजकत्वेनोपाधित्वस्वीकारात् पक्षेतरेऽतिव्याप्तेश्च । न च व्यतिरेके पर्वतेतरान्यत्वादिव्याप्य इतरान्यत्वस्याप्रसिद्धिवारणार्थं पर्वतपदं विशेषणमिति व्यतिरेके व्यर्थविशेषणत्वाच्च स उपाधिः, बाधोन्नीतस्याप्यनुपाधितापत्तेः । न चेष्टापत्तिः इतरान्यत्वस्याप्रसिद्ध्या विशेषणं विना व्याप्त्यग्रहेण तत्सार्थकत्वात् । वस्तुतस्तु साध्यस्य पक्षः पक्षेतर उपाधिरिति चेत् अस्तु तथा, तथापि पक्षातिरिक्ते साध्याव्यापकतापक्षादुपाधेर्दूषकत्वं तच्च तत्रास्ति, अन्यथा पक्षे साध्यसन्देहादनुपाधित्वे उपाधिमात्रमुच्छिद्येत विपक्षाव्यावर्त्तकविशेषणशून्यत्वं विशेषणं तेन बाधोन्नीतपक्षेतरस्य परिग्रहः. तत्र पक्षस्यैव विपक्षत्वात् न तु पर्वतेतरत्वादेरिति चेन्न न हि वस्तु विपक्षव्यावर्त्तकविशेषणशून्यं सम्भवति प्रमेयत्वादेः सर्वत्र सत्त्वात् उपाधेरिति विशेषणे विरुद्धत्वात्: तथापि च साध्यव्यापकत्वसाधनाव्यापकत्वे तत्र स्त इति तत्र इच्छा पक्षे साध्यव्याप्तिस्ततो हेतौ व्यभिचार एव व्यभिचारे चावश्यमुपाधिरिति पक्षेतरएव तत्रोपाधिः स्यात् तावन्मात्रस्यैव दूषकत्वाच्च व्यर्थं विशेषणम् । अतएवानुमानमात्रोच्छेदकतया जातित्वाच्च पक्षेतर उपाधिरित्यपास्तम् दूषणसमर्थत्वेन जातित्वाभावात् । एतेन पक्षेतरव्यावृत्त्यर्थं प्रकारान्तरमपि निरस्तम्, उपाधित्वाभावेऽपि दूषणसमर्थत्वात् । अथोपाधिः सव्यभिचारेण सत्प्रतिपक्षोत्थापकतया दूषणं, पक्षेतरत्वञ्च तदेकस न साध्याभावसाधकोऽसाधारणत्वात् न तु व्यभिचारोन्नायकतया दूषणं यथा हि साध्यव्यापकोपाध्यव्याप्यतया हेतोः साध्याव्याप्यत्वं तथा साध्यव्याप्यहेतुव्यापकतयोपाधेर्न साध्यव्यापकत्वमपि सिध्येत् व्याप्तिग्राहकस्योभयत्रापि साम्येन विनिगमकविरहात् । तन्न यथा साध्यव्याप्येन हेतुना साध्यं साधनीयं तथा साध्यव्यापकोपाधिव्याप्त्या साध्याभावोऽपि साधनीयो व्याप्तिपक्षधर्मत्वादिति दूषकताबीजं सोऽयं सत्प्रतिपक्ष एवेति मैवम् एवं हि सत्प्रतिपक्षे उपाध्युद्भावनं न स्यात् सत्प्रतिपक्षान्तरवत् । किञ्चैवं बाधोन्नीतोऽपि पक्षेतरो नोपाधिः स्यात् व्यतिरेकेऽसाधारण्यात् । ननु बाधे नोपाधिनियमः धूमेन ह्रदे वह्निसाधने तदभावात् । न च हेतुमति पक्षे बाधे पक्षेतरोपाधिनियमः प्रत्यक्षे वह्नौ कृतकत्वेनानुष्णत्वे साध्येऽतेजस्त्वादेरुपाधित्वसम्भवादिति चेन्न तेजोमात्रपक्षत्वेऽतेजस्त्वं विनान्यस्य उपाधेरभावात् । किञ्च पर्वतान्यत्वव्याप्यत्वं पर्वतेतरद्रव्यत्वं ह्रदपर्वतसंयोगानाधारत्वं ह्रदपर्वतान्यत्वादिकमुपाधिः स्यादेव व्यतिरेकेऽसाधारण्याभावात् व्यतिरेकिणा सत्प्रतिपक्षसम्भवाच्च । न चासाधारण्यं, तस्यापि सत्प्रतिपक्षोत्थापकतया दोषत्वात् तथाद्युभयोरपि व्याप्तिग्राहकसाम्ये विरोधाच्च व्याप्तिनिश्चयः किन्तूभयत्र व्यभिचारसंशयः तथा च व्यभिचारसंशयाधायकत्वेनोपाधेर्दूषकत्वं तच्च पक्षेतरेऽप्यस्ति तदुक्तमुपाधेरेव व्यभिचारग्रहेति । भवतु वा न्यायेन सकलानुमानभङ्गभिया पक्षेतरोऽनुपाधिः तथापि लक्षणमतिव्यापकम् । नापि साध्यसमव्याप्तत्वे सति साधनाव्यापकत्वमुपाधित्वं दूषकताबीजस्य व्यभिचारोन्नयनस्य सत्प्रतिपक्षस्य वा साम्येन विषमव्याप्तस्याप्युपाधित्वात् तथा दूषकताबीजं साध्यव्याप्यत्वस्याप्रयोजकत्वाच्च । अथ साध्यप्रयोजकोधर्म उपाधिः प्रयोजकत्वञ्च न न्यूनाधिकदेशवृत्तेः तस्मिन् सत्यसत्त्वेन विनापि भवतस्तदप्रयोजकत्वात् अन्यथा पक्षेतरस्याप्युपाधित्वप्रसङ्ग इति चेत् न दूषणौपयिकं हि प्रयोजकत्वमिह विवक्षितं तच्च साध्यव्यापकत्वे सति साधनाव्यापकत्वमेवेति तदेव प्रयोजकं न्यूनाधिकं व्यर्थत्वात् ।

अथोपाधिः स उच्यते यद्धर्मोऽन्यत्र प्रतिफलति यथा जवाकुसुमं स्फटिकलौहित्ये उपाधिः तथा चोपाधिव्याप्यत्वं हेतुत्वाभिमते चकास्ति तेनायमुपाधिः न च व्याप्यत्वमात्रेण दूषकत्वमिति साध्यव्यापकतापीष्यते तथा च समव्याप्त एवोपाधिरिति चेत् तत् किं विषमव्याप्तस्य

दूषकताबीजाभावान्नोपाधिपदवाच्यत्वं तथात्वेऽप्युपाधिपदप्रवृत्तिनिमित्ताभावाद्वा नाद्यः तस्यापि व्यभिचाराद्युन्नायकत्वात्। नापरः न हि लोके समव्याप्तएवान्यत्र स्वधर्म्मप्रतिबिम्बजनक एवोपाधिपदप्रयोगः लाभाद्युपाधिना कृतमित्यादौ लाभादावुपाधिपदप्रयोगात्। किञ्च न शास्त्रे लौकिकव्यवहारार्थमुपाधिव्युत्पादनं किन्त्वनुमानदूषणार्थं तच्च साध्यव्यापकत्वे सति साधनाव्यापकत्वमात्रमिति शास्त्रे तत्रैवोपाधिपदप्रयोगात्। अन्ये तु यदभावोव्यभिचारविरोधी स उपाधिः न च विषमव्याप्तस्याभावोव्यभिचारं विरुणाद्धि तस्याभावेऽपि व्यभिचारात् अस्ति ह्यनित्यत्वव्यापकं प्रमेयत्वं तद्ध्यस्य गुणत्वं न चानित्यत्वगुणत्वयोर्व्याप्तिरस्ति समव्याप्तस्य च व्यतिरेकस्तथा, न हि साध्यव्यापकव्याप्यीभूतस्य व्याप्यं यत्तत् साध्यं व्यभिचरति व्यभिचारे चान्ततः साध्यमेवोपाधिः अभेदेऽपि व्याप्यव्यापकत्वात् साधनाव्यापकत्वादिति स्वीचक्रुस्तन्न तत्रापि ह्यव्यभिचारे साध्यव्याप्यव्याप्यत्वं तच्चावश्यकत्वाल्लाघवाच्च न साधनव्यापकव्याप्यत्वमपि भवतैव व्यभिचारस्य दर्शितत्वात्। न च साध्यव्याप्यव्याप्यत्वमेवानौपाधिकत्वं साध्यव्याप्यमित्यत्रापि ह्यनौपाधिकत्वं तदेव वाच्यं तथा चानवस्थेति। अनौपाधिकत्वे च व्याप्तिलक्षणे यावदिति पदं साध्यव्यापके विशेषणं दत्तमेव किञ्च यस्मिन् सत्यनुमितिर्न भवति तदेव तत्र दूषणं न तु यद्व्यतिरेके न भवत्येवेत्येतद्गर्भं विरुद्धत्वादेरप्यदोषत्वापत्तेः नापि पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वं साधनावच्छिन्नसाध्यव्यापकोपाध्यव्यापनात्। शब्दोऽभिधेयः प्रमेयत्वादित्यत्राश्रावणत्वस्योपाधित्वापत्तेश्च शब्द धर्मगुणत्वावच्छिन्नाभिधेयत्वं यत्र रूपादौ तत्राश्रावणत्वं व्यापकं पक्षे प्रमेयत्वस्य साधनस्याव्यापकं हि तत्। व्याहृत्यनवस्थादावुपाधौ पक्षनियततादृशधर्माभावाच्च। अथ साधनावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापक उपाधिः तन्न ध्वंसस्य जन्यत्वेन ध्वंसप्रतियोगित्वे साध्ये साधनावच्छिन्नसाध्यव्यापकं भावत्वमुपाधिः। श्यामत्वे शाकपाकजत्वमुपाधिरिति तन्न पक्षधर्मावच्छिन्नसाध्यव्यापकस्यानुपाधित्वप्रसङ्गात् सोपाधित्वादसाधकमित्यत्र साधनावच्छिन्नसाध्यव्यापकव्यभिचारित्वे साधनावच्छिन्नस्य व्यर्थत्वप्रसङ्गाच्च। किञ्च पक्षद्वयेऽपि विशिष्टसाध्यव्यभिचारं विशिष्टसाध्यव्यतिरेकं वा प्रसाध्य प्रयात् केवलसाध्यव्यभिचारः केवलसाध्यव्यतिरेको वा साधनीयस्तथा चार्थान्तरं केवलसाध्ये हि विवादो न तु विशिष्टे। अथ प्रकृतसाध्यव्यभिचारसिद्ध्यर्थं विशिष्टसाध्यव्यभिचारः साध्य इति चेन्न अप्रयोजकत्वात् प्रथमं साधनव्यभिचार एवोन्नाव्यस्तस्याविशेषादुपाधिरिति चेत् तर्हि प्रकृतानुमाने नोपाधिर्दूषणं स्यात्। किञ्च साध्यव्यभिचारहेतुत्वेन पक्षधर्मावच्छिन्नसाध्यव्यापकव्यभिचार एवोपन्यसनीयो नोपाधिः। स्यादेतत् पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापक उपाधिः पर्यवसितं साध्यं च पक्षधर्मताबललभ्यं यथा शब्दोऽनित्यत्वातिरिक्तशब्दधर्मातिरिक्तधर्मवान् प्रमेयत्वादित्यत्र पर्यवसितं यत् साध्यम् अनित्यत्वं तस्य व्यापकं कृतकत्वमुपाधिः यदि च तथैव कृतकत्वमपि शब्दे साध्यते तदा अनित्यत्वमुपाधिः तदुक्तं शाद्यन्तसाध्यनियमच्युतोऽपि कथकैरुपाधिरुन्नाव्यः पर्यवसितं नियमयन् दूषकताबीजसाम्यादिति। अनेन पक्षधर्मसाधनावच्छिन्नसाध्यव्यापकोपाधिः सङ्गृह्यते तादृशसाध्यस्य पर्यवसितत्वादिति तन्न एवं हि द्व्यणुकस्य सावयवत्वे सिद्धे द्व्यणुकमनित्यद्रव्यासमवेतं जन्यमहत्त्वानधिकरणद्रव्यत्वादित्यत्र निरवयवद्रव्यसमवेतत्वमुपाधिः स्यात्। भवति हि नित्यद्रव्यसमवेतत्वं पर्यवसितं साध्यं तस्य, व्यापकं साधनाव्यापकञ्च। किञ्च पक्षधर्मताबललभ्यसाध्यसिद्धौ निष्फल उपाधिः तदसिद्धौ च कस्य व्यापकः न हि सोपाधौ पक्षधर्मताबलात् साध्यं सिध्यति यस्य व्यापक उपाधिः स्यादिति। अत्रोच्यते यद्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वं स उपाधिः लक्षणन्तु पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वं यद्धर्मावच्छेदेन साध्यं स च धर्मः। क्वचित् साधनमेव क्वचिद्द्रव्यत्वादि क्वचिन्महानसत्वादि। तथा हि समव्याप्तस्य विषमव्याप्तस्य वा साध्यव्यापकस्य व्यभिचारेण साधनस्य साध्यव्यभिचारः स्फुटएव व्यापकव्यभिचारिणस्तद्व्याप्यव्यभिचारनियमात् साधनावच्छिन्नपक्षधर्मावच्छिन्नसाध्यव्यापकयोर्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वमेव यथा ध्वंसस्यानित्यत्वे साध्ये भावत्वस्य, वायोः प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वस्य च विशेषणाव्यभिचारिणि साधने विशिष्टव्यभिचारस्य विशेष्यव्यभिचारित्वनियमात्। अतएव नार्थान्तरं, विशेषणाव्यभिचारित्वेन ज्ञाते साधने विशिष्टव्यभिचारः सिध्यन् विशेष्यसाध्यव्यभिचारमादायैव सिध्यति पक्षधर्म्मताबलात्। अन्यथा प्रतीतेरपर्यवसानात्। न च पक्षधर्मताबलात् प्रकृतसिद्धावर्थान्तरम्। यद्वा प्र-

**उष** दाहे बधे च भ्वा०पर०सक०सेट् । ओषति औषीत् ओषाम् बभूव आस चकार उवोष ओषित्वा । प्रोषितः—उषित । उष्ट्वा । कर्म्मणि उष्यते ओषामासे अत्र "ओषामासे मत्सरो तुपातवाताग्निभिरुह्न्त्यन्धकारहाम्" माघः । "हिरण्मयमायुरस्य भूर्गोश्चाप्योषतमुत्तुम्" मनुः । "दण्डेनैव तमप्योषेत् स्वाकर्मणोऽपि विच्युतम्" मनुः ओषाञ्चकार कामाग्निर्दशरथनन्दनम्" भट्टिः "चिचेत रामस्तत्कर्म्मोषाञ्चक्रे सुरेश्वरः" भट्टिः तस्य "मूलप्रतीघातादुष्यते चूष्यते दह्यते पच्यते इव" सुश्रुतः ।

**उष** दाहे बधे च भ्वा० पर० सेट् उदित सक० सेट् । ओषति औषीत् ओषाम् बभूव—आस—चकार उवोष । उदित्त्वात् ओषित्वा उष्ट्वा वेट् । क्त । उष्टः । ओषणः ।

अभि—सर्व्वतो दाहे । "योऽभ्युष्टमिव इव" शत० ब्रा० ११,२,७,२१। अभित ओषकं अभ्युष्ट सर्व्वतोदाहः तेनभिन्न इव" भा० । [ अन्नभेदः अपूपादि० ।

अव-अधःसन्तापनेन दाहे । अवोषः अधोभागे दग्धो

उद्—आधिक्येन दाहे । "मा मोदोषिष्टम् मा मा हिंसिष्टम्" शत०ब्रा० १,५,१,२५ । "युवां मामुत्कृष्टमाधिक्येन वा उदोषिष्ट दाहं कारिष्ट" भा० ।

उप—सामीप्येन दाहे । "अग्निना वा कक्षमुपोषेत्" आश्व० श्रौ० २,४,६। तमग्निभिः समुपोषेत्सदेनम्" शत० ब्रा० १२,५,१,१२ । उपवासे च उपोषणम् ।

प्रति-प्रतिदाहे । "स त्वमग्ने प्रतीकेन प्रत्योष यातुधान्यः" ऋ०१०,११८,८ । प्रत्येकदाहे च "प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः" यजु०१,७, "प्रत्युष्टं प्रत्येकं दग्धम्" वेददी०।

**उषस्** प्रभातीभावे कण्ड्वा० पर०सक० सेट् । उषस्यति औषस्यीत् औषसीत् उषस्याम् चाम् बभूव आस चकार ।

**उष** त्रि०उष—क । १दाहके २सन्ध्यालयसमये ३कामिनि ४गुग्गुलौ ।५रात्रिशेषे पु०मेदि० । रात्रिशेषश्च मुहूर्त्तात्मककालः पञ्चपञ्चाशद्घटिकोत्तरसूर्य्योदयपर्य्यन्तकालः । ६दिवसे पु० ।

**उषङ्गु** पु०उष बा०अङ्गु । रुद्रे तस्य संहर्त्तृत्वात्तथात्वम् । "उषङ्गुश्च विधाता च मान्धाता भूतभावनः" भा०अनु०१७

**उषण** न०उष-क्यु न् । १मरिचे २पिप्पलीमूले च ३शुण्ठ्यां, ४चव्यिके(चइ)। पिप्पल्यां च स्त्री । ऊषणशब्दे विवृतिः

**उषती** स्त्री उष-शतृ-बा०नुम गुणाभावः रायमुकुटः । अकल्याण्यायां वाचि । "ययाऽस्य वाचा पर उद्विजेत न तां वदेदुषतीं पापलोक्याम" भा०आ०६४अ०८७अ०। शब्दे पु० उषन् शब्दः वाक्ये न० उषत् वाक्यं तेनास्य त्रिलिङ्गता

**उषत्** पु०यदुवंश्ये नृपभेदे । क्रोष्टुवंशवर्णने "अनन्तरं सुयज्ञस्तु सुयज्ञतनयोऽभवत् । उषन् यो यज्ञमखिलं स्वधर्म्ममुषतावरः । शिनेयुरभवत् पुत्र उषतः शत्रुतापनः" हरि०३७

**उषद्गु** पु० यदुवंश्ये नृपभेदे । "स्वाहे पुत्रोऽभवद्राजा उषद्गुर्वेदतांवरः । महाक्रतुभिरीजे यो विविधैर्भूरिदक्षिणैः । ततः प्रसूतिमिच्छन् वै उषद्गुः सोऽग्र्यमात्मजम्" हरि०३७

**उषद्रथ** पु० पौरवे नृपभेदे उशीनरस्य भ्रातुस्तितिक्षोः सुतभेदे । "तितिक्षोऽभवद्राजा पूर्व्वस्यां दिशि भारत । उषद्रथो महाराज ! फेनस्तस्य सुतोऽभवत्" हरि० ३१अ०।

**उषप** पु० उष-दाहे कपन् । १वह्नौ २सूर्य्ये च तयोस्तापकत्वात्तथात्वम् । ३चित्रकवृक्षे च ।

**उषर्बुध्** त्रि० उषसि बुध्यते बुध—क्विप् अहरादि० निपातः । अग्निहोत्रकाले प्रबुद्धे । "मर्त्तेषूषर्भुद्दतिथिर्जातवेदाः" ऋ०६,४,२ । 'आर्कां सूर्य्यस्य रोचनाद्विश्वान् देवानुषर्बुधः' १,१४,६ "आ दाशुषे जातवेदो वहाद्या देवा उषर्बुधः" ऋ० १,४४,१ ।

**उषर्बुध** त्रि० उषसि बुध्यते बुध—क अहरा० निपातः । अग्निहोत्रकाले प्रबुद्धे । "इमम् षु वो अतिथिमुषर्बुधम्" ऋ०६ १५,११२ अग्नौ पु० २चित्रकवृक्षे च अमरः।

**उषस्** न० ओषत्यन्धकारम् उष—असुन् किञ्च । १प्रत्यूषे, "उष उषो हि वसो अग्रमेषि" १०,८,४। स च कालः । "पञ्चपञ्च उषःकालः" स्मृतेः पञ्चपञ्चाशद्घटिकोत्तरः । "आसीदासन्ननिर्वाणः प्रदीपार्च्चिरिवोषसि" रघु० । "पुनरुषसि विविक्तैर्मातरिश्वावचूर्ण्य" माघ० २सन्ध्यायाम् स्त्री "इह स्वरिन्द्राय पूर्व्वीरुषसोदुहानाः" ऋ० ६,३८,१। तेन उषा उषसौ-उषस इत्यादि भकारादौ परे वेदे सस्य द उषद्भिः सि० कौ० । "निम्रुच उषसस्तर्करीरिव ऋ० १,१९१,५, ३तदभिमानिदेवताभेदे अस्य देवताद्वन्द्वे पूर्व्वापरयोः उषासादेश । "नक्तोषासा सुपेशसा". ऋ० १,१३०,७ । तदभिमानिदेवताभेदाभिधायित्वेन देवताद्वन्द्वः । "जिगीषोषासानक्ता सुदुघेव धेनुः" १,१८६४. । आदिपदलोपेऽपि उषासाश्विना' यजु० २१, ५० । नक्तोषासाविति प्राप्ते आदिपदलोपः वेददी० । "उषासा वां सुहिरण्ये" यजु० २९,६। नक्तोषासावित्यर्थः वेददी०। "साऽस्य देवता यत । उषस्तद्देवताके पश्वादौ" कण्ठाद्भिरल्पाद्भिर्म्महाद्भिस्त उषस्य :" यजु०२४,४,उषस्या उषादेवताकास्तथा यूपे 'मयोभुः'

वेददी० ४ब्राह्ममुहूर्त्ते "उषाय अश्वस्य मेध्यस्य शिरः" बृ० उ०। "उषा ब्राह्मो मुहूर्त्तकालः" शं० भा० । ५दिवोदुहितृदेवतायाम् स्त्री प्रौढमनोरमा ।

**उषसी** स्त्री उषं तापकत्वात् दिवसं स्यति सो–क गौरा० ङीष् । सायं सन्ध्यायाम् मेदिनिः ।

**उषस्ति** पु० ऋषिभेदे "उषस्तिर्ह चाक्रायणः" छा० उ० । उग सोऽप्यत्र "अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ" "ततो होषस्तश्चाक्रायण उपरराम" इति च शत० ब्रा० १४,६,५,१।

**उषा** स्त्री ओषत्यन्धकारम् उष+क । १प्रातरादिसन्ध्यासु "वेनीरनुव्रतमुषास्तस्थुः" ऋ० ८,४१,३ । तिस्रः प्रातःसायं मध्याह्नरूपा उषाः" भा० । "उषा विभातीरनु भासि पूर्वीः" ३,६,७, "तेज परिहानिरुषा भानोरर्द्धोदयं यावत्" वृ० सं० उक्ते २काले नक्षत्रप्रभाक्षय काल उषा। तेन पञ्चपञ्चाशद्घटिकोत्तरमारभ्य सूर्य्यार्द्धोदयपर्य्यन्तः स कालः । लग्नाद्यलाभे उषाकाले यात्रा शस्ता यथाह ज्यो० "प्रत्युद्युतितारका स्फुटतटी प्राची भवेन्निर्मला त्योषद्रुक्रविलोहितान्तशबला देवैः सदा वाञ्छिता । नो वारं न तिथिं न योगकरणं लग्नस्य नापेक्षते कृत्वा दोषसहस्रसञ्चयमुषा नूनं करोत्युन्नतिमिति" । "तिथ्यादिषु निषिद्धेषु चन्द्रताराविलोमतः । उषां गोधूलियोगं वा स्वीकृत्य गमनं चरेत् । प्राच्यामुषां प्रतीच्याञ्च गोधूलिं वर्जयेन्नृप । । दक्षिणेऽभिजितं चैवमुत्तरे च निशां तथा"। "आरक्तबिम्बं रजनीविरामं वदन्त्युषायोगमिह प्रवीणाः । व्यास" "आहुः प्रयातुः सकलार्थसिद्धिः संलक्ष्यते हस्ततलस्थितेव" ज्यो० त० व्यास । अन्धकारेण सन्तापकारिण्यां ३रात्रौ मेदि० "अधिकरुचिरशेषामप्युषां जागरित्वा" माघः । ४क्षारभूमौ । ततः कचित् गौरा० ङीष् । "भगवन् ज्ञातं कुहकराड्मित्रोषमुष्याम्" भाग० ५स्त्रीगव्यां हेम० ६उखायां विश्वः ७स्थाल्यां रमानाथः । ८बाणराजसुतायाञ्च तत्र दीर्घादित्वमपि भारतादौ तथैव निर्द्देशात् । तया च यथा अनिरुद्धः पतित्वेनाप्त तथा वर्णितं भाग० १० स्क० ६२ अ० यथा (बाणस्य) "तस्योषा नाम दुहिता स्वप्ने प्राद्युम्निना रतिम् । कन्या लभतकान्तेन प्रागदृष्टश्रुतेन सा । सा तत्र तमपश्यन्ती क्वासि कान्तेति वादिनी । सखीनां मध्य उत्तस्थौ विह्वला व्रीडिता भृशम् । बाणस्य मन्त्री कुम्भाण्डश्चित्रलेखा च तत्सुता । सख्यपृच्छत् सखीं मूषः कौतूहलसमन्विता । कं त्वं मृगयसे सुभ्रु ! कीदृशस्ते मनोरथः । हस्तग्राहं न तेऽद्यापि राजपुत्र्युपलक्षये । उषोवाच । दृष्टः कश्चिन्नरः स्वप्ने श्यामः कमललोचनः । पीतवासा बृहद्बाहुर्योषितां हृदयङ्गमः । तमहं मृगये कान्तं पाययित्वाऽधरं मधु । क्वापि यातः स्पृहयतीं क्षिप्त्वा मां वृजिनार्णवे । चित्रलेखोवाच । व्यसनमपकर्षामि त्रिलोक्यां यदि भाव्यते । तदानेष्ये नरं । यस्ते मनोहर्त्ता तमादिश । इत्युक्त्वा देवगन्धर्व्वसिद्धचारणपन्नगान् । दैत्यविद्याधरान् यक्षान् मनुष्यांश्च तथाऽलिखत् । मनुजेषु च सा वृष्णीन् शूरमानकदुन्दुभिम् । व्यलिखत् रामकृष्णौ च प्रद्युम्नं वीक्ष्य लज्जिता । अनिरुद्धं विलिखितं वीक्ष्योषाऽवाङ्मुखी ह्रिया । सोऽसावसाविति प्राह स्मयमाना महीपते ! । चित्रलेखा तमाज्ञाय पौत्रं कृष्णस्य योगिनी । ययौ विहायसा राजन् द्वारकां कृष्णपालिताम् । तत्र सुप्तं सुपर्य्यङ्के प्राद्युम्निं योगमास्थिता । गृहीत्वा शोणितपुरं सख्यै प्रियमदर्शयत् । सा च तं सुन्दरवरं विलोक्य मुदितानना । दुष्प्रेक्ष्ये स्वगृहे पुंसा रेमे प्राद्युम्निना समम् । परार्ध्यवासःस्रग्गन्धधूपदीपासनादिभिः । पानभोजनभक्ष्यैश्च वाक्यैः शुश्रूषयार्च्चितः । गूढः कन्यापुरे शश्वत् प्रवृद्धस्नेहया तया । नाहर्गणान् स बुबुधे उषयोपहृतेन्द्रियः" विस्तरस्तु हरिवं० १७६ अ० । प्रातःकाले अव्य० मेदि० अव्ययत्वात् ततो भवार्थे ट्युल् तुट् च । उषातन तद्भवे त्रि० स्त्रियां ङीप् ।

**उषाकल** पु० उषायां कलो रवो यस्य । कुक्कुटे ।

**उषापति** पु० ६त० । कृष्णपौत्रे प्रद्युम्नपुत्रे यदुवंश्ये अनिरुद्धे तत्पतित्वप्राप्तिकथा उषाशब्दे उक्ता उषामाथादयोऽप्यत्र, अमरे "अनिरुद्ध उषापतिरिति" ह्रस्वपाठः भारतादौ तु दीर्घपाठः ।

**उषित** त्रि० वस क्त । १पर्य्युषिते २कृतवासे च । उष–दाहे क्त । ३दग्धे मेदि० । ४चरिते धरणिः । भावे क्त । ५वासे न० "चाण्डालैरुषितं यत्र" शु० त० देवलः ।

**उषीर** पुंन० उष–कीरच् । वीरणमूले रायमुकुटः ।

**उष्टृ** पु० उक्ष–सेचने तृन् वेदे नेट् । १सव्यकसेक्तरि बलीवर्द्दे । तस्यामोघवीर्य्यत्वात् तथात्वम् "ओष्टारौ वा" कात्या० ५,११,१२ । "ओष्टारौ महावलीवर्द्दौ" कर्कः । आ+सम्यक् उष्टारौ इति विग्रहः । "उष्टारेव फर्वरेषु श्रयेथे" ऋ० १५,१०६,२ । लोके तु उक्षित इत्येव । सेक्तरि त्रि० स्त्रियां ङीप् ।

**उष्ट्र** पुंस्त्री० उष+ष्ट्रन् कित् । (उट) प्रसिद्धे पशुभेदे

स्त्रियां जातित्वात् ङीष्। "हस्तिगोऽश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति" "नाधीयीताश्वमारूढो न रथं न च हस्तिनम्। न नावं न खरं नोष्ट्रं नेरिणस्थो न यानगः" मनु। तद्यान-निषेधमाह "उष्ट्रयानं समारुह्य खरयानं तु कामतः। स्नात्वा तु विप्रो दिग्वासाः प्राणायामेन शुध्यति" मनुः। "कामतः" इत्युक्त्या कर्म्मभेदे तद्याने न दोष इति सूचितम् अतएव 'उष्ट्रमारोक्ष्यन्नभिमन्त्रयते त्वाष्ट्रोऽसि" पार० गृ०सू० मन्त्रलिङ्गेन तद्यानं विहितम्। तस्य मांसं न भक्ष्यम् "भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः" मनूक्तेः। तेनास्य एकदन्तपङ्क्तियुक्तत्वम्। "गौरजो महिषः क्रूरः सूकरो गवयो रुरुः। द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सप्तमः" भाग० उक्ते गवादयः उष्ट्रान्ता द्विशफाः इति बोध्यम्। वृथा तद्घाते दोषः "मनुष्यमारणे क्षिप्रं चौरवत् किल्विषं भवेत्। प्राणभृत्सु महत्स्वर्द्धं गोगजोष्ट्रहयादिषु" मनूक्तेः। ब्रह्महत्याशेष-पापेन तज्जातिर्भवति यथाह मनुः "यां यां योनिन्तु जीवोऽयं येन येनेह कर्म्मणा। क्रमशो याति लोकेऽस्मिंस्तत्तत् सर्वं निबोधत। बहून् वर्षगणान् घोरान् नरकान् प्राप्य दारुणान्। संसारान् प्रतिपद्यन्ते महापातकिनस्त्विमे। श्वसूकरखरोष्ट्राणां गोऽजाविमृगपक्षिणाम्। चण्डालपुक्कसानाञ्च ब्रह्महा योनिमृच्छति"। यानहरणपापेऽप्युष्ट्रयोनिप्राप्तिमाह हृत्वेत्यनुवृत्तौ मनुः "स्त्रीमृगः स्तोकको वारि यानान्युष्ट्रः पशूनजः"। तद्वधे प्रायश्चित्तमाह "हयक्षागाविकोष्ट्रेषु गर्द्दभेषु च मारणात्। प्राजापत्यार्द्धमेवेह प्रायश्चित्तं विधीयते" प्रा० वि० विष्णुः। तन्मांसभक्षणे प्रायश्चित्तमाह भुक्त्वेत्यनुवृत्तौ प्रा० वि० शङ्खः "गामश्वं कुञ्जरोष्ट्रौ च सर्वं पञ्चनखं तथा। क्रव्यादं कुक्कुटं ग्राम्यं कुर्य्यात् संवत्सरव्रतम्" "अथोष्ट्रवामीशतवाहितार्थः" रघुः। "दृतिश्च तत्र कुर्वीत यामुष्ट्रेणावलोकयेत्" मनुः। "अन्योन्यतः पथि वतामिभोष्ट्रौ" माघः। तन्मूत्रगुणाः सुश्रु० उक्ताः। "अथ मूत्राणि गोमहिषाजाविगजहयखरोष्ट्राणां तीक्ष्णानि कटून्युष्णानि तिक्तानि लवणानुरसानि लघूनि शोधनानि कफवातकृमिमेदोविषगुल्मार्शउदरकुष्ठशोफारोचकपाण्डुरोगहराणि हृद्यानि दीपनानि च सामान्यतः। भवन्ति चात्र। तत्सर्वं कटु तीक्ष्णोष्णं लवणानुरसं लघु। शोधनं कफवातघ्नं कृमिमेदोविषापहम्। अर्शोजठरगुल्मघ्नं शोफारोचकनाशनम्। पाण्डुरोगहरं भेदि हृद्यं दीपनपाचनम्"। सामान्यत उक्त्वा "अर्शोघ्नं कारभं मूत्रमिति" विशेषगुण उक्तः। तन्मांसगुणाः सुश्रुते उक्ताः तच्च उरभ्रशब्दे दर्शितम्। तस्य ग्राम्यत्वं तत्रोक्तम्। तच्च उरभ्रशब्दे दर्शितम्। किन्तु तस्यारण्यत्वमपि अतएव "उष्ट्रमारण्यमनु ते दिशामि" यजु० १३ २४, तस्यारण्यत्वमुक्तम्। तस्य त्वष्टृदेवतायै अश्वमेधे देयतोक्ता "बृहस्पतये गवयांस्त्वष्ट्र उष्ट्रान्" यजु० २४. २८, द्वित्वे गोयुगच् उष्ट्रगोयुग उष्ट्रद्वित्वे न०। शालायां गोष्ठच्। उष्ट्रगोष्ठ उष्ट्रशालायां न०। षट्के षड्गवच्। उष्ट्रषड्गव उष्ट्रषट्के न०। तस्येदमण्। औष्ट्र तत्सम्बन्धिमांसादौ त्रि०। "परं चौष्ट्रं मेषं नरमहिषयोश्छागमपि वा" कर्पूरस्तव।

**उष्ट्रकर्णिक** पु० उष्ट्रस्य कर्णः भेदनम् कर्ण+भिदि—अच्। सोऽस्त्यस्य ठन्। दक्षिणस्थे यवनदेशभेदे तद्देशवासिभिर्हि भोजनार्थम् उष्ट्रभेदनात् तद्देशस्य तथात्वम्। सहदेवदक्षिणदिग्विजयवर्णने "अन्ध्रांस्तालवनांश्चैव कलिङ्गानुष्ट्रकर्णिकान्। आटवीं च पुरीं रम्यां यवनानां पुरीं तथा" भा०स० २०अ० उष्ट्रतुल्यकर्णजनवत्त्वाद्वा तथात्वम्।

**उष्ट्रकाण्डी** स्त्री उष्ट्र इव काण्डोऽस्य जातित्वात् ङीष् (उटाटी) पुष्पभेदे राजनि०।

**उष्ट्रग्रीव** पु० उष्ट्रग्रीवा आकारत्वेनास्त्यस्य अर्श० अच्। सुश्रुतोक्ते पैत्तिके भगन्दररोगभेदे। तन्निदानस्वरूपादि तत्रोक्तं यथा "वातपित्तश्लेष्मसन्निपातागन्तुनिमित्ताः शतपोनकोष्ट्रग्रीवपरिस्राविशम्बूकावर्त्तोन्मार्गिणो यथासङ्ख्यं पञ्च भगन्दरा भवन्ति। ते तु भगगुदवस्तिप्रदेशदारणाच्च भगन्दरा इत्युच्यन्ते। अपक्वाः पिड़काः पक्वास्तु भगन्दराः। तेषान्तु पूर्वरूपाणि कटीकपालवेदना गुदकण्डूर्दाहः शोफश्च गुदस्य भवति" इत्युपक्रम्य। "पित्तन्तु प्रकुपितमनिलेनाधःप्रेरितं पूर्ववदवस्थितं रक्तां तन्वीमुच्छ्रितामुष्ट्रग्रीवाकारां पिड़कां जनयति। साऽस्य चोषादीन् वेदनाविशेषान् जनयत्यप्रतिक्रियमाणा च पाकमुपैति वह्न्यग्निक्षाराभ्यामिव दह्यते दुर्गन्धमुष्णमास्रावं स्रवत्युपेक्षितश्च वातमूत्रपुरीषरेतांसि विसृजति, तं भगन्दरमुष्ट्रग्रीवमित्याचक्षते"। उष्ट्रशिरोधरोऽप्यत्र "प्रकोपणैः पित्तमतिप्रकोपितः करोति रक्तां पिड़कां गुदागताम्। तदाशुपाकाहिमपूतिवाहिनीं भगन्दरं तूष्ट्रशिरोधरं वदेत्" निदानम्।

**उष्ट्रधूसरपुच्छी** स्त्री उष्ट्रस्येव धूसरः पुच्छ इव मञ्जरी अस्याः जातित्वात् ङीष्। (विछाति) वृक्षभेदे रत्नमाला स्वार्थे कन् ह्रस्वः। तत्रार्थे।

**उष्ट्रपादिका** स्त्री उष्ट्रस्य पादा इव पादोमूलमस्याः कपि अत इत्वम् । (मदनमाली) भूमिलतायाम् रत्नमा०

**उष्ट्रस्थान** न०६त०। उष्ट्रस्य स्थानायाम् । तत्र भवः अण् । स्थानान्तत्वात् तस्य लुक् । उष्ट्रस्थान तत्रभवे त्रि०तद्धित वृत्ति विशेष्यलिङ्गत्वनियमात् त्रिलिङ्गत्वम् ।

**उष्ट्रासिका** स्त्री आसनम् आसिका आस–भावे ण्वुल् उष्ट्रस्येवासिका । उष्ट्रस्येव आसने । "उष्ट्रासिकाः आसते" पा० भाष्यम् अत्र क्रियाविशेषणस्यापि यथा बहुवचनान्तताक्लीवता च तथाकारे समर्थितम् तत्र शब्दार्थरत्ने अस्माभिर्दर्शितम् ।

**उष्ट्रिका** स्त्री उष्ट्रस्याकारः पृष्ठावयव इव आकारोऽस्यस्याः ठन् । मृण्मये मद्यभाण्डभेदे शिशु: "धूमेकृशिलापविटारितोष्ट्रिका" माघः। उष्ट्री+स्वार्थे कन्। उष्ट्रजातिस्त्रियाञ्च ।

**उष्ण** पु० उष+नक् । १ग्रीष्मे, ऋतौ, २आतपे, ३पलाण्डौ ४नरकभेदे, ५शीतविरोधिस्पर्शे च । अर्श०अच् ।६तद्वति, ७आलस्यरहिते दक्षे च त्रि० । "ऋतके ऋतके चैव न स्नायादुष्णवारिणा" स्मृतिः "आदद्रे नातिशीतोष्णः नभस्वानिव दक्षिणः" रघुः "अर्भाल्पमुष्णैरपि तस्य सोष्मणः" "स्नापयत्नभिमानोष्णं वैनमाला मुखानिलैः" माघ: ६तापे पु०मुष्णत्वमुष्णं ततिभिरुखणाम्" माघः "उष्णं तापम्" मल्लि० । तत्र ग्रीष्मस्य सूर्यतापाधिक्यवत्त्वात् उष्णत्वम् "शीतातीवकरोभानुर्हेमन्ते तथाविधः" इति मयप्रश्ने "अन्या चलतया तेन ग्रीष्मे तीव्राः कराः रवेः । देवभागेऽसुराणाञ्च हेमन्ते मन्दताऽन्यथा" सू०सि०तयैवोक्तेः । विवृतश्चेदं रङ्गनाथेन "तेन उत्तरदक्षिणगोलयोः सूर्यस्योत्तरदक्षिणस्थारक्रकारणेनेत्यर्थः । देवभागे जम्बूद्वीपे आसन्नतया सूर्यस्यात्यन्तनिकटस्थत्वेन ग्रीष्मे ग्रीष्मर्त्तौ सूर्यस्य तेजोगोलकस्यकिरणास्तीक्ष्णा अत्युष्णाः । असुराणां देवभाग इत्यस्य समन्वयाहृत्यानां भागे समुद्राद्क्षिणप्रदेशे हेमन्ते हेमन्तर्त्तौ तकारात् सूर्यस्यात्युष्णाः किरणाः सूर्यस्यात्यासन्नत्वात् । अन्यथा सूर्यस्य दूरस्थत्वे मन्दता किरणानामुष्णताभावः । देवभागे हेमन्तर्त्तौ कराणां मन्दता । अतएव तत्र शीताधिक्यम्, दैत्यभागे ग्रीष्मे कराणां मन्दता शीताधिक्य च । तथाच देवभागे दक्षिणगोले सूर्यस्य दूरस्थत्वमुत्तरगोले निकटस्थत्वं मध्यगतदेशानां क्रमेणाधिकाल्पत्वादीति भावः" । "अतएवोक्तं मिथुनकर्कटयोर्मध्ये गाढं तपति भास्करः" ति०त० ऍ० । एतत्र देवभाग एव भारतभागे, ग्रीष्मऋतुश्च उष्णतापाङ्गात्मकः ।"मधुश्च माधवश्च वासन्तिकावृतुः शुक्रश्च शुचिश्च ग्रैष्मावृतू" काल०मा०द्वदेकोपधानमन्त्रोक्तेः । ततो भावे इमनिच् । उष्णिमन् पु० तल् उष्णता स्त्री त्व उष्णत्व न० ष्यञ् औष्ण्य न०। उष्णस्पर्शे स्वार्थे कन् उष्णकस्पर्शोऽप्यर्थे । उष्णस्पर्शस्तु तेजसोगुणः "स्पर्श उष्णस्तेजसस्तु" भाषोक्तेः जलादीनां तेजःसंयोगविशेषादौपाधिकः । देहस्य तथात्वे कारणमूष्मन्शब्दे वक्ष्यते गुणवचनत्वात् प्रकारे द्वित्वम् उष्णोष्ण उष्णप्रकारे । "उष्णोष्णशीकरस्तुतः" माघः

**उष्णक** त्रि० उष्णमिव करोति कन् । १आतुरे, क्षिप्रकारिणि क्षिप्रकारी हि आद्याधायकमाक्षमनादत्त स्वकर्तव्यं व्याप्रियते इति तस्य तथात्वम् । उष्णं करोति उष्ण+ णिच्–ण्वुल् । २ज्वरे पु० ।

**उष्णकर** पु० उष्णाः कराः किरणोऽस्य । १सूर्ये । उष्णकिरणोष्णदीधिति प्रभृतयोऽप्यत्र । उष्णं करोति कृ–अच् ६त० । २उष्णकारके त्रि०

**उष्णकाल** पु०कर्म० ६त०वा । ग्रीष्मे ऋतौ ।"तक्रं नैव ददतेद्यात् नोष्णकाले न दुर्बले" सुश्रुतः ।

**उष्णग** पु० उष्णमुष्णस्पर्शं गच्छति यत्र गम–बा०आधारे ड । ग्रीष्मे काले "मातङ्गोऽप्यपतत् भूमौ नदीरोधद्रुमोष्णगे" भा०व०२२१अ०। आधारे घञ् उष्णगमोऽप्यत्र हेम०।

**उष्णगु** पु० उष्णागावः कराः अस्य सूक्ष्मः । सूर्ये । उष्णरश्म्यादयोऽप्यत्र "कुबेरगुप्तां दिशमुष्णरश्मौ" कुमा० ।

**उष्णङ्करण** न० ६त०करणे एर मुम् । उष्णसाधने ।

**उष्णनदी** स्त्री कर्म०। "यमद्वारे महाघोरे तप्ता वैतरणी नदी" इत्युक्तायाम् तप्तायां वैतरण्याम् नद्याम् ।

**उष्णवारण** न०उष्णं वारयति वृ–णिच्–ल्यु ६त०। आतपत्रे, छत्रे "वर्ण्यमन्भोजमिवोष्णवारणम्" कुमा०अस्योत्पत्त्यादिकम् आतपत्रशब्दे ६४८ पृ० उक्तम् । तल्लक्षणं युक्ति०सं० दर्शितं यथा "निर्मितं तु हंसपक्षैः कृकवाकुमयूरसारसानां च । दौकूलेन नवेन तु समन्ततश्चादितं शुक्लम् । मुक्ताफलैरचितप्रलम्बमालाविलं स्फटिकमूलम् । षड्हस्तशुद्धहेमं नवपर्व नगैकदण्डं च । दण्डार्धविस्तृतं तत् समाहतं रत्नविभूषितहृदयम् । नृपतेस्तदातपत्रं कल्याणकरं विजयदं च । युवराजनृपतिपत्न्याः सेनापतिदण्डनायकानां च । दण्डोऽर्धपञ्चहस्तः समपञ्चकतार्धविस्तारः । अन्ये वात्सल्याञ्च प्रसादपट्टैर्विभूषितशिरस्काम् । व्याघ्रविरहमात्रं छत्रं कार्यं च मायूरम् ।

शेषाणां च नराणामातपवारणं तु चतुरस्रम्। समवृत्तदण्डयुक्तं छत्रं कार्य्यं तु विप्राणाम्" उष्णप्रादयोऽप्यत्र। तद्धारणे गुणाः सुश्रुते उक्ता यथा "वर्षानिलरजोघर्म्महिमादीनां निवारणम्। वर्ण्यं चक्षुष्यमोजस्यं मङ्गलं छत्रधारणम्"।

**उष्णवीर्य्य** पु० उष्णमुष्णं वीर्य्यमस्य। १शिशुमाराख्ये जलजन्तौ। २उष्णवीर्य्यवति त्रि० हेम०। उष्णवीर्य्यद्रव्याणि च सुश्रुते नानास्थाने उक्तानि तानि तत एवावगन्तव्यानि

**उष्णांशु** पु० उष्णाः अंशवोऽस्य। सूर्य्ये।

**उष्णागम** पु० उष्णम् आगम्यतेऽत्र गम+आधारे-अप्। निदाघकाले। उष्णाभिगमोऽप्यत्र शब्दच०।

**उष्णालु** त्रि०उष्णं न सहते आलुच्। उष्णाऽसहने। "उष्णालुः शिशिरे निषीदति तरोर्मूलालवाले शिखी" विक्रमो०।

**उष्णासह** पु०उष्णम् आसह्यतेऽत्र आ+सह-अप्। १हेमन्तर्त्तौ। उष्णं न सहते अच्। २असह्योष्णे त्रि०।

**उष्णिका** स्त्री अल्पमन्नमस्याम् अल्पार्थे कन् नि० अन्नस्य उष्णादेशः। १यवाग्वाम्(जाउ)। उष्णकशब्दात् स्त्रियां टाप् अत इत्वम्। २दक्षायाम् स्त्रियाम्।

**उष्णिज्** पु० वश-इजिक् बा० सुट्। उष्णस्पर्शयुक्ते तत्र प्रज्ञा० स्वार्थे ण। औष्णिज तदर्थे।

**उष्णिह्** स्त्री उत्+स्निह्यति क्विन् नि०उदोऽन्त्यलोपे षत्वम्। अष्टाक्षरपादके १छन्दोभेदे। झलादौ कुः उष्णिक्। उष्णिग्भ्याम्। "गायत्र्युष्णिगनुष्टुप् च वृहती पङ्क्तिरेव च" वृ०र०। "अथ छन्दांसि गायत्र्युष्णिगनुष्टुब् वृहती" इत्युपक्रम्य "द्वितीयश्चेदुष्णिक् त्रिपदान्त्योद्वादशकः। आद्यश्चेत् पुरउष्णिक्, मध्यमश्चेत् ककुप्। त्रैष्टुभ जागतचतुष्काः ककुबन्युष्णिक्शिरैकादशिनो परः षट्कास्तुशिराः मध्ये चेत् पिपीलिका मध्याद्यपञ्चकयोऽष्टका अनुष्टुब्गर्भा चतुःसप्त कोष्णिगेव" सर्वानु० ५ख०। "एवमेवोष्णिहं सवितारं ग्रीवास्वनूक्ते" इति सर्वानु० ४ख० उक्तेः तस्याः सवितृदेवताकत्वेन ग्रीवासु अनूक्ते च न्यासः। तस्या उपधानप्रकारः शत०ब्रा० ८,६,२,२, आदौ दर्शितं तत एवावसेयः। २तदभिमानिदेवभेदे च। अश्वमेधे "त्रिवत्सा अनुष्टुभे तुर्य्यवाह उष्णिहे" यजु० २५,१२१। पशुविशेषाणामुक्तदेवताविशेषोद्देशेन यूपादौ बन्धनमुक्तम्। अत्र हलन्तत्वेऽपि अजादि०टाप्। उष्णिहा "उष्णिहा छन्द इन्द्रियम्" यजु० २१,१२, "वृहत्युष्णिहा ककुप् सूचीभिः शम्यन्तु त्वा २३,३३, "ग्रीवास्तु ग्रीवाः प्र स्तवा तूष्णिहा हलस्येव शचीपतिः" अथर्ववेदे ६,१२४,१,

**उष्णीगङ्ग** न०उष्णीभूता गङ्गा नदीभेदो यत्र मध्यपदलोपः। भृगुतुङ्गपर्वतस्थे तीर्थभेदे "अपां ह्रदं च पुण्याख्यं भृगुतुङ्गं च पर्वतम्। उष्णीगङ्गे च कौन्तेय! शामाठ्यः समुपस्पृश" भा०व०१२५ अ०।

**उष्णीष** पु०न०उष्णमीषते हिनस्ति ईष-क शक० पररूपम्। १शिरोवेष्टनवस्त्रे(पागड़ि)२किरीटे च "अथास्मा अध्वर्युरुष्णीषं प्रयच्छति तदञ्जलिना प्रतिगृह्य त्रिःप्रदक्षिणं शिरः सम्मुखं वेष्टयित्वा" आ०श्रौ०सू०६,७। "सर्वा लोहितोष्णीषा निष्कंशिनो याजयेयुः" आ०श्रौ० ६,७,४। "लोहितोष्णीषा ऋत्विजश्चरन्तीति" श्रुतिः। समावर्त्तनकाले च तस्य धारणमाचार्य्याय दानं च विहितम्। "अथैतान्युपकल्पयीत समावर्त्तमाने मणिकुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रजमुन्मर्दनमनुलेपनमाञ्जनमुष्णीषमित्यात्मने आचार्य्याय च"। "यद्युभयोर्न विन्देताचार्य्यायैव" आ० गृ० ३,८,१,२। तद्धारणगुणः सुश्रु० उक्तः "पवित्रं केश्यमुष्णीषं वातातपरजोऽपहम्। वर्षानिलरजोघर्म्महिमादीनां निवारणम्"।

**उष्णीषिन्** त्रि० उष्णीष+अस्त्यर्थे इनि। १उष्णीषधारिणि स्त्रियां ङीप् २महादेवे पु०। "उष्णीषी च सुवक्त्रश्च उदग्रो विनतस्तथा" शिवस्तुतौ भा०अनु०१७। "उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढुषे" भा० अनु० ८।

**उष्णोदक** न० कर्म्म०। अग्निना तप्तजले क्वाथ्यमानपादशेषार्द्धावशेषपादादिहीनके जले तद्गुणादि भावप्र० "अष्टमेनांशशेषेण चतुर्थेनार्द्धकेन वा। अथवा क्वथनेनैव सिद्धमुष्णोदकं वदेत्"। तद्गुणाः "श्लेष्मामवातमेदोघ्नं वस्तिशोधनदीपनम्। कासश्वासज्वरान् हन्ति पीतमुष्णोदकं निशि। क्वाथ्यमानन्तु निर्वेगं निष्फेनं निर्म्मलन्तथा। अर्द्धावशिष्टं यत्तोयं तदुष्णोदकमुच्यते। ज्वरकास कफश्वासवातपित्तामेदसाम्। नाशनं वस्तिसंशोधि पथ्यमुष्णोदकं सदा। त्रिपादशेषं सलिलं पीतं शरदि शस्यते। हेमन्तेऽर्द्धशेषं शिशिरे तथा वर्षावसन्तयोः" अन्ये तु "निदाघे त्वर्द्धपादोनं पादहीनन्तु शारदम्। शिशिरे च वसन्ते च हिमे चार्द्धावशेषितम्। अष्टमांशावशेषन्तु वारि वर्षासु शस्यते" केचित्तु "विधिमुक्तेषु वाप्येवं वेदेषु त्रिषु पक्वयोः। एकभागावशेषं स्यादम्बु वर्षादिषु क्रमात्"। अत्र दोषाणां यथोल्बणता हीनता वा तथा व्यवस्था कल्पनीया। "तत् पादहीनं पित्तघ्न-

र्द्धहीनन्तु यातनुत्। त्रिपादहीनं संग्राह्यग्नि करं लघु"। त्रिपादहीनस्य तन्त्रान्तरे आरोग्याम्बुसंज्ञा। तस्य गुणास्तु। "पादशेषन्तु यत्तोयमारोग्याम्बु तदुच्यते। आरोग्याम्बु सदा पथ्यं कासश्वासकफापहम्। सद्यो-ज्वरहरं ग्राहि दीपनं पाचनं लघु। आनाहपाण्डु-शूलार्शोगुल्मशोथोदरापहम्" भा०प्र० "दिवा शृतन्तु यत् तोयं रात्रौ तद्गुरुतां व्रजेत्" वैद्यकम्। "संक्रान्तौ वर्षवृद्धौ च ग्रहणे चन्द्रसूर्य्ययोः। सूतके मृतके चैव न स्नायादुष्णवारिणा" स्मृतिः। "शीतमप्युद्धृतं वापि शीतमुष्णमथापि वा। गाङ्गं पय पुनात्याशु पापमा-मरणान्तिकम्" मरीचिः। "नित्यं नैमित्तिकञ्चैव क्रियाङ्गं मलकर्षणम्। तीर्थाभावे च कर्त्तव्यमुष्णोदकपरोदकैः" यम:। "उष्णाम्बुनाधःकायस्य परिष० . . . तेनैव चोत्तमाङ्गस्य बलहृत् केशचक्षुषो" आ०त० आयु वेदः। उष्णोदकेनाचमननिषेध आचमनशब्दे उक्तः।

**उष्णोपगम** पु० उष्ण उपगम्यतेऽत्र आधारे घञ् अवृद्धिः। निदाघकाले ग्रीष्मर्त्तौ [कन्। तत्रैव आतपे च।

**उष्म** पु० उष–मक्। १घर्मे, २आतपे, ३ग्रीष्मर्त्तौ च। स्वार्थे

**उ(ऊ)ष्मन्** त्रि०उष–आधारे मनिन् वा० वा ह्रस्वः। १ग्रीष्म-र्त्तौ कर्त्तरि मनिन्। २आतपे "नोपतापि मनः सोष्म" "उष्णोष्णशीकरसृजः प्रबलोष्मणोऽन्तः" "अभितापसम्पदमथोष्णरुचि तस्य सोष्मणः" माघः। दीर्घादिः ३शषसहवर्णेषु।

**उ(ऊ)ष्मप** पु०उष्माणं पिबति पा–क्विप्। भृगोः पुत्रे १पितृ-गणभेदे "सुकालिनो बर्हिषद उ(ऊ)ष्मपा आज्यपा-स्तथा" पितृगणनायां स्मृतिः। २उ(ऊ)ष्मपानकर्त्तरि तप-स्विभेदे त्रि०। "उर्द्धसम्भैरिव रविनिविष्टदृष्टिभिरू(रु)-ष्मपैः" काद०। [घञ् अवृद्धिः। निदाघकाले।

**उ(ऊ)ष्मागम** पु० उ(ऊ)ष्मा आगम्यतेऽत्र आ+गम–आधारे

**उ(ऊ)ष्माय** नामधा० उ(ऊ)ष्माणमुद्वमति उ(ऊ)ष्मन्+क्यङ्। उ(ऊ)ष्मायते औष्मायिष्ट उ(ऊ)ष्मायमाणः।

**उस्र** पु०वसन्ति रसा अत्र वस–रक् नि० न षत्वम्। १कि-रणे, सूर्य्यकिरणानां जलाकर्षकत्वेन रसवत्त्वात्तथात्वम्। २अन्येषां यथायथं रसवत्त्वम् बोध्यम्। ३वृषे। ४सुरभ्यां ५लतायां ६पृथिव्यां च स्त्री निरु०। देवमात्रे पु०उज्ज्व० "उस्रावेतं धूर्षाहौ" यजु०४,३३। "उस्रौ अनड्वाहौ" वेददी० "क्रत्वा नावीन्नः पितेव" ऋ०६,१२,४। "उस्रौ वृषभः" भा० "शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव" रघुः "यो भर्त्ता भुवनानां य उस्राणामपीच्या" ऋ०८,४१,५। ७सूर्य्ये "प्रमिनाति न दृह्न्त्यो अद्ये" १,५८,४। "वसन्ति नभसोऽत्युत्तः सूर्य्यः" भा०। सूर्य्यरश्मिसम्पर्कात् ८दिवसे च। "महुमा च्युसयामा" ऋ०७,७१ ४, उस्र-यामा दिवसं प्रति गन्ता" भा० उस्रमिच्छति उस्रयति "उस्रागोमाङ्कसाटः प्रतिषेधः" वार्त्ति० लडादौ नाट उस्री-त्युक्तेः षत्वाभावश्च अंशं यत्। ९सहवासिनोः अश्विनी-कुमारयो द्वि०व०। "अग्नय उस्रा जरन्ते" ऋ० ४,४, ५,५, उस्रा सहनिवसन्तावश्विनीसुतौ" भा०।

**उस्रि** स्त्री वस–वा० कि षत्वाभावः। गव्याम् "हिन्वन्ति सूर मुस्रयः" ऋ०९ ६५,१, "उस्रयः सर्वा गव्यः" भा०।

**उस्रिक** पु० उस्र+अल्पार्थे स्वार्थे वा ठन्। अल्पवाहके १जीर्णवृषभे अल्पक्षीरस्राविणयां २स्त्रीगव्याम् स्त्री

**उस्रिय** पु०उस्र+स्वार्थे अल्पार्थे वा घ। १जीर्णवृषभे "उस्रियो वृषभः क्रन्दतु द्यौः" ऋ०५,५८,६, २स्त्रीगव्याम् स्त्री निरु०। "गवामूर्व्वमुस्रियाणाम्" ऋ०५,२ ४, उस्रियाणां क्षीरमुत्सारयन्तीनाम्" भा०।

**उह** अर्दने भ्वादि० पर० सक०सेट् इरित्। ओहति औहत्, औहीत्, उवोह ऊहतुः। अप अपसारणे तामपौहीत् निशाचरः" भट्टिः "अपौहद्रुत्तर." रघुः

**उह** अव्य० उ च ह च द्व०। १संबोधने, २एवार्थे च।

**उहह** अव्य० उह च ह च। सम्बोधने।

**उहू** स्त्री उह–कू। १खेदसूचके शब्दे "नखानि विधुशङ्कया करतलेन तत्याहृणोत् ततः किसलयभ्रमात् करमयाचि षट्पदः। ततोवलयशिञ्जिते भ्रमरगुञ्जिताशङ्कया उहूरिति कुहूरवध्वनिभियाऽपतत् मूर्च्छिता"। वह–कू। वाहके त्रि०। "हिरण्य पर्णा उहुव ऊर्ध्वमुखः" ऋ० २,४५, ४, उहुवः वाहकाः" भा० उवङ् छान्दसः

**उह्यमान** त्रि०वह–कर्म्मणि शानच्। यस्य वहनं क्रियते तस्मिन् "यथोह्यमानः किल भोगिवैरिणा" नैषध०।

**उह्र** पु० वह–रक्। वृषभे शब्दार्थचिन्तामणिः

इति वाचस्पत्ये उकारादिशब्दार्थसङ्कलनम्।

—•◎•—

# ऊ

ऊकारः स्वरवर्णभेदः "ओष्ठजावुपू" इत्युक्तेः ओष्ठस्थानोच्चारणीयः स च उदात्तानुदात्तस्वरितभेदात् त्रिविधः दीर्घएव द्वाभ्यां मात्राकालाभ्यामुच्चार्यत्वात् तस्य प्लुतत्वोक्तिश्चिन्त्या त्रिमात्रकालस्यैव प्लुतत्वात् व्यङ्ग्याकारभेदाच्च प्लुतस्य पार्श्वस्थमात्रर्द्धविच्छिन्नत्वाकारेणैव लेखनसमाचारात्। त्रिविधोऽपि अनुनासिकाननुनासिकभेदात् द्विधा तेन षड्विधः तस्योच्चारणे विवार आन्तरप्रयत्नः "स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम्" शिक्षोक्तेः विवृतञ्च जिह्वाग्रादेः स्पर्शाभावः। "अचोऽस्पृष्टायणस्त्वीषत्, नेमस्पृष्टाः शलः स्मृताः" इति शिक्षोक्तेः तस्य तन्त्रे शुक्लाद्याकारतया ध्येयतोक्ता यथा "शुक्लकुन्दसमाकार ऊकार, परकुण्डली" कामधेनुतन्त्रम्। तस्य वामकर्णे सबिन्दुकतया निर्बिन्दुकतया वा मातृकान्यासे न्यासः। अतएव वामकर्णशब्देन तस्याभिधेयता "ईशानः सेन्दुवामश्रवणपरिगतो बीजमन्यन्महेशि।" कर्पूरस्तवे हूङ्कारमन्त्रोद्धारः। तत स्वरूपे कारप्रत्ययः। तपरत्ययश्च। अधिकं स्वरवर्णसमाप्तौ वक्ष्यते।

ऊ अव्य० वेञ् क्विप्। १सम्बोधने, २वाक्यारम्भे, ३दयायां, ४रक्षायाञ्च मेदि० उञ स्थाने इतौ परे अनुनासिक ऊँ इति आदेशे तदर्थे तस्य प्रगृह्यत्वादितौ न सन्धिः।

ऊ पु० अवतीति अव-क्विप् ऊठ्। १महादेवे २चन्द्रे च। ३पालके त्रि० शब्दरत्ना०

ऊढ़ पु० वह-प्रापणे प्रापणार्थत्वात् १कर्त्तरि क्त। १कृतविवाहे पुंसि "परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात्" अमरः। अवत ऊढवत् तत्रैव पु०। कर्मणि क्त। कृतविवाहायां स्त्रियाम् स्त्री। "भार्योढं तमवस्थाय तस्यै सौमित्रयेऽसको" भट्टिः "कन्या पितुर्धनहरो यद्यनूढा भवेत्तदा" स्मृतिः "ऊढानूढासमवायेऽनूढैव प्रथमं धनहारिणी" दायक०। ऊढमाख्यत् "इति वाक्ये औजढत् त सि० कौ० औडढत् त इत्यन्ये। २कृतवहने धृते त्रि०। अस्य प्रशब्देन प्रा० स० वृद्धिः। प्रौढः "प्रौढकन्यायादोषदर्शनात्" रघु० "अथवकुप्रवहणेनार्थकस्येति" परिभाषया प्रोढशब्दनित्यत्व न वृद्धिः

ऊढकङ्कट पु० ऊढो धृतः कङ्कटः कवचो येन। धृतकवचे वर्म्मिते।

ऊढि स्त्री वह-भावे क्तिन् संप्र०। १वहने २विवाहे च। प्र+ऊढि प्रा० स० वृद्धिः। प्रौढि। ऊढिमाख्यत् औजिढत् त सि० कौ० औडिढत् त इत्यन्ये।

ऊत त्रि० वेञ्-क्त यज० दीर्घः। १कृतवयने २ग्रथिते। अर्थान्तरसन्ताने क्त। ३स्यूते "यस्मिन्नोतञ्च प्रोतञ्च" श्रुतिः। अव-क्त ऊठ्। ४रक्षिते त्रि०।

ऊति स्त्री अव-क्तिन् ऊठ्। १रक्षणे। "देवस्य यन्त्य् तयो विविधाः" ऋ० १,१४,६, "शतमस्माकं सहस्रमूतयः" ४,३१,१० कर्त्तरि क्तिच् ऊठ। २रक्षितरि "उरुष्यन्तमाध्वादस्था न ऊती" ऋ० ४४,२, "ऊतीः ऊतय रक्षन्तः" भा० ऊय-वेञ् वा क्तिन्। ३सीवने (सेलाइ) ४वयने (बोना) ५क्षरणे शब्दचि०। ६लीलायाम् "नचास्य कश्चिन्निपुणेन धातुरवैति जन्तुः कुमनीष ऊतीः" भा० १,५,३८, "ऊतीर्लीलाः" श्रीधरः वेञ्-कर्मणि कर्त्तरि वा क्तिन् क्तिच् वा। पुराणलक्षणमध्ये ७कर्म्मवासनारूपे तल्लक्षणभेदे। "तस्मादिदं भागवतं पुराणं दशलक्षणम्" इत्युक्त्वा "अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः। मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः" इति दश लक्षणान्युद्दिश्य तेषां लक्षणान्युक्तानि यथा "भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः। ब्रह्मणो गुणवैषम्यात् विसर्गः पौरुषः स्मृतः। स्थितिर्वैकुण्ठ० पोषणं तदनुग्रहः। मन्वन्तराणि सद्धर्म्म ऊतयः कर्म्मवासनाः। अवतारानुचरितं हरेश्चास्यानुवर्त्तिनाम्। पुंसामीशकथाः प्रोक्ता. नानाख्यानोपबृंहिताः। निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः। मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः। आभासश्च निरोधश्च यतोऽस्त्यध्यवसीयते। स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते" भाग० २,१०,२,८ "कर्म्मणां वासनाः ऊयन्ते कर्म्मभिः सन्तन्यन्ते इत्यूतय यद्वा तन्त्वर्थात् संश्लेषार्थाद्वा वयतेर्धातोरिदं रूपम्। ऊयन्ते कर्म्मभिर्वर्द्धन्ते संश्लिष्यन्ते वा ऊतयः" श्रीधरः

ऊधन् न० ऊधस्+पृषो० सस्य नः। स्त्रीपशोः दुग्धाधारस्थाने (बेड़) "वत्सो न मातुरुप सर्ज्यूधनि" ऋ० ६,६८,१। "यदा पीतासो अंशवो गावो न दुह्र ऊधभिः" ८,६, १९। "प्र धेनवः सिस्रते दृष्ण ऊध्नः" ऋ० ४,२२,६।

ऊधर न० ऊधस्+पृ० सस्य रः। स्त्रीगव्यादेः ऊधसि (बेड़) "ऊधर्नग्ना जरन्ते" ऋ० ८,२,१२।

ऊधस् न० उन्द-क्लेदने असुन् किच्च दीर्घः। स्त्रीगव्यादेः दुग्धाधारे स्थाने (बेड़) "गवामूधस्सु वक्षणासु" ऋ० १०,४६,१०।

"यदैव स्त्रियै समावाप्यायेते ऊधः पशूनाम्" शत० ब्रा० २,५,१,५। अस्य बहु० स०अनङ् समा० ङीप्। पीनोध्नी घटोध्नी। "भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि" रघुः। "अस्त्रियान्तु न कुण्डोध्नी धेनुकम्" सि०कौ०। अनन्तत्वे नैवोपपत्तौ अनङ्विधानं समासे सान्तप्रयोगवारणार्थम्। समासान्तविधेरनित्यत्वात् क्वचित् "सरस्कन्धेरां स्वाकारां पीनोधसमनिन्दिताम्। अभिमन्त्र्य सतां राजन्नन्दिनीं गाधिनन्दनः" भा० आ० १७५ अ०। आर्षत्वाद्वा तथा प्रयोगः। लोके तु न तथा। तत्र भवः शरीरावयवत्वात् यत्। ऊधस्य तद्भवे दुग्धे न०। "ऊधस्यमिच्छामि तवोपभोक्तुम्" रघुः। प्राशस्त्ये मतुप् मस्य वः ङीप्। ऊधस्वती प्रशस्तोधोयुक्तायां गवि। "सिषिचुःस्म प्रजाम् गावः पयसोधस्वतीर्मुदा" भा० १, १०,५। ऊधसे हितम् गवादि° यत् अनङ् च। ऊधन्य ऊधसोहिते द्रव्यभेदे, यद्भोजने आपीनं पीनं भवति तस्मिन् द्रव्ये त्रि०। २रात्रौ निरु० तस्याश्च हि मकरकरसम्पर्केण क्लेदयोगात्तथात्वम्।

**ऊन** परिहाणे अदन्तचुरा० उभ० सक० सेट्। ऊनयति ते औनिनत् त लुङि वा चङ् औनयीत् औनयिष्ट। ऊनः ऊनितः। "मा त्वायतोजरितुर्काममूनयीः" ऋ० १,५,२,२।

**ऊन** त्रि० ऊन-हानौ अच्। १हीने, २असंपूर्णे च। "ऊनं न सत्वेष्वधिकोबबाधे" "किञ्चिदूनमनूनर्द्धेः शरदामयुतं ययौ" रघुः। "ऊने दद्यात्गुरुत्वेनेव यावत् सर्व्वमृगुर्भवेत्" ह० र०। "ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः" मनुः "ऊनं वाप्यधिकं वापि लिखेद्यो राजशासनम्" याज्ञ०। ऊनार्थशब्दयोगे तृतीया। एकेनोनः। ऊनार्थकशब्देन वा तृतीयास० माषेणोनः माषोनः कलोनः कलयोनः। एकोनविंशतिः एकोनत्रिंशत् एकोनचत्वारिंशत् एकोनपञ्चाशत् एकोनषष्टिः एकोनसप्ततिः एकोनाशीतिः एकोननवतिः एकोनशतम्। तत्तत्संख्याया एकैकोनसंख्यायाम्। एवं द्व्यूनविंशत्यादयोऽपि अष्टादशादिसंख्यासु। संख्यासु एकत्वस्य प्रथमोपस्थितत्वात् एकशब्दाप्रयोगेऽपि एकत्वेनैवोनत्वावगमात् ऊनविंशत्यादिशब्दानामेकोनविंशत्यादीनां बोधकत्वम्। "एकेन द्वाभ्यामित्युनके निपातः" सर्व्वज्ञ०।

**ऊनचत्वारिंश** त्रि० ऊनचत्वारिंशतः पूरणः डट्। ऊनचत्वारिंशत्संख्यापूरणे एवमूनविंश ऊनत्रिंश ऊनपञ्चाश इत्यादयः तत्तत्संख्यापूरणेषु। स्त्रियां ङीप्। तमार्थे तमप्। ऊनचत्वारिंशत्तम तदर्थे। एवमूनविंशतितमादयस्तत्तत्संख्यापूरणेषु स्त्रियां ङीप्।

**ऊबध्य** न० ऊ-ईषदर्थे बध्यं जीर्णम्। ईषज्जीर्णे तृणादौ "यदूबध्यमुदरस्यापवाति" ऋ० १,१६२,१० "ऊबध्यम् अजीर्णं तृणादि" भा० "अपामतिं दुर्मतिं बाधमाना ऊबध्यं वातं सब्वं तदारात्" यजु० १९,८४, "ऊबध्यमामाशयगतम् वेददी०। २तत्स्थाने च "एतद्धोऽस्य तदरूबध्यमिति सर्पेभ्योयस्मात्कृगूबध्यं यावत्सु तं भवति तद्धरन्ति सर्पाः" आश्व०गृ० ४,८,२६। अस्य अन्तःस्थ द मध्यत्वमित्यके।

**ऊबध्यगोह** पु० ऊबध्यस्य गोहः प्रच्छादनं यत्र। आन्त्रप्रच्छादनस्थाने। "सव्यावृतः शामित्रोबध्यगोहयात्वाखोत्कराद्यावान्" आश्व० गृ०श्रौ० ५,२,१६, "ऊबध्य गोहोनाम आन्त्रप्रच्छादनस्थानम्" नारा० वृ०। [वाच्य।

**ऊम्** अव्य० ऊय-मुक्। १रोषोक्तौ, २प्रश्ने, ३निन्दायां, ४अङ्गी-

**ऊम** न० अव-मन् किन् ऊठ् च। नगरभेदे उज्ज्वलद०। कर्त्तरि मन्। २रक्षितरि त्रि०। "परि व ऊमेभ्यः सिञ्चता मधु" ऋ० १०,३२,५, "ऊमेभ्यो रक्षितृभ्यः" भा०। भावे मन्। ३रक्षणे न०। "ये मर्त्यं पृतनयान्तमूमैः" १,१९८,७, ऊमैः अल्परक्षणैः" भा०। उज्ज्वलदत्तस्तु तस्य मा° लुक प्रकल्प्य उमाशब्दमाह। स च उमाशब्दार्थे। वेदोक्तपम् यदि वाऽवतेः रूपस्तथयथापि बा० ह्रस्व इति बोध्यम्।

**ऊय** तन्तुसन्ताने भ्वा० ईदित् आत्म० स क० सेट्। ऊयते औयिष्ट। ईदित्त्वात् निष्ठायां नेट् ऊतः ऊतवान् ऊतिः

**ऊररी** अव्य० ऊय-बा०ररीक्। १अङ्गीकारे, २विस्तारे च। कृञि गतिस० ऊररीकृत्य। क्त ऊररीकृत अङ्गीकृते विस्तीर्णे च त्रि०। घञ् ऊररीकारः अङ्गीकारे विस्तारे च पु०।

**ऊरव्य** पुंस्त्री ऊरौ भवः शरीरावयवत्वात् यत्। १वैश्ये तज्जातिस्त्रियां टाप् योपधत्वात् न ङीप्। वैश्यानां ब्रह्मण ऊरुजातत्वस्य "ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत" यजु० ३१,११, उक्तेः "लोकानां च विवृद्ध्यर्थं मुखबाहूरुपादतः। ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्त्तयत्" मनूक्तेश्च। तस्य वृत्तिरपि तत्रोक्ता। "मुखबाहूरुपज्जानां पृथक् कर्म्माण्यकल्पयत्" इत्युपक्रम्य "पशूनां रक्षणं दानमिज्याध्ययनमेव च। वणिक्पथं कुसीदञ्च वैश्यस्य कृषिमेव च"। २ऊरुभवमात्रे त्रि०।

**ऊरी** अव्य० ऊय-बा०रीक्। १अङ्गीकारे, २विस्तारे च।

अर्थादि० श्रजि गतिसमासादि ऊरवीवत् द्रष्टव्यम्।

**ऊरु** पु० ऊर्णूयते आच्छाद्यते ऊर्णु-कर्मणि कु नुलोपश्च। जानूपरिभागे तस्य वस्त्रादिभिराच्छादनीयत्वात् तथात्वम्। "नितम्बनारीपरिधानधूननस्फुटागसाप्यूरुषु लोलचक्षुषः" "करभकरोरुभिरुरुभिदंधानैः" माघः। "कदली कदली, करभः करभः करिराजकरः करिराजकरः। भुवनत्रितये न बिभर्त्ति तुलामिदमूरुयुगं न चमूरुदृशः" प्रसन्नरा०। "धात्रीकराभ्यां करभोपमोरुः" "भुजमूर्द्धोरुबाहुल्यादेकोऽपि धनदानुजः" रघुः अस्य उपमानपूर्व्वकत्वे उत्तरपदस्यस्य बहु०स०स्त्रियाम् ऊङ्। करभोरूः "करभोरु! रतिप्राप्ते द्वितीये पश्चमेऽष्टमम्" विद्यासुन्द०। संहितशफलक्षणवामपूर्वकस्यापि ऊङ्। संहितोरूः सम्यग्घितोरुका इत्यर्थः शफाविव संश्लिष्टौ ऊरू यस्याः शफोरूः। लक्षणयुक्तावूरू यस्याः लक्षणोरूः। वामौ मनोहरौ ऊरू यस्याः वामोरूः "नयन्तो चलशफरीविघट्टितोरुर्वामोरूरतिशयमाप विभ्रमस्य" किरा०। सहितसहपूर्व्वकस्यापि तादृशस्य ऊङ्। सहितौ हितयुतौ ऊरू यस्याः सहितोरूः। भारं सहेते सहावूरू यस्याः सहोरूः। ऊरौ भवः शरीरावयवत्वात् यत्। ऊरव्य ऊरुभवे वैश्ये पुंस्त्री तद्भवमात्रे त्रि०। स्वाङ्गतयाऽस्मात् निष्ठान्तात् बहु०स स्त्रियां ङीष्। ऊरुभिन्नी।

**ऊरुग्राह** पु ऊरू गृह्णाति लभते ग्रह-अण् उप०स०। ऊरुस्तम्भरोगे ऊरुस्तम्भशब्दे विवृतिः। "ऊरुग्राहगृहीताश्च केचित्तत्राभवन् भुवि" भा०द्रो०१४६ अ०।

**ऊरुज** पुंस्त्री ऊरोर्जायते जन-ड। वैश्ये स्त्रियां जातित्वात् ङीष्। २ऊरुजातमात्रे त्रि०। ऊरुजातोरुजन्मादयोऽप्युभयत्र। ३भृगुवंश्ये और्वे ऋषिभेदे पु० तस्य ऊरुतोजन्मकथा भा० आ०१७८,७९ अ० "कृतवीर्य इति ख्यातो बभूव पृथिवीपतिः। याज्यो वेदविदां लोके भृगूणां पार्थिवर्षभः। स तानग्रभुजस्तात! धान्येन च धनेन च। सोमान्ते तर्पयामास विपुलेन विशाम्पते!। तस्मिन्नृपतिशार्दूले स्वर्यातेऽथ कथञ्चन। बभूव तत्कुलेयानां द्रव्यकार्य्यमुपस्थितम्। भृगूणान्तु धनं ज्ञात्वा राजानः सर्व्व एव ते। याचिष्णवोऽभिजग्मुस्तांस्तात भार्गवसत्तमान्। भूमौ तु निदधुः केचित् भृगवो धनमक्षयम्। ददुः केचिद्द्विजातिभ्यो ज्ञात्वा क्षत्रियतो भयम्। भृगवस्तु ददुः केचित्तेषां वित्तं यथेप्सितम्। क्षत्रियाणां तदा तात! कारणान्तरदर्शनात्। ततो महीतलं तात! क्षत्रियेण यदृच्छया। खनताधिगतं वित्तं केनचिद्भृगुवेश्मनि। तद्वित्तं ददृशुः सर्वे समेताः क्षत्रियर्षभाः। अवमन्य ततः क्रोधाद्भृगूंस्तांश्शरणागतान्। निजघ्नुः परमेष्वासाः सर्वांस्तान् निशितैः शरैः। आगर्भादवकृन्तन्तश्चेरुः सर्वां वसुन्धराम्। तत उच्छिद्यमानेषु भृगुष्वेवं भयात्तदा। भृगुपत्न्यो गिरिं दुर्गं हिमवन्तं प्रपेदिरे। तासामन्यतमा गर्भं भयाद्दध्रे महौजसम्। ऊरुणैकेन वामोरुर्भर्त्तुः कुलविवृद्धये। तद्गर्भमुपलभ्याशु ब्राह्मण्यास्तु भयार्द्दिता। गत्वैका कथयामास क्षत्रियाणामुपह्वरे। ततस्ते क्षत्रिया जग्मुस्तं गर्भं हन्तुमुद्यताः। ददृशुर्ब्राह्मणीं तेऽथ दीप्यमानां स्वतेजसा। अथ गर्भः स भित्त्वोरुं ब्राह्मण्या निर्जगाम ह। मुष्णन् दृष्टीः क्षत्रियाणां मध्याह्न इव भास्करः। ततश्चक्षुर्विहीनास्ते गिरिदुर्गेषु बभ्रमुः। ततस्ते मोहमापन्ना राजानो नष्टदृष्टयः। ब्राह्मणीं शरणं जग्मुर्दृष्ट्यर्थं तामनिन्दिताम्। ऊचुश्चैनां महाभागां क्षत्रियास्ते विचेतसः। ज्योतिःप्रहीणा दुःखार्त्ताः शान्तार्च्चिष इवाग्नयः। भगवत्याः प्रसादेन गच्छेत् क्षत्रं सचक्षुषम्। उपरम्य च गच्छेम सहिताः पापकर्म्मणः। सपुत्त्रा त्वं प्रसादं नः कर्त्तुमर्हसि शोभने!। पुनर्दृष्टिप्रदानेन राज्ञः सन्त्रातुमर्हसि। ब्राह्मण्युवाच। नाहं गृह्णामि वस्तात! दृष्टीर्नास्मि रुषान्विता। अयन्तु भार्गवो नूनमूरुजः कुपितोऽद्य वः। तेन चक्षूंषि वस्तात! व्यक्तं कोपान्महात्मना। स्मरता निहतान् बन्धूनादत्तानि न संशयः। गर्भानपि यदा यूयं भृगूणां घ्नत पुत्त्रकाः!। तदायमूरुणा गर्भो मया वर्षशतं धृतः। षडङ्गश्चाखिलो वेद इमं गर्भस्थमेव ह। विवेश भृगुवंशस्य भूयः प्रियचिकीर्षया। सोऽयं पितृवधाद्व्यक्तं क्रोधाद्वो हन्तुमिच्छति। तेजसा तस्य दिव्येन चक्षूंषि मुषितानि वः। तमिमं तात! याचध्वमौर्वं मम सुतोत्तमम्। अयं वः प्रणिपातेन तुष्टो दृष्टीः प्रमोक्ष्यति। वसिष्ठ उवाच। एवमुक्तास्ततः सर्वे राजानस्ते तमूरुजम्। ऊचुः प्रसीदेति तदा प्रसादञ्च चकार सः। अनेनैव च विख्यातो नाम्ना लोकेषु सत्तमः। स और्व इति विप्रर्षिरूरुं भित्त्वा व्यजायत। चक्षूंषि प्रतिलभ्याथ प्रतिजग्मुस्ततो नृपाः"।

**ऊरुदघ्न** त्रि० ऊरु+"प्रथमश्च द्वितीयश्च ऊर्द्ध्वमाने मतौ मम" वार्त्तिकोक्तेः ऊर्द्ध्वमाने दघ्नच्। ऊरुपर्य्यन्तोर्द्ध्वमानान्विते वालादौ। "यावानुद्बाहुः पुरुषस्तावत् क्षत्रियस्य

कुर्य्यात् मुखदघ्नं ब्राह्मणस्योपस्थदघ्नं स्त्रिया ऊरुदघ्नं वैश्यस्याष्ठीवद्दघ्नं शूद्रस्यैवं वीर्य्या ह्येते” शत० ब्रा० १३,८,३,११। “ऊरुदघ्नो द्वितीयोजानुदघ्नस्तृतीयः १२,२,१,२। अत्रार्थे द्वयसच् तत्परिमाणे उभयत्र स्त्रियां ङीप्।

**ऊरुपर्व्वन्** पु० ऊर्वोः पर्व्वेव। जानुनि (हाँटु)।

**ऊररी** अव्य० ऊय-ईरीक्। १अङ्गीकारे २विस्तारे च ऊर्य्यादि० गतित्वात् कृञि स०। ऊररीकृत्य। घञ्। ऊररीकार अङ्गीकारे विस्तारे च पु०। क्त। ऊररीकृत अङ्गीकृते विस्तीर्णे च त्रि०।

**ऊरुस्तम्भ** पु० ऊरू स्तम्भाति स्तन्भ-अण् उप० स०। १रोगभेदे स च रोगः भावप्र० सनिदानपूर्वरूपादिर्दर्शितः यथा “शीतोष्णद्रवसशुष्कगुरुस्निग्धैर्निषेवितैः। जीर्णाजीर्णैतथायासक्षोभस्वप्नजागरैः। सश्लेष्ममेदःपवनः साममत्यर्थसञ्चितम्। अभिभूयेतरं दोषमूरू चेत् प्रतिपद्यते। सक्थ्यस्थीनि प्रपूर्य्यान्तः श्लेष्मणा स्तिमितेन स.। तदा स्तम्भाति तेनोरू स्तब्धौ शीतावचेतनौ। परकीयाविव गुरू स्याताम् अतिशयव्यथौ। ध्यानाङ्गमर्दस्तैमित्यतन्द्राच्छर्द्यरुचिज्वरैः। संयुतौ पादसदनकृच्छ्रोद्धरणसुप्तिभिः। तमूरुस्तम्भमित्याहुराढ्यवातमथापरे” “प्राग्रूपं तस्य निद्रा ऽतिध्यानं स्तिमितता ज्वरः। रोमहर्षोऽरुचिश्छर्द्दिर्जङ्घोर्वोः सदनं तथा। वातशङ्किभिरज्ञानात्तत्र स्यात् स्नेहनात् पुनः। पादयोः सदनं सुप्तिः कृच्छ्रादुद्धरणं तथा। जङ्घोरुग्लानिरत्यर्थं शश्वदादाहवेदना। पदं च व्यथते न्यस्तं शीतस्पर्शं न वेत्ति च। संस्थाने पीडने गत्यां चालने चाप्यनीश्वरः। अन्यनेयौ हि सम्भग्नावूरूपादौ च मन्यते। यदा दाहार्त्तितोदाढ्यौ वेपनः पुरुषो भवेत्। ऊरुस्तम्भस्तदा हन्यात् साधयेदन्यथा नवम्” अन्यथा दाहाद्युपद्रवरहितं तमपि नवमुत्पन्नमात्रं साधयेत्। सात्त्विकभावेन २ऊर्वोःस्तम्भे च। “करिणीवोरुस्तम्भविष्टता” काद०।

**ऊर्ज्ज** बलाधाने जीवने वा अदन्तचु० पक्षे भ्वा० पर० सक० सेट्। ऊर्ज्जयति ऊर्ज्जति। अकर्मकत्वे जीवने अक० सेट्। ऊर्ज्जवत्। नाभयो वाजिनमूर्जयन्ति” ऋ० ६,८६,४, “यो वै वाङ्मनसि स प्राणिति तमूर्ज्जयति” शत० ब्रा० ७,५,१,१८, “तां वो देवाः सुमतिमूर्ज्जयन्तीमिषमश्याम” ऋ० ५,४१,१८।

**ऊर्ज्** स्त्री ऊर्ज्ज–भावे क्विप्। १बले। करणे क्विप्। २अन्ने न०। ३अन्नरसाभिधेयेऽन्नस्य अत्यन्तसारभूते रसभेदे स्त्री “विश्वे देवा यामूर्ज्जं मदन्ति” ऋ० ७,४६,४, “यास्त ऊर्ज्जस्तन्वः सम्बभूवुः” अथ० १२,१,१२. इह पृथिव्याः सम्बोधनेन तस्या विकारादन्नरूपत्वात्तत्वमूर्ज्जोऽन्नम्। “स ऊर्ज्जमुपजीवतीति” वृ० उ० “ऊर्ज्जं सूर्णाति मन्नम्” ऋ० २,१०, “उग्रस्त्वन्द्रियगण्मदा ऊर्ज्जं मयि धेहि” यजु० ४,४० “ऊर्क् अन्नरसरूपा” वेददी० ऊर्ज्जं बलं धेहि इत्यर्थः “अन्नमूलं बलं पुंसाम्” इत्युक्तेः अन्नरसस्य बलाधायकत्वम्। “तमःसमूहाकृतिमप्यशेषादूर्जा जयन्तं प्रथितप्रकाशान्” भट्टिः ऊर्ज्जा बलेन “बलमूर्ज्जस्व यच्छति” मनुः अत्र वलौजोभ्यां दैहिकमानसिकत्वाभ्यां शारीरिकं बलमूर्क् इति बोध्यम्। ४जले स्त्री। “ऊर्ज्जोनपात् स हि नायमस्मयुः” यजु० २७,४४, ऊर्क्शब्देनाप उच्यन्ते अद्भ्यो वृक्षा जायन्ते ततोऽग्निः इत्यग्नेरपां नप्तृत्वम्। वेददी०। “ऊर्ज्जांपते पाहि” यजु० २७,४२।

**ऊर्ज्ज** पु० ऊर्ज्जति रसादिक सोमोऽत्राधारे अच्। १कार्त्तिके मासि तस्य शरदोऽन्त्यत्वात् तत्र सोमेन रसौषधिक्यवर्द्धनेन तथात्वम्। “इषोर्जौ शरत्” इत्युपक्रम्य अयने विभज्य च “तयोर्दक्षिणं वर्षाशरद्धेमन्तास्तेषु भगवानाप्यायते सोमोऽम्ललवणमधुररसा बलवन्तो भवन्त्युत्तरोत्तरं च सर्वप्राणिनां बलमभिवर्द्धते” सुश्रुते शरदन्तोरन्तिमस्य कार्त्तिकस्य उत्तरोत्तरबलाधिक्याभिधानेनास्य तथात्वम्। करणे अच् घञ् वा सेट्कत्वान्न कुत्वम्। २उत्साहे। भावे अच् घञ् वा। ३बले ४जीवने च। करणे अच् घञ् वा। ५जले न० “ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालम्” यजु० २,३४। जलस्यौजोधायकत्वात् अन्नस्य जलाधीनतयैव बलहेतुत्वाच्च तथात्वम् “ऊर्ज्जसन ! ऊर्ज्जं धाः” ऋ० ६,४,४, “ऊर्ज्जस्य सने ! अन्नस्य दातः !” भा० “ऊर्जाद उत यज्ञियास” ऋ० १०,५३,४। ऊर्जादः अन्नादा भा० “अत्र ऊर्ज्जशब्दः अन्नगतं रसमभिधत्ते तेन तदाधायकत्वात् तथात्वम्। “तदक्षितपणादेष सभितोऽजमसंशयम्” हरि० कर्त्तरि अच्। ६बलान्विते त्रि० “कृतजगत्त्रयभूर्ज्जमतङ्गजम्” माघः।

**ऊर्ज्जयोनि** पु० ऋषिभेदे “ऊर्ज्जयोनिरुदारश्री नारदोऽपि महानृषिः” भा० अनु० ४अ०।

**ऊर्ज्जव्य** पु० राजभेदे “सिषक्तु न ऊर्ज्जव्यस्य पुष्टेः” ऋ० ५,४१,२०, ऊर्ज्जव्यस्य एतन्नामकस्य राज्ञः” भा०

**ऊर्ज्जस्** न० ऊर्ज्ज–असुन्। १उत्साहातिशयाधायके बले २अन्नरसभेदे च। ततोऽस्त्यर्थे विनि ऊर्ज्जस्विन्, मतुप् ऊ-

मिर्वयोर्णुते" भा० २,६,२७,। सनि ऊर्णुनूषति ते ऊर्णुनुविषति ते ऊर्णुनविषति ते।

अप+अपवृतावरणे "अपोहता अपोर्णुवन्तो अस्मुः" ऋ० १।१६०,६, "अपोर्णुवन्तः अपगतनिरवरणवन्तः" भा०।

अभि+आभिमुख्येन आच्छादने। "अभ्यूर्णोति यन्नग्नं भिषक्ति" ऋ० ८,७९,२, [ २,१४,३

आ— सम्यगाच्छादने। "इन्द्रं सोमैरोर्णुत जूर्वस्त्रैः" ऋ०

प्र— प्रच्छादने। "प्रोर्णुवन् शरवर्षेण तानपोर्णोन्निशाचरः"। "प्रोर्णुवन्तं दिशोवाणैः" भट्टिः।

वि—विगतावरणे प्रकाशने। "सवितर्व्यूर्णुषेऽतमोनौ" ऋ० ४, ५४,२, "व्यूर्णुषे प्रकाशयसि" भा०

ऊर्द्द ऊर्द्दधातुवत्।

ऊर्द्द त्रि० ऊर्द्द—अच्। क्रीड़ायुक्ते स्त्रियां गौ० ङीष्।

ऊर्द्दर न० ऊर्ज्जा बलेन दृणाति दृ—"ऊर्ज्जि दृणातेरलचौ पूर्व्वान्त्यलोपश्च" उणा० अलच् अच् वा ऊर्ज्जोऽन्त्यलोपश्च उज्ज्व०। १शूरे २राक्षसे च उज्ज्वल०। ऊर्जोर्क्षम् पूर्णम् ऊद् दृ-अच् पृषो० ऊद जरादेशः। धान्याधारभेदे कुसूले माधवः। "ऊर्द्दरं प्रवता यवे भेजम्" ऋ० २,१४,११। "ऊर्द्दरं कुसूलम्" भा०

ऊर्द्ध्व(र्द्ध) त्रि० उद्—हाक्—ड पृषो० ऊरादेशः। १उच्चे २उपरि ३उपरितने च "प्रबोधयत्यूर्द्ध्वमुखैर्मयूखैः" कुमा० "नीचोर्द्ध्वरेखाश्रयणेन यंत्रम्"। "व्यक्तोर्द्ध्वरेखाभ्रुकुटीर्वभ्रुः" "गङ्गेवोर्द्ध्वप्रवर्त्तिनी" रघुः। ४उत्पाटिते ऊर्द्ध्वकचः हेम०। ५अनुपविष्टे दण्डायमाने "आसीनः ऊर्द्ध्वः प्रह्वो वा नियमोयत्र नेदृशः" छन्दो०। "ऊर्द्ध्वः अनुपविष्टः" भा०त० रघु०। ६उच्छ्रिते "ऊर्द्ध्वग्रावाणः" ऋ० ३,५४,१२। ऊर्द्ध्वग्रावाणः सोमाभिषवार्थमुद्यतग्रावाणः भा०। वृधतेर्वा ड तेन वकारत्वमपि तत्रार्थे

ऊर्द्ध्व(र्द्ध)क पु० ऊर्द्ध्वः सन् कायति शब्दायते। वाद्यभेदे स च गोपुच्छवदाकारश्चिताङ्गपरिमितः मुखेऽष्टाङ्गुलः ऊर्द्ध्वं कृत्वा वाद्यते। "ऊर्द्ध्वकोगोपुच्छसमश्चिताङ्गोऽष्टाङ्गुलो मुखे। हस्तोर्द्ध्वं वाद्यते" शब्दार्थधोमेः। "हरीतक्याकृतियवमध्यस्तथाऽङ्गोपमाकृतिः। ऊर्द्ध्वकोदर्दुरव्यः स्यात् दुरजाभेदतोमताः" सङ्गीचि०।

ऊर्द्ध्व(र्द्ध)कच त्रि० ऊर्द्ध्वा उत्पाटिता कचा यस्य। विकचे हेम०। स्त्रियां स्वाङ्गत्वात् वा ङीष्।

ऊर्द्ध्व(र्द्ध)कण्ठ त्रि० ऊर्द्ध्वः कण्ठोऽस्य। १उन्नतकण्ठे स्त्रियां वा ङीष्। २महाशतावरीलतायां स्त्री ङीप् राजनि०।

ऊर्द्ध्व(र्द्ध)कर्म्मन् न० ऊर्द्ध्वं ऊर्द्ध्वदेशप्राप्त्यर्थं कर्म क्रिया। उत्क्षेपणक्रियायाम् "उदोऽनूर्द्ध्वकर्मणि" पा०। ऊर्द्ध्वचेष्टोर्द्ध्वक्रियादयोऽप्यत्र। बहु०स०। तत्कर्त्तरि त्रि० स्त्रियां वा टाप्।

ऊर्द्ध्वकाय पुंन०। ऊर्द्ध्वं कायस्य एकदे० त०। देहस्योर्द्ध्वभागे

ऊर्द्ध्वकेतु त्रि० ऊर्द्ध्वः उच्छ्रितः केतुर्यस्य यस्य वा। १उच्छ्रितध्वजे राजादौ तथाभूतपुर्य्यां स्त्री। २जनकवंश्ये नृपभेदे पु०। "ऊर्द्ध्वकेतुः सनद्वाजादजोऽथ पुरुजित्सुतः" भाग० ९,१३,१३।

ऊर्द्ध्वकेश पु० ऊर्द्ध्वः केश इव कुशाग्रं यस्य। "ऊर्द्ध्वकेशो भवेद् ब्रह्मा लम्बकेशस्तु विष्टरः" इत्युक्ते कुशमयब्राह्मणे। उच्छ्रितकेशयुक्ते त्रि० स्त्रियां वा ङीष्

ऊर्द्ध्वग त्रि० ऊर्द्ध्वं गच्छति गम—ड। १उपरिगते। "भुवा सहोच्छ्वासमसद्बदूर्द्ध्वगम्" कुमा० "महांशवोविशाकारामूर्द्ध्वगाम् दीप्ततेजसः" भा० व० २२अ०। ऊर्द्ध्वगतदेहस्थवायुकृते २रोगभेदे "ऊर्द्ध्वगे रक्तपित्ते च शीतमन्नः प्रशस्यते" सुश्रु० "तस्योर्द्ध्वगोऽनिलः कासं दौर्ब्बल्यं पाण्डुगात्रता" सुश्रु०। सर्वेषामुपरिगतत्वात् ३परमेश्वरे पु० "ऊर्द्ध्वगः सत्पथाचारः" विष्णुस०। "सर्वेषामुपरि तिष्ठन्नूर्द्ध्वगः" शा०भा०। ऊर्द्ध्वगतियायिनि ४धार्म्मिके त्रि० "धर्म्मेण गमनमूर्द्ध्वमधस्ताद्भवत्यधर्म्मेण" सां०का० धर्मणोर्द्ध्वगत्यभिधानात् धार्म्मिकस्य तथात्वम्। ऊर्द्ध्वगतादयोऽप्यत्र। ५ऊर्द्ध्वगतियुक्ते उत्थायिनि त्रि०।

ऊर्द्ध्वगति स्त्री० ऊर्द्ध्वं गतिः। १ऊर्द्ध्वगमने। यथा वह्न्यादेः यथोक्तं सुश्रु० "उष्णतीक्ष्णसूक्ष्मखरलघुविशदं रूपगुणबहुलमीषच्छ्वषं कटुकरसप्रायम् विशेषतश्चोर्द्ध्वगतिस्वभावमिति तैजसं समुज्ज्वलपचनदाहसंतापप्रकाशनप्रभावर्णकरमिति"। ऊर्द्ध्वज्वलनादयोऽप्यत्र। "अशनं देवनं वह्नेरूर्द्ध्वज्वलनमेव च। तिर्यग्गमनमप्यत्र गमनादेव लभ्यते" भाषा०। "प्रशिखमूर्द्ध्वज्वलनं हविर्भुजः" अतः ऊर्द्ध्वगतिश्च लाघवातिशयेन भवति सत्त्वस्य च लघुत्वादूर्द्ध्वगतिहेतुत्वमुक्तम्" सा०का० "सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकञ्चलञ्च रजः"। "तत्र कार्य्योद्गमने हेतुर्लाघवं गौरवप्रतिद्वन्द्वि, यतोऽग्नेरूर्द्ध्वज्वलनं भवति" सा०कौ०। २ऊर्द्ध्वलोके स्वर्गादौ गमने च तद्धेतुश्च धर्मः "धर्मेण गमनमूर्द्ध्वमिति" सा०का०उक्तेः "ऊर्द्ध्वं गच्छन्ति सत्त्वस्थाः" इति गीतोक्तेश्च सात्विकभावस्यापि तद्धेतुत्वम्। ऊर्द्ध्वम् देहात् ३उत्क्रमणे। ऊर्द्ध्वं गतिर्यस्य ४ऊर्द्ध्वगामिनि त्रि०।

पुण्ड्रं वर्त्तुलमिति परार्कौ मदनरत्ने च। पृथ्वीचन्द्रस्तु "पुण्ड्रं त्रिपुण्ड्रम् ऊर्द्ध्वञ्च तिलकं कुर्य्यात्र कुर्य्याद्दै त्रिपुण्ड्रकम्। निराशाः पितरो यान्ति दृष्ट्वा चैव त्रिपुण्ड्रकमिति" इत्यपरार्कोक्तेः। भोक्तृस्तिर्य्यक्त्वपो भवत्येव। "वर्जयेत्तिलकं भाले श्राद्धकाले च सर्वदा। ऊर्द्ध्वपुण्ड्रं त्रिपुण्ड्रं वा धारयेत्तु प्रयत्नतः" इति व्यासोक्तेरित्याह"। पृथ्वीचन्द्रोदये ब्राह्मे "मध्यदर्भेण हस्तेन यः कुर्य्यात्तिलकं बुध। आचम्य स विशुध्येत दर्भत्यागेन चैव हि"।

**ऊर्द्ध्वपृश्नि** पु० ऊर्द्ध्वाः पृश्नयो बिन्दवोऽस्य। पशुभेदे। अश्वमेधे तृतीययूपे बध्यमानीयमारुतपशुकीर्त्तने "पृश्निस्तिरश्चीनपृश्निरूर्द्ध्वपृश्निस्ते मारुताः" यजु०२४,४,

**ऊर्द्ध्वबर्हिस्** पु० ऊर्द्ध्वं प्रागग्र्यं बर्हिर्येषाम्। सोमपाख्ये पितृभेदे "स्वाहा पितृभ्य ऊर्द्ध्वबर्हिर्भ्यो धर्म्मपावभ्यः" यजु० २,१५, "ऊर्द्ध्वबर्हिर्भ्यः सोमपाभ्य." वेददी०

**ऊर्द्ध्वबाहु** पु० ऊर्द्ध्व उत्तोलितो बाहुः कर्म्म०। १ऊर्द्ध्वोत्तोलिते बाहौ "तद्यदेनमूर्द्ध्वबाहुरभिषिञ्चति" शत०५,४,१,१७,। बहु०। २प्रसारितबाहुके त्रि० ऊर्द्ध्वबाहुं प्राञ्चं प्रस्थाप्योर्द्ध्व ऊ पू ष इति" कात्या० १६,२,८, ऊर्द्ध्वबाहुः प्रसारितबाहुः" कर्क० "पञ्चमो रैवतो नाम मनुस्तामससोदरः" इत्युपक्रम्य "हिरण्यरेतावेदशिरा ऊर्द्ध्वबाहाद्यो द्विजाः" इति" भाग०८,५,२,श्लोकोक्ते ३रैवतमन्वन्तरीयसप्तर्षिभेदे ते च "वेदबाहुर्यदुध्रश्च मुनिर्वेदशिरास्तथा। हिरण्यरोमा पर्जन्य ऊर्द्ध्वबाहुश्च सोमजः। सत्यनेत्रस्तथाऽत्रेय एते सप्तर्षयोमताः" हरिवं० ७अ० विशेषत उक्ताः। ऊर्द्ध्वस्तूर्द्ध्वसृष्टो बाहुर्येन। ४तपस्यार्थमूर्द्ध्वोत्क्षिप्तबाहौ तपस्विभेदे।

**ऊर्द्ध्वबुध्न** पु० ऊर्द्ध्वं बुध्नं शिरोऽस्य। ऊर्द्ध्वशिरस्के चमसे "अर्वाग्बिलश्चमस ऊर्द्ध्वबुध्नस्तस्मिन् यशोनिहितं विश्वरूपम्। तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदानेति" "अर्वाग्बिलश्चमस ऊर्द्ध्वबुध्न इति तच्छिरः एष ह्यर्वाग्बिलश्चमस ऊर्द्ध्वबुध्नस्तस्मिन् यशोनिहितं विश्वरूपमिति प्राणा वै यशोनिहितं विश्वरूपं प्राणानेतदाह तस्यासत ऋषयः सप्त तीरे इति प्राणा वा ऋषयः प्राणानेतदाह" श०उ०। "देहस्य चमसरूपेण रूपकमिदम् अर्वाग्बिलश्चमस ऊर्द्ध्वबुध्नः इह तच्छिरः चमसाकारं. हि तत् कथम्? एष ह्यर्वाग्बिलः मुखस्य बिलरूपत्वात्, शिरसोबुध्नाकारत्वात् ऊर्द्ध्वबुध्नः तस्मिन् यशोनिहितं विश्वरूपमिति यथा सोमश्चमसे एवं तस्मिन् शिरसि विश्वरूपं नानारूपं निहितं भवति, किं पुनस्तद्यशः? प्राणा वै यशोविश्वरूपम्। प्राणाः श्रोत्रादयः सप्त ऋषयः तीरा (श्रोत्रे द्वे नासिके द्वे नेत्रे द्वे रसना चैकेति सप्त) तेषां परिस्पन्दात्मकशब्दादिज्ञानहेतुत्वात्"। ऋषिधातोर्गत्यर्थतया परिस्पन्दात्मकत्वसिद्धत्वम् ज्ञानहेतुत्वेन धीरत्वमिति बोध्यम्।

**ऊर्द्ध्वभाग** पु० ऊर्द्ध्वः उपरिस्थोभाग एकदेशः कर्म्म०। उपरितनदेशे "ताल्वादिषु सभागेषु ऊर्द्ध्वभागे निषण्णोऽजुदात्तः" सि०कौ०।

**ऊर्द्ध्वभाज्** त्रि०ऊर्द्ध्वं भजते भज—ण्वि। १उपरिभागस्थे २ऊर्द्ध्वदेशस्थे वह्निभेदे पु०। "ऊर्द्ध्वभागूर्द्ध्वभाङ् नाम कविः प्राणाश्रितस्तु यः" भा० व०२१८अ० अग्निनामतत्कर्म्मभेदकथने।

**ऊर्द्ध्वम्** अव्य० उद्-ह्वे अ उद ऊदेकरादेशश्च। ऊर्द्ध्वशब्दार्थे। "ऊर्द्ध्वं प्राणाह्युत्क्रामन्ति यूनःस्थविर आयति" "तिष्ठन्नूर्द्ध्वं रज० पिबेत्" मनुः "अधश्चोर्द्ध्वञ्च प्रसृतास्तस्य शाखाः" गीता।

**ऊर्द्ध्व(र्द्ध्वं)मन्थिन्** पु० ऊर्द्ध्वं ब्रह्मचर्य्यादुत्तराश्रमं गार्हस्थ्यादि मथ्नाति मन्थ—णिनि ईत०। नैष्ठिकब्रह्मचारिणि स हि ब्रह्मचर्य्योत्तरगार्हस्थ्याद्याश्रमं त्यजतीति तस्य तथात्वम्। "धर्म्मान् प्रदर्शयितुकामोवातरशनानां श्रमणानामृषीणामूर्द्ध्वमन्थिनां शुक्लया तन्वाऽवततार" भाग०५,३,२१,

**ऊर्द्ध्व(र्द्ध्वं)मान** न० ऊर्द्ध्वमारोप्य मीयते येन मा-करणे ल्युट्। पलकर्षादिमिते पाषाणादौ(बाटखारा)। तेन हि तुलादावारोपितेन स्वर्णादेर्गुरुत्वमुन्मीयते। भावे ल्युट्। २उच्चतापरिच्छेदकपरिमाणे च "ऊर्द्ध्वमान किलोन्मानं परिमाणं तु सर्वतः। आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः" व्या० का०। अयमर्थः। तुलादावारोपितस्य स्वर्णादेर्गुरुत्वमियत्तः तुलापरकोटिदेशे आरोपाद्युदुन्मीयते तदुन्मानम्। रज्ज्वादिना स्वगताभ्यामारोहपरिणाहाभ्यां ब्रीह्यादेः सर्वतोमानात् परिमाणम्। आयामोदैर्घ्यं वस्त्रादेर्जन्वादेश्च मितिर्हस्तदण्डादिना यत् मीयते तत् प्रमाणम्। सर्व्वतः उक्तप्रकारमानत्रयाद्वाह्या बहिर्भूता संख्या द्वित्वादिरित्यर्थः। "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" पा० विहितौ द्वयसज्दघ्नचौ प्रत्ययौ ऊर्द्ध्वमानादेव. "प्रथमश्च द्वितीयश्च ऊर्द्ध्वमाने मतौ मम" वार्त्तिकोक्तेः।

**ऊर्द्ध्वमुख** त्रि० ऊर्द्ध्वं मुखमस्य। १ऊर्द्ध्वगतप्रथमप्रसरे "प्र-

बोधयत्यूर्द्ध्वमुखैर्मयूखैः” कुमा० २ ऊर्द्ध्वस्थिताग्रभागे “अधोमुखैरूर्द्ध्वमुखैश्च पत्रिभिः” रघुः । ३उत्तानितवदने च स्वाङ्गत्वात् स्त्रियां ङीप् । ऊर्द्ध्वं मुखमस्य एक०त० । ४मुखस्योर्द्ध्वभागे न० “दन्तान्योर्द्ध्वमुखं कथेयन्दृचमम्” तन्त्रसा० । मातृकान्यासे मुखस्योर्द्ध्वभागे बिन्दोर्न्यस्यत्वादभेदोपचारात् बिन्दुवर्णेऽप्यस्य तदर्थ ।

ऊर्द्ध्वमूल त्रि० ऊर्द्ध्वं मूलमस्य । १ऊर्द्ध्वस्थितमूलभागे वृक्षादौ ऊर्द्ध्वः क्षरादुत्तमः पुरुषोत्तमो मूलमस्य । २संसारे च “ऊर्द्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्” गीता ।

ऊर्द्ध्वरेतस् पु० ऊर्द्ध्वमूर्द्ध्वगं नाधःपतत् रेतो यस्य । १महादेवे, २सनकादिमुनौ ३तपस्विभेदे, ४भीष्मे च । रेतो हि पुंस्त्रियोगेन प्रायः सर्वेषामधो गच्छति यस्य तु अधोगतं संरुणद्धि स ऊर्द्ध्वरेता इत्युच्यते । सनकादीनां निवृत्तिधर्मपरत्वेन नैष्ठिकब्रह्मचारितया तथात्वम् “अष्टाशीतिसहस्राणि मुनीनामूर्द्ध्वरेतसाम्” भा० स० ११अ० । “हुत्वाग्नौ चोर्द्ध्वमनयद्रेतोऽवभवाहनः । ऊर्द्ध्वरेताः समभवत् ततः प्रभृति चापि सः” भा०अनु०८४अ० । “ऊर्द्ध्वरेता ऊर्द्ध्वलिङ्ग उग्रशायी नभस्थलः” भा०अनु० १७० अ० शिवस्तुतौ । भीष्मस्य च कृतसमावर्त्तनस्यापि पितृकाम्यविवाहार्थं सत्यवतीसमीपे गार्हस्थ्यपरित्यागप्रतिज्ञानात् तथात्वम् तत्कथा “अद्यप्रभृति मे दाश ! ब्रह्मचर्यं भविष्यति” भा०आ० १००अ० इष्टा ।

ऊर्द्ध्वरोमन् पु० ऊर्द्ध्वानि रोमाण्यस्य । १ऊर्द्ध्वस्थतया विकटरोम्णि यमदूतादौ “स पापकर्मणस्तीन् द्रष्टा पुरुषान् भयदारुणान् । वक्रतुण्डानूर्द्ध्वरोम्ण आत्मानं नेतुमागतान्” भा० ६,१,२६ । २कुशद्वीपवर्त्तिपर्व्वतभेदे च । कुशद्वीपवर्णने “तेषां वर्षेषु सीमागिरयोनद्यश्चाभिज्ञाताः सप्तैव । चक्रश्चतुःशृङ्गः कपिलश्चित्रकूटो देवानीक ऊर्द्ध्वरोमा द्रविणः” इति भाग० ५,२०,११ । ऊर्द्ध्वस्थरोमयुक्ते त्रि० । ३रक्ताक्षमूर्द्ध्वरोमाणं काकजङ्घाक्षिनासिकम्” भा०अनु० ६८ अ० । स्त्रियां वा डाप् ।

ऊर्द्ध्वलिङ्ग पु० ऊर्द्ध्वमनूनं लिङ्गं चिह्नमस्य । १महादेवे ऊर्द्ध्वलिङ्गं विरूपाक्षमिति” सन्ध्याङ्गमन्त्रः “ऊर्द्ध्वरेता ऊर्द्ध्वलिङ्ग ऊर्द्ध्वशायी नभःस्थलः । त्रिजटश्चीरवासाश्च रुद्रः सेनापतिर्विभुः” भा० अनु०१७० ।

ऊर्द्ध्वलोक पु० कर्म० । स्वर्गे ।

ऊर्द्ध्ववात पु० ऊर्द्ध्वगतो वातः । सुश्रुतोक्ते स्वाभाविकगतिरोधेन ऊर्द्ध्वगते वायौ । स च मूत्रादिवेगधारणाद्भवति यथोक्तं सुश्रु० । “अधश्चोर्द्ध्वं च भावानां प्रवृत्तानां स्वभावतः । न वेगान् धारयेद्धीमान् वातादीनां जिजीविषुः” । अधिकृत्य उदावर्त्तशब्दे ११६२पृ० उक्तम् । “आटोपशूलौ परिवर्त्तनञ्च सङ्गः पुरीषस्य तथोर्द्ध्ववातम्” सुश्रु० २सप्तप्राकृतवात-गते परीवहे वायौ तस्य सर्ववायूनामुपरिस्थत्वात् तथात्वम् आवहशब्दे विवृतिः ।

ऊर्द्ध्ववृत त्रि० ऊर्द्ध्वगत्या वेष्टनेन वृतः । ऊर्द्ध्वमावर्त्तनेनावृते दक्षिणावर्त्तनेनावर्त्तिते सूत्रादौ “कार्पासमुपवीतं स्यात् विप्रस्योर्द्ध्ववृतं त्रिवृत्” मनुः । यथा च दक्षिणावर्त्तितस्यैव तथात्वम् तथोपवीतशब्दे उक्तम् ।

ऊर्द्ध्वबृहती स्त्री वैदिके छन्दोभेदे । “चतुर्थं बृहती” । इत्युपक्रम्य “अष्टिनोर्मध्ये द्वादशकोविष्टारबृहती त्रिजागतोर्द्ध्वबृहती” सर्व्वानु० ५अ० ।

ऊर्द्ध्वशायिन् त्रि० ऊर्द्ध्वः सन् शेते शी–णिनि । १उत्तानशायिबालके । स्त्रियां ङीप् । २महादेवे पु० । ऊर्द्ध्वलिङ्गशब्दे उदा० ।

ऊर्द्ध्वशोषम् अव्य० ऊर्द्ध्वः सन् शुष्यति ऊर्द्ध्व+शुष–णमुल् । ऊर्द्ध्वतया शुष्के कृषादिषु यथाविध्यनुप्रयोगनियमात् शुषधात्वनुप्रयोग एवास्य साधुत्वम् । “ऊर्द्ध्वशोषं शुष्यति वृक्षः ऊर्द्ध्वः सन् शुष्यतीत्यर्थः” सि०कौ० । “यद्योर्द्ध्वशोषं तृणवद्विशुष्यन्” भट्टिः ।

ऊर्द्ध्वसानु पु०न०कर्म० । १पर्वतादीनामुपरिस्थे सानौ । ऊर्द्ध्वं सानि षो–ञु । २उपर्य्युपर्य्युच्छ्रिते “अनिक्रदत् पतयदूर्द्ध्वसानुः” ऋ० १,१५२,५ । “ऊर्द्ध्वसानुरुपर्य्युपरिसमुच्छ्रयणः” भा० ।

ऊर्द्ध्वस्थिति स्त्री ऊर्द्ध्वं स्थितिर्यत्र यस्य वा । १अश्वपृष्ठभागे त्रिका० । २ऊर्द्ध्वस्थे त्रि० । कर्म० स्थितिः । ३ऊर्द्ध्वस्थाने स्त्री

ऊर्द्ध्वस्रोतस् पु० ऊर्द्ध्वम् ऊर्द्ध्वगतं नाधोगामि स्रोतः रेतसः प्रवाहोऽस्य । १ऊर्द्ध्वरेतसि योगिभेदे स हि उत्पतनवेगसत्त्वाधिक्येन रेतःप्रवाहमूर्द्ध्वमानयतीति तस्य तथात्वम् सत्त्वबाहुल्ये एव यथोर्द्ध्वस्रोतस्त्वं तथा सां०कौ० उक्तम् यथा “केचित् खलु सत्त्वबहुलाः सत्त्वनिकाया ऊर्द्ध्वस्रोतस इति” ऊर्द्ध्वं स्रोत आहारसञ्चारोऽस्य २वनस्पत्यादिषु “वनस्पत्योषधिलतात्वक्सारवीरुधो द्रुमाः । उत्स्रोतसस्तमःप्राया अन्तःस्पर्शा विशेषिणः” भाग० ३, १०,१९, तेषां तथात्वोक्तिः “ऊर्द्ध्वं स्रोत आहारसञ्चारो-येषाम्” श्रीधरः । मूले सिक्तजलादीनां मूलेनैवोर्द्ध्वमाकर्षणात् तेषामूर्द्ध्वस्रोतस्त्वम् ।

गृह्यते। अथ प्रतिनिधिः। चित्रकाभावतो दन्ती क्षारः शिखरिजोऽथवा। अभावे धन्वयासस्य प्रक्षेप्तव्या दुरालभा। शिखरी अपामार्गः। तगरस्याप्यभावे तु कुष्ठं दद्याद्भिषग्वरः। मूर्वाभावे त्वचो ग्राह्या जिङ्गिनीप्रभवा बुधैः। अहिंस्राया अभावे तु मानकन्दः प्रकीर्त्तितः। लक्ष्मणाया अभावे तु नीलकण्ठशिखा मता। नीलकण्ठशिखा मयूरशिखा। बकुलाभावतो देयं कह्लारोत्पलपङ्कजम्। नीलोत्पलस्याभावे तु कुमुदं देयमिष्यते। जातिपुष्पं न यत्रास्ति लवङ्गं तत्र दीयते। अर्कपर्णादि पयसो ह्यभावे तद्रसो मतः। पौष्कराभावतः कुष्ठं तथा लाङ्गल्यभावतः। स्थौणेयकस्याभावे तु भिषग्भिर्दीयतेऽ मद्रे। चविकागजपिप्पल्यौ पिप्पलीमूलवत् स्मृतौ। अभावे सोमराज्यास्तु प्रपुन्नाटफलं मतम्। यदि न स्याद्दारुनिशा तदा देया निशा बुधैः। सोमराजी शाकुची। प्रपुन्नाटफलं चक्रमर्द्दफलम्। दार्व्वीनिशा दारुहरिद्रा निशा हरिद्रा। रसाञ्जनस्याभावे तु सम्यग्दार्व्वी प्रयुज्यते सौराष्ट्र्यभावतो देया स्फटिका तद्गुणा जनैः। सौराष्ट्री (सोरटीमाटी) इति लोके। स्फटिका (फटिकारी) इति लोके। तालीशपत्रकाभावे स्वर्णतालो प्रशस्यते। भार्ग्यभावे तु तालीसं कण्टकारी जटाऽथ वा। रुचकाभावतो दद्याल्लवणं पांशुपूर्व्वकम्। अभावे मधुयष्ट्यास्तु धातकीञ्च प्रयोजयेत्। रुचकं (सोञ्चार) इति लोके पांशुलवणं (खारी) अथ वा (रेह) इति लोके। अम्लवेतसकाभावे चुक्रं दातव्यमिष्यते। द्राक्षा यदि न लभ्येत प्रदेयं काश्मरीफलम्। तयोरभावे कुसुमं बन्धूकस्य मतं बुधैः। लवङ्गकुसुमं देयं नखस्याभावतः पुनः। कस्तूर्य्यभावे कक्कोलं चोपपाद्यं विदुर्बुधाः। कक्कोलस्याप्यभावे तु जातीपुष्पं प्रदीयते। सुगन्धिमुस्तकं देयं कर्पूराभावतो बुधैः। कर्पूराभावतो देयं ग्रन्थिपर्णं विशेषतः। कुङ्कुमाभावतो दद्यात् कुसुम्भकुसुमं नवम्। श्रीखण्डचन्दनाभावे कर्पूरं देयमिष्यते। अभावे त्वेतयोर्वैद्यः प्रक्षिपेत् रक्तचन्दनम्। रक्तचन्दनकाभावे नवोशीरं विदुर्बुधाः। मुस्ता चातिविषाभावे शिग्राभावे शिवा मता। अभावे नागपुष्पस्य पद्मकेशरमिष्यते। मेदा जीवककाकोली ऋद्धिद्वन्द्वेऽपि चासति। वरी विदार्य्यश्वगन्धा वाराही च क्रमात् स्मृताः। वरी शतावरी। वाराह्याश्च तथाभावे चर्म्मकारालुको मतः। वाराहीकन्दसंज्ञस्तु पश्चिमे गृष्टिसंज्ञकः। वाराहीकन्दएवान्यश्चर्म्मकारालुको मतः। अमृतस्याभावे देयो वराह इव भौमवान्। भल्लातकासम्भावे तु रक्तचन्दनमिष्यते। भल्लाताभावतश्चित्रं नलदं चोरभावतः। सुवर्णाभावतः स्वर्णमाक्षिकं प्रक्षिपेत् बुधः। श्वेतन्तु माक्षिकं ज्ञेयं बुधैः रजतवत् ध्रुवम्। माक्षिकस्याप्यभावे तु प्रदद्यात् स्वर्णगैरिकम्। सुवर्णमथ वा रौप्यं मृतं यत्र न लभ्यते। तत्र कान्तेन कर्म्माणि भिषक् कुर्य्याद्विचक्षणः। कान्ताभावे तीक्ष्णलोहं योजयेद्वैद्यसत्तमः। अभावे मौक्तिकस्यापि मुक्ताशुक्तिं प्रयोजयेत्। मधु यत्र न लभ्येत तत्र जीर्णगुड़ो मतः। मत्स्याण्ड्यभावतो दद्युर्भिषजः सितशर्क्कराम्। असम्भवे सितायास्तु बुधैः खण्डं प्रयुज्यते। क्षाराभावे रसो मौद्गो मासुरो वा प्रदीयते। अत्र प्रोक्तानि वस्तूनि यानि तेषु च तेषु च। योऽप्येकतराभावे परं वैद्येन जानता। रसवीर्य्यविपाकाद्यैः समं द्रव्यं विचिन्त्य च। युञ्ज्याद्द्विविधमन्यत्तु द्रव्याणान्तु रसादिवित्। योगे यदप्रधानं स्यात्तस्य प्रतिनिधिर्मतः। यत्तु प्रधानं तस्यापि सदृशं नैव गृह्यते। व्याधेरयुक्तं यत् द्रव्यं गुणोक्तमपि तत् त्यजेत्। अनुक्तमपि युक्तं यत् योजयेत् तद्रसादिवित्। द्रव्यगतपञ्चपदार्थकर्म्माण्याह। द्रव्ये रसो गुणो वीर्य्यविपाकः शक्तिरेव च। पदार्थाः पञ्च तिष्ठन्ति स्वं स्वं कुर्व्वन्ति कर्म्म च"।

"वीर्य्यवन्त्यौषधिर्नीव विकारे सान्निपातिके" कुमा०। "द्वेष्योऽपि सम्मतः शिष्टस्तस्यार्त्तस्य यथौषधम्" रघुः। "' स्य विषमौषधम्" उद्भटः "भवौषधात् श्रोत्रमनोऽभिरामात्" भाग० १,१, "औषधं जाह्नवीतोयं वैद्यो नारायणः स्वयम्" पुरा०। संसाररूपदुःखदायकरोगनिवारके ४परमेश्वरे च "औषधं जगतां सेतुः" विष्णु०सं०।

**औषधि** स्त्री आ+ओषधि—प्रा० स०। सम्यगोषधौ। "विरमन्ति न ज्वलितुमौषधयः" किरा० वा ङीप्। औषधी।

**औषर** न० उषरे भवः अण्। पांशुलवणे राजनि०।

**औषरक** न० औषरमिव कन्। (खारी) लवणभेदे राजनि०

**औषस** न० उषसि भवः सन्धिवेलेत्यादिना योगविभागात् अण्। १उषसिभवे। वस्तुतः भवार्थे "कालाट्ठञ्" पा० उक्तेः ठञ् स्यात् तेन उषस इदम् इत्यण् इत्युचितम्। २उषःसम्बन्धिनि। "अनुदितौषसरागेति "औषसातपभयादपलीनम्" इति च" किरा० स्त्रियां ङीप्। "या मोषाः प्रत्यौषसी सा" शत० ब्रा० ६,१,२,८, उषस्+ वा० यत् स्वार्थे अण्। औषस्य उषोभवे त्रि०।

**औष(स्त)स्त्य** त्रि॰ उषस्तेरिदम् अण् ष्यञ् वा । उषस्तिचरितात्मके छा॰ उ॰ ब्राह्मणकाण्डभेदे । तत्र "उषस्तिर्ह चाक्रायणः" इत्यादि तत्रत्यं ब्राह्मण "औषस्ते(स्त्ये) काण्डेऽविदुषामपि आर्त्विज्यदर्शनात्" छा॰ उ॰ भा॰ ।

**औषसिक** त्रि॰ उषसा चरति ठक् टिलोपः । १उषसाचारिणि । "उषसि भवः कालाट्ठञ्" पा॰ ठञ् । २उषसिभवे च ।

**औषिक** त्रि॰ उषा उषसि भवः ठञ् । उषाभवे स्त्रियां ङीप् ।

**औष्ट्र** न॰ उष्ट्रस्येदम् अण् । उष्ट्रदुग्धादौ । "औष्ट्रं दुग्धं लघु स्वादु लवणं दीपनं तथा । क्रिमिकुष्ठकफानाहशोथोदरहरं परम्" भावप्र॰ । "अनिर्दशायाः गोः क्षीरमौष्ट्रमैकशफं तथेति" मनुः उष्ट्रशब्दे विवृतिः ।

**औष्ट्रक** न॰ उष्ट्राणां समूहः गोत्रोक्षोष्ट्रेत्यादिना वुञ् । १उष्ट्रसमूहे । उष्ट्रस्य विकारोऽवयवो वा वुञ् । २उष्ट्रविकारे ३तदवयवे च त्रि॰ ।

**औष्ट्ररथ** न॰ उष्ट्ररथस्येदम् "पत्रपूर्वादञ्" पा॰ रथादित्यनुवृत्तौ अञ् । उष्ट्रवाह्यरथसम्बन्धिनि ।

**औष्ट्रायण** पुंस्त्री उष्ट्रस्यापत्यम् बा॰ फक् । उष्ट्रापत्ये ततः चतुरर्थ्याम् अरीहणादि॰ वुञ् । औष्ट्रायणक तत्सन्निकृष्टदेशादौ त्रि॰ ।

**औष्ट्रिक** त्रि॰ उष्ट्रे भवः ठक् । उष्ट्रभवे दध्यादौ "विपाके कटु सक्षारं गुरु भेद्यौष्ट्रिकं दधि" सुश्रुतः ।

**औष्ठ** त्रि॰ ओष्ठ ओष्ठाकारोऽस्त्यस्य प्रज्ञा॰ अण् । ओष्ठाकारकावयवयुक्ते आश्विनपात्रे । "औष्ठमाश्विनम्" कात्या॰ ९,२,७, "ओष्ठावयवयुक्तमाश्विनपात्रम्" कर्कः "तद्द्विदेवत्यमौष्ठमाश्विनपात्रम्" शत॰ ब्रा॰ ४,१,५,१९ ।

**औष्ठ्य** त्रि॰ ओष्ठे भवः यत् स्वार्थे अण् । ओष्ठभवे उवर्णे पवर्गे च "ओष्ठ्यावुपू" इति शिक्षोक्तेः तयोस्तथात्वम्

**औष्णिज** न॰ उष्णिज्+प्रज्ञा॰ स्वार्थेऽण् । उष्णिगर्थे ।

**औष्णिह** त्रि॰ उष्णिहि भवः उत्सा॰ अञ् तस्येदमण् वा । १उष्णिक्छन्दोभवे २तत्सम्बन्धिनि च । उष्णिहा स्तुतः अण् । ३उष्णिक्छन्दसा स्तुते सवितरि "सवित्र उष्णिहाय" यजु॰ १९,६ ।

**औष्णीक** त्रि॰ उष्णीषे शोभते अण् पृषो॰ । १उष्णीषधारिणि २तद्धारिजनपदविशेषे ३तद्भूपे च "औष्णीकानन्तवासांश्च योधकान् पुरुषादकान्" भा॰ स॰ ५० ।

**औष्ण्य** न॰ उष्णस्य भावः गुणवचनत्वात् ष्यञ् । उष्णस्पर्शे स च "उष्णस्पर्शस्तु तेजसः" इत्युक्तेः तेजस एव स्वाभाविकधर्मः तत्संयोगादितरेषामौपाधिकः । सुश्रुते तत्कार्य्यपित्तस्य धर्म इत्युक्तं यथा "औष्ण्यतैक्ष्ण्यरौक्ष्यलाघववैशद्यगुणलक्षणं पित्तं तस्य समानयोनिः कटुकोरसः सोऽस्यौष्ण्यादौष्ण्यं वर्द्धयति" सुश्रु॰ ।

**औष्म्य** न॰ ऊष्मणोभावः ऊष्मैव वा ष्यञ् । उष्णस्पर्शे । "पूर्वराजवियोगौष्म्यं कृत्स्नस्य जगतोहृतम्" रघुः । उष्णस्पर्शो यद्यपि तेजोयोगात् भवति तथापि देहस्य तथा स्पर्शः सम्प्रदायाकृष्टसूक्ष्मदेहसंयोगादेव तथोक्तं शा॰ सूत्रभाष्ययोः "अस्यैव चोपपत्तेरेष ऊष्मा" सू॰ "अस्यैव च सूक्ष्मशरीरस्योष्मायमेतस्मिन् जीवच्छरीरे संस्पर्शेनोष्णिमानं विजानाति तथाहि मृतावस्थायामवस्थितेऽपि देहे विद्यमानेष्वपि च रूपादिषु देहगुणेषु नोष्मोपलभ्यते जीवदवस्थायामेव तूपलभ्यते इत्यत उपपद्यते प्रसिद्धशरीरव्यतिरिक्तव्यपाश्रय एवैष ऊष्मेति तथा च श्रुतिः "उष्ण एव जीविष्यञ्छीतो मरिष्यन्निति" भा॰ । तदुपाधिकत्वात् जीवस्यापि ऊष्मत्वं व्यपदिश्यते इत्युक्तं प्राक् ।

इति वाचस्पत्ये औकारादिशब्दार्थसङ्कलनम् ।

इति श्रीतारानाथ-तर्कवाचस्पति-भट्टाचार्य्य-विरचिते वाचस्पत्येऽभिधाने
स्वरवर्णादिशब्दार्थसङ्कलनं समाप्तम् ।

ओं तत्सत्